

# अष्टाध्यायीशुक्लयजुर्वेदप्रातिशाख्ययोः मत-विमर्शः

डा० विजयपालः

प्रकाशक:—
डा० विजयपाल
आचार्य, पाणिनिमहाविद्यालय
बहालगढ़ (सोनीपत-हरयाणा)

वितरक:—
रामलाल कपूर ट्रस्ट
बहालगढ़ (सोनीपत-हरयाणा)
पिन १३१०२१

प्रथम संस्करण ५००
ज्येष्ठ, सं० २०४०
मई, सन् १९८३
मूल्यम्—५०-००

मुद्रक:—
शान्तिस्वरूप कपूर
रामलाल कपूर ट्रस्ट प्रेस
बहालगढ़ (सोनीपत-हरयाणा)




# आमुखम्

सहर्षमिदं विज्ञाप्यते यद् रामलाल कपूर निक्षेप (ट्रस्ट) संस्थान्तर्गतस्य पाणिनि महाविद्यालयस्य डा० विजयपालविद्यावरिधेः **अष्टाध्यायीशुक्लयजुर्वेदप्रातिशाख्ययोर्मतविमर्शनामा** शोधप्रवन्धो बहोः कालानन्तरं प्राकाश्यं नीयते। अस्मिन् प्रबन्धे पण्डित विजयपालाचार्येण उभौ ग्रन्थौ सम्यगालोच्य महता प्रयत्नेन यानि रहस्यानि प्रकटीकृतानि तत्र केषाञ्चित् शोधकर्तॄणां विदुषां वैमत्यं सम्भवति, तथापीदं निश्चयेन शक्यते वक्तुं यदयं निवन्ध उभयोः ग्रन्थयोरध्ययने प्रवृत्तानां विदुषां छात्राणां च कृते महोपकारं विधास्यति ।

अस्य शोधप्रबन्धस्य प्रकाशनकार्याय

श्री देवेन्द्र कुमार कपूर महोदयेन १०००-०० रूप्यकाणि

श्री महेन्द्रकुमार कपूर महोदयेन ५०००-०० रूप्यकाणि

प्रत्तानि। अनेन साहाय्येनास्य शोधग्रन्थस्य प्रकाशने महत् सौविध्यं संजातम्। तदर्थमुभावपि महानुभावौ धन्यवादार्हौ स्तः।

रामलाल कपूर ट्रस्ट
बहालगढ़ (सोनीपत)

विदुषां वशंवदः—
युधिष्ठिरो मीमांसकः

# शुभाशंसनम्

सम्पूर्णानन्द-संस्कृतविश्वविद्यालयीयं विद्यावारिधिनामानमुपाधिमधिकर्तुम् **अष्टाध्यायीशुक्लयजुर्वेदप्रातिशाख्ययोर्मतविमर्शः** इति विषयमादाय समाहितमनसा स्वोपज्ञतया महता परिश्रमेणा च यथाविधि आयुष्मता श्रीविजयपालमहोदयेन स्पृहणीयसंस्कृतभाषया शोधप्रबन्धो विरचितः। उद्दिष्ट उपाधिश्च लब्धः।

साधुशब्दज्ञानपुरस्सरं वेदानां रक्षादिकं व्याकरणशास्त्रस्य प्रयोजनमुक्तं भगवता भाष्यकृता, प्रातिशाख्यं तु तस्मिन् कार्ये नियतप्रहरिस्वरूपमेव, अनयोर्द्वयोः शास्त्रयोः स्वरूपं, शैली, उच्चारणादिवैशिष्टयम्, प्रक्रियाविशेषः, समीक्षा, तुलनादिकं चात्र ग्रन्थे सप्रमाणं साधु विवेचितमस्ति।

ईदृशग्रन्थस्य प्रकाशनेन भारतीयसंस्कृतेः संस्कृतवाङ्मयस्य, तत्प्राणमूलवेदस्य च साधुतरः प्रचारः प्रसारश्च सम्भाव्यते। प्रकृतग्रन्थस्य विधात्रेऽस्मै डा० श्रीविजयपालमहोदयाय भगवान् विश्वनाथो दीर्घायुष्यं नैरुज्यं सात्त्विकं सामर्थ्यं च प्रदद्यादिति शुभाशीर्वचोभिरेनं संवर्धयति—

तदीयः—
रामप्रसादत्रिपाठी
व्याकरणविभागाध्यक्षचरः,
सं० सं० वि० विद्यालये वाराणस्याम्।
फाल्गुनेऽसिते १४ रवौ २०३९ वै०।



# उपोद्घातः

भारतीयपारम्परिकदर्शनानुसारं सर्वज्ञानमया नित्या वेदाः सर्गादौ प्रादुर्बभूवुः, यतः लौकिका व्यवहाराः प्रावर्त्तन्त । तथा च व्याजहार भगवान् व्यासः—

**अनादिनिधना नित्या वाग् उत्सृष्टा स्वयम्भुवा ।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥[1]**

तत्र सर्गारम्भे विमलमतय ऋषयः साक्षात्कृतधर्मत्वाद् वेदार्थान् बुबुधिरे, बोधयाञ्चक्रुश्चाधिकारिणः शिष्यान् । कालान्तरे त्वल्पशक्तित्वाद् मानवा उपदेशमात्रेण वेदार्थान् बोद्धुम् असमर्थाः समजायन्त । एतदभिसमीक्ष्य परमकारुणिकैर्ऋषिभिर्वेदाङ्गानि विरचितानि, येषां साहाय्येन जना वेदान् अधिगन्तुं समर्था बभूवुः[2] । आधुनिकपाश्चात्त्यदृष्टिम् अङ्गीकुर्वाणा विद्वांसस्तु पारम्परिकमतम् उपेक्ष्य, स्वकीयानि मतान्युपस्थापयन्ति । तत्र केचिद् लौकिक-वैदिकभाषाभेदप्रबोधाय, अपरे आर्यानार्यभाषासम्मिश्रणविवेकाय वेदाङ्ग-प्रवृत्तिरित्यातिष्ठन्ते[3] ।

तेष्वेतेषु वेदाङ्गेषु व्याकरणं प्रधानम्[4], पदपदार्थस्य तदायत्तत्वात् । व्याकरणेष्वपि पाणिनीयाष्टाध्यायी स्वकीयम् अनेकविधवैशिष्ट्यम् आदधाना प्राधान्यं भजते । अष्टाध्याय्या महत्त्वं वार्त्तिक-भाष्य-वृत्तिकारैस्तु सुप्रदर्शितमेव, अन्यैः पौरस्त्यपाश्चात्त्य-विद्वद्भिरपि सुतराम् अङ्गीकृतम् ।[5] प्रातिशाख्यान्यपि वेदाङ्गेष्वन्तर्भाव्यन्ते । तत्र केचित् तेषां शिक्षावेदाङ्गत्वम्, अपरे व्याकरणवेदाङ्गत्वम्, अन्ये चोभयात्मकत्वं वर्णयन्ति[6] । अत एव प्रातिशाख्यानि क्वचिद् वैदिकव्याकरणनाम्नापि स्मर्यन्ते । वेदानां प्रतिचरणं प्रातिशाख्यानि

---

१. महाभारत शान्तिपर्व २३२।२४ ॥ २. निरु० १।२० ॥

३. विश्वबन्धुशास्त्री : अथर्ववेदप्रातिशाख्यभूमिका, पृ० १९, २०; म० मो० घोष : पाणिनीयशिक्षाभूमिका, पृ० २० ।

४. महा० पस्पशा०; वा० प० १।११ ॥

५. सं० व्या० इ०, प्रथमभाग, पृ० १९८–२०० ॥

६. वा० प्रा० १।१६९ उ० भा०; तै० प्रा० १।२१ वैदिकाभरणे ।

भिद्यन्ते । तत्र शुक्लयजुर्वेदस्य वाजसनेयिचरणस्य कात्यायनप्रोक्तं प्रातिशाख्यम् उपलभ्यते ।

यद्यपि प्रातिशाख्यानाम् अपि सामान्यतो व्याकरणशब्देन व्यपदेशः क्रियते, तथापि द्वयोः शास्त्रयोर्मौलिको भेदः । तत्र व्याकरणं नाम प्रकृतिप्रत्ययादिविश्लेषणपूर्वकं शब्दसाधुत्वप्रतिपादनपरं शास्त्रम्, प्रातिशाख्यं पुनश्चरणविशेषस्य स्वर-सन्धि-पदपाठादि-नियमप्रतिपादनपरम् । व्याकरणेन क्लिष्टप्रक्रियाम् आश्रित्य यथा शब्दः स्वरूपतोऽवबोध्यते, न तथा प्रातिशाख्येन । प्रातिशाख्यानां प्रवक्तृवर्गः सुभटानां शाब्दिकानां समुदाय आसीद्-इत्यसन्दिग्धम्[1], परन्त्वेतेषाम् अध्येतृवर्गः साधारणव्याकरणज्ञानवतां वैदिक इत्याख्याम् आवहतां संहिता-पाठ-रक्षण-मात्रोत्साहवतां निकरो बभूव । एवं च व्याकरणप्रातिशाख्ययोः स्वर-सन्ध्यादिविषयसाम्येऽपि प्रयोजनभेदात् प्रतिपादनपद्धत्यादि-भेदोऽपि स्वाभाविक एव ।

अस्मिंस्तु शोधप्रबन्धे पाणिनीयाष्टाध्यायी-कात्यायनीय-शुक्लयजुर्वेदप्रातिशाख्ययोर्मतविमर्शः प्रस्तूयते । अयं विमर्शस्तावद् इमानि प्रयोजनान्यभिलक्ष्य व्यधायि—

(१ शास्त्रद्वयस्य स्वरूप-शैली-प्रदर्शनम् ।

(२) आचार्याभ्यां प्रयुक्तस्य प्रक्रियाविशेषस्याध्ययनम् ।

(३) उच्चारणादि-वैशिष्ट्यप्रदर्शनं तदौचित्यानौचित्यविचारश्च ।

(४) स्वरप्रतिपादनरीतेः, तद्विशेषस्य चाध्ययनम् ।

(५) पाणिनि-कात्यायनयोः पारस्परिकाभिसम्बन्धस्योद्घाटनम्, वार्त्तिककार-प्रातिशाख्यकारयोः कात्यायनयोः सम्बन्धप्रतिपादनं च ।

डा० मङ्गलदेवशास्त्रिमहाभागाः स्वानूदितर्क्प्रातिशाख्यग्रन्थस्यान्ते परिशिष्टरूपेण ऋक्प्रातिशाख्यसूत्राणां पाणिनीयाष्टाध्यायीसूत्रैः सह तुलनां समुपातिष्ठिपन् । तया खलु दिङ्मात्रम् एव निर्दिश्यते । अष्टाध्यायी-शुक्लयजुर्वेदप्रातिशाख्ययोस्तादृशः प्रयासो नाद्य यावत् केनचिदप्यकारि । यत्तु वेबर-गोल्डस्टूकरादिभिः पाणिनीयाष्टक-कात्यायनीयप्रातिशाख्ययोः समानार्थप्रतिपादकानां सर्वथा प्रायेण वा

---

१. क्रिटिकल स्टडीज़ इन दि फोनेटिक आब्ज़र्वेशन्स आफ इण्डियन ग्रामेरियन्स पृ० १५ ।।

समानानुपूर्वीकाणां सूत्राणां प्रदर्शनं कृतम्, तदपि प्रयोजनविशेषम् उद्दिश्य विहितत्वात् कतिपयान् एव योगान् विषयीकरोति । वेंकटरामशर्मणः कात्यायनीयप्रातिशाख्यस्य समालोचनात्मकम् अध्ययनम् अपि प्राधान्येन शुक्लयजुर्वेदप्रातिशाख्यस्य विषयवस्तुप्रदर्शनपरकम् एव । एवं च न केनापि विपश्चिता पाणिनीयाष्टाध्यायी-शुक्लयजुर्वेद-प्रातिशाख्ययोर्मते सर्वात्मना विमृष्टे । प्रथमोऽयं प्रयासोऽस्मिन् शोधप्रबन्धे विधीयते । अत्र हि शास्त्रद्वयस्य समीक्षात्मकं तुलनात्मकं चाध्ययनं प्रस्तूयते ।

प्रकृतशोधप्रबन्धः सप्तस्वध्यायेषु विभज्यते । तत्र प्रथमाध्याये तावत् प्रातिशाख्य-व्याकरणयोरुद्भवः प्राचीनार्वाचीनदृष्ट्यानुसन्धीयते । व्याकरणप्रातिशाख्ययोः स्वरूपं प्रदर्श्य, तयोर्भेदोऽत्र निरूप्यते । विषयप्रवेशदृष्ट्या पाणिनीयाष्टाध्याय्याः कात्यायनीयशुक्लयजुर्वेद-प्रातिशाख्यस्य (वाजसनेयिप्रातिशाख्यस्य) च स्वरूपप्रदर्शनार्थं ग्रन्थ-परिमाणं तदीयप्रकरणानि चोपस्थाप्यन्ते । तत्र पाणिनीयाष्टाध्याय्याः काशिकास्थसूत्रपाठे मूलतो विंशतिसूत्राण्यधिकानीति माधवकृष्णः । सूत्रपाठे पञ्चाशीत्युत्तरशतं पाठान्तराण्यपि समुपलभ्यन्ते । शुक्लयजुर्वेदप्रातिशाख्यस्यापि काशी-कलकत्ता-मद्रास-वाराणसीसंस्करणेषु सूत्र-संख्या विभिन्ना उपलभ्यन्ते । सूत्रसंख्यासमन्वयोऽत्र विधीयते । अष्टाध्याय्याः काशिकास्थसूत्रपाठं वाजसनेयिप्रातिशाख्यस्य च वाराणसी-(इन्दु)संस्करणस्थसूत्रपाठम् आश्रित्येह तुलना-विमर्शौ विधीयेते ।

प्रथमाध्यायस्य प्रमुखो भागः शैलीपरामर्शेन व्याप्तः । तत्राल्पाक्षरादिवैशिष्ट्योपेता सूत्रात्मकता शास्त्रद्वयेऽपि समाना । संज्ञा-परिभाषा-विधि-निषेध- नियम- अतिदेश-अधिकार-निपातनेत्यष्टविधसूत्राण्युभयत्रोपलभ्यन्त इति सनिदर्शनं प्रदर्शितम् । प्रत्याहारानुबन्धप्रयोग-शैली यद्यपि पाणिनीयम् एव वैशिष्ट्यम्, तथापि वाजसनेयिप्रातिशाख्ये तिङ्ङादिप्रयोगाणाम् उपलम्भात् तत्र पाणिनीयप्रभावः सन्दिह्यते । शास्त्रद्वयेऽप्यारम्भे संज्ञाः परिभाषाश्च विन्यस्यन्ते, वाजसनेयिप्रातिशाख्ये खल्वाख्या इत्यधिकारोऽप्येतदर्थं क्रियते । गणपाठपद्धतिः पाणिनीयाष्टक एवोपलभ्यते, वाजसनेयिप्रातिशाख्य एकस्मिन् सूत्र एव गणनिर्देशो दृश्यते । निपातनरीतिरपि द्वयोः शास्त्रयोरुपलभ्यते । अधिकारानुवृत्ति-तदर्थोपायाः शास्त्रद्वये प्रायेण समानाः । सूत्रन्यासक्रमे

उभयत्र साम्यम्, तस्मात् परबलवत्त्वं, पूर्वत्रासिद्धत्वं च समानरूपेण प्रक्रियेते। आचार्यनिर्देश उभयत्रोपलभ्यते, निर्देशप्रकारस्तु स्वल्पं भिद्यते। सूत्रेषु कार्यि-निमित्त-कार्याणीति क्रम उभयत्र प्रायिकः। अर्थनिर्देशसौत्रनिर्देशवर्णधातुनिर्देशाः, उत्सर्गापवादौ, लक्षणप्रपञ्चौ,: समासव्यासौ, पद्यात्मकता, इतिप्रयोग इत्यादिविषयाः प्रतिपादन-पद्धतिप्रसङ्गे निरूपिताः।

द्वितीयेऽध्याये वर्णसमाम्नायो विमृष्टः। पाणिनीयाष्टके ग्रन्थारम्भे वर्णाः समाम्नाताः। तत्र विप्रतिपत्तिः—पाणिनिप्रोक्तोऽयं वर्ण-समाम्नाय इत्येके, महेश्वरप्रोक्त इत्यन्ये। तत्र पाणिनीयप्रोक्तत्वेऽनेको हेतुरुपन्यस्तः। वाजसनेयिप्रातिशाख्यस्यान्तिमेऽध्याये वर्णाः समा-म्नाताः। तत्रापि तादृश्येव विप्रतिपत्तिः, पुनरपि तदध्यायं प्रातिशाख्य-कारकात्यायनीयम् अभिकल्प्य विमृश्यते। वर्णसंख्या पाणिनीयाष्टके साक्षान्न निर्दिश्यते, वाजसनेयिप्रातिशाख्ये तु विभागपुरःसराः पञ्च-षष्टिर्वर्णा उपदिश्यन्ते। शिक्षायां त्रिषष्टिः चतुःषष्टिर्वा संख्या निर्दिश्यते। पाणिनिना वर्णानां क्रमे महती सूक्ष्मेक्षिका प्रदर्शिता। क्रमविशेषस्वीकारे कारणं प्रत्याहारविशेषाः। प्रातिशाख्ये तु तस्याः समस्याया अभावात् स्वाभाविक एव क्रम आश्रीयते। वर्णोच्चारणम् अत्र विमर्शे विचार्यते, तत्र च पाणिनीयशिक्षातोऽपि साहाय्यं गृह्यते। स्वरभक्तिः, अभिनिधानम्, स्फोटनम् चेत्येते उच्चारणविशेषा अत्र प्रसङ्गतो निरूप्यन्ते। वाजसनेयिप्रातिशाख्य उपलभ्यमानत्वाद् अक्षर-विभागोऽप्यत्र समासतो विमृश्यते।

तृतीयेऽध्याये संज्ञाः परिभाषाश्च विमृष्टाः। तत्र पाणिनीयाष्टा-ध्यायी-शुक्लयजुर्वेदप्रातिशाख्ययोः प्रयुज्यमानाः संज्ञाः षोढा विभज्य प्रदर्शिताः। तथा हि—सङ्ग्रहसंज्ञाः प्रगृह्यादयः, प्रत्ययसंज्ञाः सर्वनाम-स्थानादयः, वर्णसंज्ञा वृद्ध्यादयः, शब्दसंज्ञाः पदादयः, अर्थसंज्ञा लोपादयः, अतिकृत्रिमसंज्ञा घुसिमादयः। शुक्लयजुर्वेदप्रातिशाख्यस्य स्वल्पविषय-त्वात् तदीयसंज्ञा आधृत्य पाणिनीयाभिः संज्ञाभिः सह तासां तुलना विधीयते। तत्र तस्यास्तस्याः संज्ञायाः पूर्वाचार्यकृतत्वाकृतत्वम् अपि प्रदर्श्यते। एवं पञ्चाशत्संज्ञा विविक्तास्तत एकादशसंज्ञास्ताः वि-मृश्यन्ते याः पाणिनीयतन्त्रे परिभाष्यन्ते, वाजसनेयिप्रातिशाख्ये पुनः सिद्धवत् प्रयुज्यन्ते—तद्यथा तिङ्कृदादयः। परिभाषासूत्राण्यपि वाज-सनेयिप्रातिशाख्यक्रमेणोपस्थाप्यन्ते। तत्समानवचनानि च पाणिनी-

यानि प्रदर्श्य विमृश्यन्ते। ईदृशाः सप्तविंशतिर्योगा उपन्यस्यन्ते यत्र वर्णनिर्देशः, ग्रहणनिर्देशः, विभक्तिनिर्देशः, स्थाननिर्देशः, कालनिर्देशः, यथासन्ननियमः, यथासंख्यनियमः, सन्निकृष्टनियमः, उत्तरनियमः, वलवन्नियमः, सन्धिनियमः, परकालनियमः, सौवर्यः परिभाषाः, आद्यन्तवद्भावः, पदान्तातिदेश इतीमे विषया विचारिताः।

चतुर्थेऽध्याये स्वरो विमृष्टः। तत्र स्वरस्वरूपं निरूप्य स्वरभेदाः प्रदर्शिताः। पारिशिक्षा,याज्ञवल्क्यशिक्षा, नारदीयशिक्षा च वैदिकस्वरस्य सङ्गीतात्मकतां निर्दिशन्ति। वर्नेलादय एतत् शिक्षाकारीयमतं कृत्रिमम् अभिमन्यन्ते। सिद्धेश्वरवर्मा त्वेतत् प्रतीकात्मकम् उपस्थापनम् इत्यातिष्ठते। स्वरस्य विशिष्टप्रयोजनान्यत्र प्रदर्श्यन्ते। यद्यपि स्वरप्रक्रिया पाणिनीयाऽष्टाध्याय्या अतिसूक्ष्मा सुप्रौढा च, तथापि तदपेक्षया प्रातिशाख्यप्रतिपादितस्वरः प्रामाणिकतरः स्वचरणस्थस्वरविशेषस्य सङ्ग्राहकत्वात्। तद्यथा–भूतिशब्दः पाणिनीयप्रक्रिययान्तोदात्त एव सिद्ध्यति। वाजसनेयिचरणे त्वयं शब्द आद्युदात्त उपलभ्यते, प्रातिशाख्यकारश्च—भूतिराद्युदात्तम् (वा० प्रा० २।२२) इत्याद्युदात्तत्वं विधत्ते। प्रातिशाख्यकारः सप्तादिस्वरसंख्यां निर्दिदेश, पाणिनीयवैयाकरणैर्व्याहृतानि तत्समानवचनान्यत्रोपस्थाप्यन्ते। सौवरीषु संज्ञासु वाजसनेयिप्रातिशाख्यकारेण जात्यादयोऽष्टौ स्वरितभेदाः प्रदर्शिताः, परं शास्त्र एतासां संज्ञानां क्वचिदप्युपयोगो न दृश्यते। अत एताः कुतश्चनोद्धृत्यात्र निक्षिप्ता इत्यनुमीयते। वाजसनेयिप्रातिशाख्यीयसूत्राण्याधृत्यात्रापि पाणिनीयैः सूत्रैः सह तुलना प्रस्तूयते। तत्राद्युदात्तान्तोदात्तादिविधिषु पाणिनीयापेक्षया प्रातिशाख्यसरणिः सुगमा, परं द्व्युदात्त-त्र्युदात्तप्रतिपादने स्वरूपत उदात्तविवेकः प्रातिशाख्यदिशा न सम्भवः। देवताद्वन्द्वादिषु प्रातिशाख्यकारीय-पाणिनीययोर्दर्शनयोर्भेदोऽपि लक्ष्यते।

पञ्चमेऽध्याये सन्धिर्विमृष्टः। तत्र वाजसनेयिप्रातिशाख्ये पदान्तपदाद्योः सन्धिः (वा० प्रा० ३।३) इति नियमात् पदान्तपदादिसन्धिरेव प्रतिपादनीय आसीत्, परन्तु प्रातिशाख्यकारो बहुषु स्थलेषु स्वक्षेत्रम् अतिक्रामति। यथा–भाविभ्यः स षं समानपदे (वा० प्रा० ३।५६), क वृधवृजोः (वा० प्रा० ३।११४)। केषाञ्चित् सूत्राणाम् उदाहरणानि संहितासु नोपलभ्यन्ते। तद्यथा—तथयोः सम् (वा० प्रा० ३।८) इत्यत्र थकारस्य, षड् दशदन्तयोः संख्यावयोऽर्थयोः (वा०

प्रा० ३।४७) इत्यत्र दन्तस्योदाहरणं नोपलभ्यते। प्रातिशाख्यकारः पदान्तीयान् वर्णान् निर्दिदेश। तत्र विसर्जनीयोऽपि निर्दिश्यते। पाणिनीयप्रक्रियया विसर्जनीयो न प्राकृतः, किन्तु वैकृत एव। प्रातिशाख्यकारो विसर्जनीयमपि द्विधा विभाजयति—रिफितम्, अरिफितं च। पाणिनीयप्रक्रियया रेफस्य विसर्जनीयादेशः क्रियते। तत्र—ससजुषो रुः (अ० ८।२।६६) इत्यनेन विहितस्य रेफस्य यो विसर्जनीयः, प्रातिशाख्यप्रक्रियया ह्यरिफितः सः। तस्यैव यत्वम् (अ० ८।३।१७), उत्वं (अ० ६।१।११३,११४) च भवति। एवंविधाः प्रक्रियाभेदाः केचन पाणिनि-कात्यायन-प्रोक्तयोस्तन्त्रयोरुपलभ्यन्ते। शास्त्रद्वयेऽपि स्वर-व्यञ्जनसन्ध्यादिभेदेन सन्धिप्रतिपादनं न क्रियते। अस्मिन् विमर्शे तु स्वरादिसन्धिभेदान् प्रकल्प्य, वाजसनेयि-प्रातिशाख्यसूत्राण्याधृत्य पाणिनीयैः सूत्रैः सह तेषां तुलना समुपस्थाप्यते। सन्धिशेषेऽन्तःपद-सन्धिरपि पुनः संक्षेपेणोल्लिख्यते।

षष्ठेऽध्याये पदपाठो विमृष्टः। यद्यप्ययं विषयः पाणिनीयाष्टके नोपवर्ण्यते, तथापि नावैयाकरणः पदपाठविधाने समर्थ इति पदपाठ-नियमानां प्रकारान्तरेण व्याकरणनियमापेक्षणाद् अत्र पदपाठो विमृश्यते। तत्र वेदार्थबोधः पदपाठस्य मुख्यं प्रयोजनम्, संहितापाठ-सुरक्षाप्यस्यान्यतमं प्रयोजनम् उच्यते। पदविच्छेदविषये आचार्याणां वैमत्यमपि लक्ष्यते। न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणम् अनुवर्त्यम्'[1]—इति घोषयता पतञ्जलिना पदपाठस्यानित्यत्वं व्याकरणानुसारित्वं च प्रदर्शितम्। यास्कादिभिरपि तथैवाङ्गीकृत्य शाकलपदविच्छेदः प्रत्याख्यातः[2]। प्रकृतत्वाद् अत्र शुक्लयजुःपदपाठ-नियमा निरूपिताः। तत्रावग्रहनियमाः प्रायेण व्याकरणम् आश्रयन्तीति वाजसनेयिप्रातिशाख्यीयान्यवग्रहप्रतिपादकसूत्राण्याधृत्य पाणिनीयसूत्रैः सह तेषां तुलना विधीयते। पाणिनीयतन्त्रे यत्र पदसंज्ञा विधीयते तत्रावग्रहो दृश्यत इति साधारणो नियमः।

सप्तमेऽध्याये पाणिनि-कात्यायनयोरभिसम्बन्धो विमृश्यते। पाणिनीयाष्टाध्यायी-वाजसनेयिप्रातिशाख्ययोः पारस्परिकतुलनयैतद् अवगम्यते यच्छास्त्रद्वयस्य बहूनि सूत्राणि समानानि सन्तीति। तत्र वेबरा-

---

१. महा० ३।१।१०३॥ २. निरु० ६।२८॥

दिभिः कात्यायनीयप्रातिशाख्यस्योपजीव्यत्वं पाणिनेश्चोपजीवित्वं प्रतिपादितम् । वेवरादिमतं निराकृत्यास्मिन् विमर्शे कात्यायनीयतन्त्रे पाणिनेः प्रभावो निदर्शनपुरःसरं प्रदर्शितः । यत्तु कैश्चित् पाणिनीय-रचनासौष्ठवं शैलीविकासं चाधृत्य वाजसनेयिप्रातिशाख्यापेक्षया पाणिनीयाष्टाध्याय्या अर्वाचीनत्वं प्रतिपाद्यते, तन्न, प्रातिशाख्य-कारेण प्रयोजनविशेषात् सुविस्तीर्णा तत एव सुगमा शैली स्वीकृतेति सुवचत्वात् । तथा हि–स्वल्पज्ञं व्याकरणजटिलतां परिजिहीर्षुं संहिता-पाठरक्षणमात्रे कृतोत्साहं वैदिकसंज्ञाभाजं जनं प्रति प्रातिशाख्योपदेश इति सुगमसरण्या स्वरसंस्कारादिविधयः प्रतिपाद्यन्ते । वाजसनेयि-प्रातिशाख्ये प्रायः स्थानिनिर्देशोऽन्यप्रातिशाख्यवत् प्रथमया क्रियते । केषुचित् स्थलेषु तु स्थानिनिर्देशः षष्ठ्याप्युपलभ्यते । तत्र पाणिनेः प्रभावः स्पष्टम् एवाभिव्यज्यते । केवलं वाजसनेयिप्रातिशाख्यम् अधी-यानः कश्चित् तिङ् इत्यस्यार्थं बोद्धुं न प्रभवति । पाणिनीयशास्त्रम् अधिगम्यैव तद्बोधः सम्भवतीति तत्र पाणिनीयप्रभावो द्योत्यते । अपि च, पाणिनिः शुक्लयजुर्वेदाद् न किमपि विशेषेणोद्धरति, तर्हि कथं स वाजसनेयिप्रातिशाख्यात् किञ्चिद् उद्धरेत् ?

तदेवं प्रातिशाख्यकारकात्यायनस्य पाणिन्युपजीवित्वे सिद्धे, वार्त्ति-ककारप्रातिशाख्यकारकात्यायनयोरैक्येऽपि न काचिद् विप्रतिपत्तिः । कात्यायनीयवार्त्तिकानां वाजसनेयिप्रातिशाख्यसूत्रैः सह तुलनयाप्येतत् तथ्यं स्फुटीभवति । वार्त्तिककारः कात्यायनः प्रातिशाख्यैरतितरां प्रभावित आसीद् इति शोधविचक्षणैरङ्गीक्रियते । तस्मात् प्रातिशाख्य-प्रवक्ता वार्त्तिकरचयिता चैक एव कात्यायन आसीद् इति निष्कर्षः । स च कात्यायनो वाजसनेयिचरणस्थस्वरादिविशेषान् पाणिनीयतन्त्र-परिधावसन्निविष्टान् अभिसमीक्ष्य परिशिष्टरूपम् इदं वाजसनेयि-प्रातिशाख्यं प्रावोचत् । अत्र पाणिनिकात्यायनयोरभिसम्बन्धस्य प्रति-पादनेऽन्यस्या ऐतिहासिकसामग्र्या उपयोगो नाकारि, उपजीव्योपजी-विभावसम्बन्धनिरूपणस्यैवोद्दिष्टत्वात् ।

अस्याध्ययनस्य संक्षेपत इमे निष्कर्षाः शक्यन्ते वक्तुम्—

(१) पाणिनि-कात्यायनौ स्वकीयाष्टाध्यायी-वाजसनेयिप्राति-शाख्ययोः प्रायः समानां प्रतिपादनपद्धतिम् अनुसस्रतुः ।

(२) शास्त्राध्ययनस्य ह्यधिकारिणम् अपेक्ष्य शास्त्रकृद्भ्यां स्वर-

संस्कारप्रवोधनाय क्वचिद् भिन्ना प्रक्रिया समाश्रिता, परिणामस्तूभयत्र प्रायः समान एव।

(३) केषाञ्चन वर्णानाम् उच्चारणे भेदोऽपि लक्ष्यते। यथा—ऋकाररेफयोः (वा० प्रा० १।५८, ६५)। स च प्रदेशभेदाद् उपपद्यते।

(४) पाणिनि-कात्यायनयोः परस्परम् उपजीव्योपजीविभावसम्वन्धो वर्त्तते। वार्त्तिककार-प्रातिशाख्यकार-कात्यायनयोः किलैक्यं सुव्यज्यते। वाजसनेयिप्रातिशाख्यं हि पाणिनीयाष्टाध्याय्याः परिशिष्टकल्पं प्रोक्तं कात्यायनेन।

परमोदाराः स्नेहमूर्तयो व्युत्पत्तिशास्त्रपटीयांसो गुरुवरा वाचस्पतयः श्रीमद्रामप्रसादत्रिपाठिमहाभागाः वाराणसेयसंस्कृतविश्वविद्यालयस्थप्राचीनव्याकरणविभागाध्यक्षाः कोटिशो वन्दनीयाः, येषां निदेशनेऽयं शोधप्रवन्धः पूर्त्तिम् अगाद्, ये चातिव्यस्ता अप्यस्मा अनुसन्धातृजनाय परमानुकम्पया यथेष्टं समयं सम्प्रादुः। आचार्यवराः श्रद्धेयाः श्रीमद्युधिष्ठिरमीमांसकचरणाः सततप्रेरणा-प्रोत्साहन-परामर्शैरभीष्टपुस्तकप्रदानेन च सुमहत् साहाय्यम् अकार्षुरिति तान् प्रति कृतज्ञतया विनतोऽस्त्ययं जनः। वाराणसेयसंस्कृतविश्वविद्यालयस्थस्यानुसन्धानविभागस्य सञ्चालकानां वाचस्पतीनां श्रीमद्भागीरथप्रसादत्रिपाठिमहोदयानां प्रोत्साहनेन यथेष्टमार्गनिदेशनेन चायं शोधप्रवन्धोऽपूर्यतेति तान् प्रति कृतज्ञता समावेद्यते। विद्यामार्त्तण्डान् वैदिकवाङ्मयमर्मज्ञान् श्रीमन्मङ्गलदेवशास्त्रिमहाभागान् प्रति कृतज्ञता प्रकाश्यते, ये स्नेहपुरःसरान् उपयोगिनः परामर्शान् सम्प्रादुः। अन्येऽपि ते सर्वे विद्वांसो धन्यवादार्हाः, येषां ग्रन्थरत्नेभ्यः सामग्री समुदहारि, शोधप्रबन्धे चास्मिन्नुपायोजि।

कृतेऽपि सुमहत्यवधाने टङ्कणदोषाः समजायन्त। बहुशः संशोधने विहितेऽपि केचन यथास्थितत्वाद् असुविधां जनयेयुरिति विद्वज्जनाः क्षमन्ताम्।

विदुषां विधेयः,

विजयपालः

—:०:—

# विषयानुक्रमणिका

## प्रथमोऽध्यायः



## द्वितीयोऽध्यायः



## तृतीयोऽध्यायः

नासिकः (२०) प्रगृह्यम् (२१) अक्षरम् (२२) उदात्तः (२३) अनुदात्तः (२४) स्वरितः (१-८) जात्यादयः (२५) लोपः (२६) आम्रेडितम् (२७) स्थितोपस्थितम् (२८) अपृक्तम् (२९) संहितः (३०) असंहितः (३१) संहिता (३२) रिफितः (३३) पदम् (३४) स्वरः (३५) स्पर्शः (३६) अन्तःस्था (३७) ऊष्मा (३८) अयोगवाहाः (३९) नाम (४०) आख्यातम् (४१) उपसर्गः (४२) निपातः (४३) तिङ (४४) कृत् (४५) तद्धितः (४६) समासः (४७) धातुः (४८) वृद्धिः (४९) अवसानम् (५०) वचनम्(५१) विभक्तिः (५२) आमन्त्रितम् (५३) प्रत्ययः। परिभाषानुक्रमः—(१) वर्णनिर्देशः (२) ग्रहणनिर्देशः (३) विभक्तिनिर्देशः (४) स्थाननिर्देशः (५) कालनिर्देशः (६) यथासन्ननियमः (७) यथासंख्यनियमः (८) सन्निकृष्टनियमः (९) उत्तरनियमः (१०) वलवन्नियमः (११) सन्धिनियमः (१२) परकालनियमः (१३) स्वरविषयिका: परिभाषाः (१४) आद्यन्तवद्भावः (१५) पदान्तातिदेशः।

## चतुर्थोऽध्यायः



स्वरस्वरूपम्, स्वरभेदाः, वैदिकस्वरस्य सङ्गीतात्मकता, स्वरप्रयोजनानि, व्याकरणापेक्षया प्रातिशाख्यस्य प्रामाण्यम्, स्वरप्रक्रिया स्वरप्रकरणानि, स्वरसंख्या, सौवर्यः संज्ञाः, सौवर्यः परिभाषाः, आद्युदात्तत्वम्, मध्योदात्तत्वम्, अन्तोदात्तत्वम्, सर्वोदात्तत्वम्, अनुदात्तत्वम्, स्वरितत्वम्, एकश्रुतित्वम्, एकादेशस्वरः, आख्यातोपसर्गस्वरः।

## पञ्चमोऽध्यायः



पदान्तपदाद्योः सन्धिः, पदान्तीया वर्णाः, स्वरसन्धिः, व्यञ्जनसन्धिः, अयोगवाहसन्धिः, सन्धिशेषः।

## षष्ठोऽध्यायः



पदपाठप्रयोजनम्, प्रवचनपद्धतिः, पदविच्छेदविषये वैमत्यम्, पद-

—:०:—

# सङ्केतसूची

अ० — अष्टाध्यायी
अ० को० — अमरकोशः
अ० प्रा० — अथर्ववेदप्रातिशाख्यम्
अ० भा० — अनन्तभाष्यम्
आ० श्रौ० सू० — आश्वलायनश्रौतसूत्रम्
आन दि ऐन्द्र — आन दि ऐन्द्र स्कूल आफ़ संस्कृत ग्रामरियन्स
उ० — उणादिसूत्राणि
उ० भा० — उवटभाष्यम्
ऋ० — ऋग्वेदसंहिता
ऋग्वेदानु० — ऋग्वेदानुक्रमणी
ऋ० त० — ऋक्तन्त्र-प्रातिशाख्यम्
ऋ० प्रा० — ऋग्वेदप्रातिशाख्यम्
ऋ० भा० — ऋग्वेदभाष्यम्
ए बी ओ आर आई—एनल्स आफ़ भण्डारकर आरियण्टल इन्स्टीट्यूट।
ऐ० ब्रा० — ऐतरेयब्राह्मणम्
का० — काशिका
कात० — कातन्त्रम्
क्रिटिकल स्टडीज़—क्रिटिकल स्टडीज़ इन दि फ़ोनेटिक आब्ज़र्वेशन्स आफ़ इण्डियन ग्रामरियन्स
क्रिटिकल स्टडीज़ आन का० शु० प्रा०—क्रिटिकल स्टडीज़ आन कात्यायनाज़ शुक्लयजुर्वेदप्रातिशाख्य।
गणरत्न० — गणरत्नमहोदधिः
गो० गृ० — गोभिलीयगृह्यसूत्रम्
गो० ब्रा० पू० — गोपथब्राह्मणपूर्वार्द्धम्
चान्द्र० — चान्द्रव्याकरणम्
टैक० टर्म्स — टैक्निकल टर्म्स एण्ड टैकनीक आफ़ संस्कृत ग्रामर
डि० सं० ग्रा० (डी० एस० जी०) डिक्शनरी आफ़ संस्कृत ग्रामर।

| | |
|---|---|
| तत्त्व० | तत्त्वबोधिनी |
| तन्त्रवा० | तन्त्रवार्त्तिकम् |
| तु० | तुलना विधेया |
| तै० प्रा० | तैत्तिरीयप्रातिशाख्यम् |
| तै० सं० | तैत्तिरीयसंहिता |
| त्रि० भा० | त्रिभाष्यरत्नटीका |
| दश० उ० | दशपाद्युणादिसूत्राणि |
| दुर्ग० | दुर्गाचार्यवृत्तिः |
| द्र० | द्रष्टव्यम् |
| निघ० | निघण्टु |
| निरु० | निरुक्तम् |
| पद० | पदमञ्जरी |
| पस्पशा० | पस्पशाह्निकम् |
| परि० | परिभाषापाठः |
| पाणिनि | पाणिनि : हिज् प्लेस इन संस्कृत लिटरेचर |
| पा० व्या० अनु० | पाणिनीय व्याकरण का अनुशीलन |
| पु० | पुराणम् |
| पू० मी० | पूर्वमीमांसा |
| पृ० | पृष्ठम् |
| प्रति० परि० | प्रतिज्ञापरिशिष्टम् |
| फिट्० | फिटसूत्राणि |
| बृ० दे० | बृहद्देवता |
| बृहच्छब्द० | बृहच्छब्देन्दुशेखरः |
| भा० वृ० | भाषावृत्तिः |
| भा० सू० | भाषिकसूत्रम् |
| महा० | महाभाष्यम् |
| मा० धा० | माधवीया धातुवृत्तिः |
| मा० प० | माध्यन्दिनपदपाठः |
| मा० सं० | माध्यन्दिनसंहिता |
| मा० सं० उ० भा० | माध्यन्दिनसंहितोवटभाष्यम् |
| भा० सं० म० भा० | माध्यन्दिनसंहितामहीधरभाष्यम् |
| मु० उप० | मुण्डकोपनिषद् |

मै० सं० मैत्रायणी संहिता
या० शि० याज्ञवल्क्यशिक्षा
वा० वार्त्तिकम्
वा० प० वाक्यपदीयम्
वा० पु० वायुपुराणम्
वा० प्रा० वाजसनेयिप्रातिशाख्यम्
वैदिका० वैदिकाभरणटीका
वै० पदा० को० वैदिकपदानुक्रमकोशः
वै० वा इ० वैदिक वाङ्मय का इतिहास
वै० स्व० मी० वैदिक स्वर मीमांसा
व्या० महा० व्याकरण महाभाष्य (मराठी)
श० कौ० शब्दकौस्तुभम्
श० ब्रा० शतपथब्राह्मणम्
शि० सं० शिक्षासंग्रहः
श्लो० पा० शि०—श्लोकात्मकपाणिनीयशिक्षा
सं० व्या० इ० संस्कृतव्याकरणशास्त्र का इतिहास
सीर० परि० सीरदेवीयपरिभाषावृत्तिः ।
सू० पा शि० सूत्रात्मकपाणिनीयशिक्षा
स्व० सि० च० स्वरसिद्धान्तचन्द्रिका
हरि० हरिनामामृतव्याकरणम्
हि० इ० लि० हिस्टरी आफ इण्डियन लिटरेचर
हि० सं० लि० हिस्टरी आफ एन्श्येण्ट संस्कृत लिटरेचर

—:०:—

## प्रथमोऽध्यायः

# १. उद्भव-स्वरूप-शैलीविमर्शः

### १. १. व्याकरणप्रातिशाख्ययोरुद्भवः

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥[1]

इति वेदविदाम् अलङ्कारभूतः प्रमाणितशब्दशास्त्र[2] आचार्यो भर्तृहरिर्ब्रह्मणः शब्दात्मकं स्वरूपम् अभिधाय तस्य वेदाभिन्नत्वं प्रतिपादयन्नाह—

प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः ।
एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक् ॥[3] इति ।

इत्थं च तस्य ब्रह्मरूपस्य वेदस्य शाखाभेदाः समजायन्त । ततश्च—

विधातुस्तस्य लोकानाम् अङ्गोपाङ्गनिबन्धनाः ।
विद्याभेदाः प्रतायन्ते ज्ञानसंस्कारहेतवः ॥[4]

इति वचनात् तस्यैव प्रणवस्वरूपस्य वेदस्य व्याकरणादीन्यङ्गोपाङ्गानि संजातानीति प्रतिपादितम् । ईदृग् वेदाङ्गावतरणं वैयाकरणैः समास्थीयते ।

भगवान् यास्कः खल्वपि वेदाङ्गागमपरम्परां समासतः प्राह—

साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च[5]—इति ।

---

१. वा० प० १।१॥
२. वर्धमानः, गणरत्नमहोदधौ पृ० २२० ॥
३. वा० प० १।५ ॥
४. वा० प० १।१० ॥
५. निरु० १।२० ॥

अयम् अत्राचार्याभिप्रायः—आदौ मन्त्रद्रष्टार[1] ऋषयो बभूवुः । ततः श्रुतर्षयोऽजायन्त.[2] ये मन्त्रद्रष्टृभ्य उपदेशेन मन्त्रान् जगृहुः । अथ श्रुतर्षयः, शक्तिहीना अल्पायुषो मानवा उपदेशमात्रेण नैतान् सुखं गृह्णीयुरिति खिद्यमाना निरुक्तं विभिन्नाः शाखा वेदाङ्गानि चेतराणि समाम्नातवन्तः[3] । बेलवाल्कर उद्धृतचरेण यास्कीयसन्दर्भेण बौद्धिक-विकासस्य त्रीन् कालविभागान् प्रकल्पयति । तथा हि–(१) मन्त्रद्रष्टृ-कालः, (२) ब्राह्मणप्रवक्तृकालः, शाखासंकलयितृकालस्तथा, (३) पदपाठनिघण्टुतत्संबद्धान्यग्रन्थकालश्च, सम्प्रत्युपलभ्यमानप्रातिशाख्य-मूलान्यप्यत्रैव सन्निविष्टानि स्युः[4]–इति ।

वेदाङ्गानां प्रवृत्तिः प्रथमतो वेदार्थविबोधार्थम् अभवद् इति भारतीयानां प्राचीनाचार्याणां मतम् । आधुनिकास्तु नैतदङ्गीकुर्वन्ति स्वकीयानि च मतानि कल्पयन्ति । तत्र केचित् तावद्-अनार्याणाम् आर्यीकरणानन्तरं प्रगतिशीलानाम् अनार्याणां तदन्वयानां च कर्म-काण्डप्रधानानां वैदिकसंस्कृतिम् आत्मसात्कर्त्तुम् उत्साहवतां प्रयत्नस्य फलं स्याद् वेदाङ्गानाम् आरम्भो विकासश्च–इत्याहुः[5] । अपरे पुनः—देशभेदात् पारस्परिकसम्पर्कबाधाच्च वैदिकपाठेषूच्चारणव्यवस्थाया आवश्यकता समन्वभावीति प्रतीयते । अपि च, वैदिकलौकिकभाषा-भेदः शब्दार्थचिन्तनस्य प्रेरको बभूव, तत्परिणतिश्च व्याकरणस्योद्-भवो विकासश्च—इत्यादिक्रमेण वेदाङ्गप्रादुर्भावं प्रतिपादयन्ति[6] ।

वेदाङ्गानि तत्संख्या तद्विशेषाणां नामानि च प्राचीनवाङ्मये बहुश उल्लिख्यन्ते । गोपथब्राह्मणे, बौधायनादिधर्मशास्त्रेषु, वाल्मी-कीयरामायणे महाभाष्ये च षडङ्गशब्देन वेदाङ्गानि निर्दिश्यन्त इत्याचार्यमीमांसकाः[7] । **ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः । शिक्षा**

---

१. ऋषिर्दर्शनात्—निरु० २।११ ।।

२. 'अवरकालीनेभ्यः शक्तिहीनेभ्यः श्रुतर्षिभ्यः'–दुर्गः, निरु० १।२० ।।

३. 'वेदं च वेदाङ्गानि च'–इत्यंशः प्रक्षिप्त इति राजवाड़े सन्देग्धि (निरुक्त, राजवाड़े सं०, पृ० २९०) ।।

४. सिस्टम्स आफ संस्कृत ग्रामर, पृ० ५ ।।

५. म० मो० घोषः, पाणिनीयशिक्षा, भूमिका पृ० २० ।।

६. विश्वबन्धुशास्त्री, अ० प्रा०, भूमिका पृ० १९,२० ।।

७. युधिष्ठिरमीमांसकः, सं० व्या० इ० प्रथमभाग, पृ० ५७ ।।

**कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम्**[1]–इति मुण्डकोपनिषदि वेदाङ्गोल्लेखः प्राचीनतम इति व्हिटने-महोदयः[2] । मैक्समूलरस्तु पङ्क्तिम् इमां प्रक्षिप्तां मेने ।[3] मैक्समूलरमतेन-**चत्वारोऽस्यैव वेदाः शरीरं षडङ्गान्यङ्गानि**[4]–इति षडङ्गोल्लेखः प्राचीनतमः, परन्त्वत्र तद्विशेषा न निर्दिश्यन्ते । तत्र शिक्षाच्छन्दसी वेदस्य सम्यगुच्चारणार्थं, व्याकरणनिरुक्ते सम्यगर्थाववोधार्थं, कल्पज्योतिषे च यागविनियोगार्थम् अपेक्ष्येते[5] इति षट् शास्त्राण्येतानि वेदार्थोपकारकत्वाद्[6] अङ्गत्वेन संस्तवाद्[7] वा वेदाङ्गशब्दभाञ्जि भवन्ति ।

षट्स्वपि वेदाङ्गेषु व्याकरणस्य प्राधान्यम् आचार्यैः स्वीक्रियते । तथा च पतञ्जलिः–**ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च**–इत्यागमवाक्यम् उद्धृत्य प्राह–**प्रधानं षडङ्गेषु व्याकरणम्**[8] इति । भर्तृहरिरपि जगाद—

**आसन्नं ब्रह्मणस्तस्य तपसाम् उत्तमं तपः ।**
**प्रथमं छन्दसाम् अङ्गं प्राहुर्व्याकरणं बुधाः ॥**[9] इति ॥

प्राधान्यं च तस्य पदपदार्थज्ञानस्य तदायत्तत्वाद् उच्यते[10] । शब्दशास्त्रार्थको व्याकरणशब्दो वाल्मीकीयरामायणे, गोपथब्राह्मणे, मुण्डकोपनिषदि, महाभारतादिषु च ग्रन्थेषु समुपलभ्यते[11] येन व्याकरणशास्त्रस्य तेषु तेषु कालेषु प्रतिष्ठितत्वम् अवगम्यते । **ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः**[12]–इति ऋक्तन्त्रकारस्य वर्णसमाम्नायप्रवक्तृपरम्परोल्लेखम् आधृत्य,–**बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां**

१. मु० उ० १।१।५ ॥
२. हिस्ट्री आफ इण्डियन लिटरेचर, पृ० २६८ ॥
३. हि० सं० लि०, पृ० ५७ ॥
४. षड्विंशब्रा० ४।७ ॥
५. हि० सं० लि०, पृ० ५८ ॥
६. सायणः, ऋ० भा० पृ० ५७ ॥ हरदत्तः, पद० प्रथमभाग, पृ० ६ ॥
७. श्लो० पा० शि० ४२ ॥
८. महा० पस्पशा० ॥ ९. वा० प० १।११ ॥
१०. हरदत्तः, पद० प्रथमभाग, पृ० ७ ॥
११. सं० व्या० इ०, प्रथमभाग पृ० ५६, ५७ ॥
१२. ऋ० त० १।४ ॥

शब्दपारायणं प्रोवाच[1]–इत्यादिभिः पतञ्जलिवचनैः परिपोष्य,–**ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुर्विति ताम् इन्द्रो मध्यतोऽवक्रम्य व्याकरोद्**[2] इति तैत्तिरीयसंहितावचनं तद्व्याख्यातुः सायणस्य च–**तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं सर्वत्राकरोद्**[3] इति व्याख्यानं प्रमाणीकृत्येन्द्रस्याद्यव्याकरणप्रवक्तृत्वं प्रत्यपीपदन्तमाम् आचार्यमीमांसकाः।[4]

प्रातिशाख्यानि प्राधान्येन वैदिकोच्चारण-स्वर-सन्धि-पदपाठान् विषयीकुर्वन्ति। एतेषु ग्रन्थेषु शिक्षाविषयाणां व्याकरणविषयाणां चोपलम्भाद् आचार्या एतान् क्वचित् शिक्षानाम्ना स्मरन्ति[5], क्वचिद् एषां व्याकरणमूलकत्वं प्रतिपादयन्ति[6], क्वचिच्च वेदाङ्गत्वमेतेषाम् ऊरीकुर्वन्ति।[7] सर्वथापि प्रातिशाख्यानाम् उद्भवविकासौ वेदाङ्गान्तरैः सहैव वभूवतुरिति निश्चीयते। तत्र केचन विद्वांसः प्रातिशाख्यग्रन्थान् शिक्षावेदाङ्गस्य प्राचीनतमान् प्रतिनिधीन् आतिष्ठन्ते तथा चाह विण्टरनित्ज-महाशयः—एतानि प्रातिशाख्यानि वेदाङ्गशिक्षायाः प्राचीनतमाः प्रतिनिधयः सन्ति[8]–इति। अपरे पुनः सङ्गिरन्ते–आदौ शिक्षावेदाङ्गस्य प्रादुर्भावः, ततश्च 'द्वितीयशिक्षा' रूपेण प्रातिशाख्यानि विकासमापुः। तथा च प्रत्यपीपदद् मनोमोहनघोषः–शिक्षावेदाङ्गस्य द्वितीययुगवर्त्तीनि प्रातिशाख्यानि प्रथमयुगोद्भूताद् एतद्विषयकशास्त्राद् विस्तीर्ण-विषयतरकाणि वभूवुः। तैत्तिरीयोपनिषदि (१।२) निर्दिष्टः शिक्षाविषयो 'द्वितीयशिक्षा' इत्यभिधानीयानि प्रातिशाख्यानि प्रति प्रायेण युज्यत इति प्रातिशाख्यस्थविषयवस्तुनोऽध्ययनाद् अवसीयते[9]–इति।

---

१. महा० पस्पशा० ॥ २. तै० सं० ६।४।७ ॥

३. सायणः, ऋग्भाष्योपोद्घात, पूना० सं० प्रथम-भाग पृ० २६ ॥

४. सं० व्या० इ०, प्रथमभाग, पृ० ५८-६२ ॥

५. अथाचार्यो भगवान् शौनकः शिक्षाशास्त्रं कृतवान्—इति ऋक्प्रातिशाख्यव्याख्याता विष्णुमित्रः (सिद्धेश्वरवर्मा, क्रिटिकल स्टडीज़, पृ० १२) ॥

६. तै० प्रा० १६।५ वैदिकाभरणे ॥ ७. ऋ० प्रा० १४।६६ ॥

८. दीज़ प्रातिशाख्याज़ आर दि अर्लियष्ट रिप्रेजेटेटिव्ज़ आफ़ दि वेदाङ्ग-शिक्षा। विण्टरनित्ज़ः हि० इ० लि०, प्रथम भाग, पृ० २८५ ॥

९. म० मो० घोषः, पाणिनीय शिक्षा, भूमिका, पृ० ३८ ॥

## १. २. ०. व्याकरणस्वरूपम्—

**व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्**[1]—इति पतञ्जलिना व्याकरणशब्दस्य व्युत्पत्तिः प्रदर्शिता । व्याकृतिश्च प्रकृतिप्रत्ययादिविभागः[2] । व्याकरणशब्दसमानार्थकः शब्दानुशासनशब्दोऽपि लक्ष्यते । हरदत्तः शब्दानुशासनशब्दं व्युत्पादयन् प्राह—**विविक्ताः साधवः शब्दाः प्रकृत्यादिविभागतो (अनुशिष्यन्ते) ज्ञाप्यन्ते येन तच्छास्त्रम् अत्र शब्दानुशासनम्**[3] इति । अयं खलु प्रकृतिप्रत्ययादिविभागः काल्पनिकः[4] सन्नपि पदपदार्थाववोधस्य सरलतम उपायः । तथा च प्राह नागेशः—तत्र प्रतिवाक्यं सङ्केतग्रहासम्भवात् तदन्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागकल्पनेन कल्पिताभ्याम् अन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः[5] इति । इत्थं च लौकिकवैदिकानां कल्पितशब्दानां साधुत्वप्रतिपादिकेयं स्मृतिर्व्याकरणं नाम[6] । अत्र स्मृतौ प्रतिपादितान् अष्टौ पदार्थान् निबध्नाति भर्तृहरिः—

**अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः ।**
**अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः ॥**[7] इति ॥

अत्र प्रकृत्यर्थाः प्रत्ययार्थाश्च विभज्यमानत्वाद् अपोद्धारपदार्था इति प्रोक्ताः, पदार्था वाक्यार्थाश्च स्थिरस्वरूपत्वात् स्थितलक्षणा अर्था इत्यभिहिताः, पदानि वाक्यानि चान्वाख्येयाः शब्दा इति निर्दिष्टाः, प्रकृतयः प्रत्ययाश्च प्रतिपादकाः शब्दा इति व्याहृताः । इयमेवाष्टपदार्थी व्याकरणस्य शरीरम् । एनामेव मनसिकृत्य दुर्गोऽपि—**व्याकरणम् अष्टधा**[8]—इति व्याजहार[9] ।

---

१. महा० पस्पशा० ॥
२. सायणः, ऋ० भा० उपो० पृ० ५१,(गोल्डस्टुकर : पाणिनि,पृ० २१४)
३. पद० प्रथमभाग पृ० ७, तु० शब्दकौस्तुभ पृ० ६, उद्योत पृ० ५ ॥
४. उपायाः शिक्षमाणानां बालानामपलापनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥ वा० प० २।२३८ ॥
५. लघुमञ्जूषा पृ० ५, ६ ॥
६. साधुत्वज्ञानविषया सेयं व्याकरणस्मृतिः ॥ वा० प० १।१४२॥
७. वा० प० १।२४ ॥ ८. निरु० १।२० दुर्ग० ॥
९. रामशङ्करभट्टाचार्यः, पा० व्या० अनु० पृ० ९३ ॥

व्याकरणस्वरूपं समासतोऽभिधाय प्रातिशाख्यस्वरूपप्रदर्शनाय प्रयासस्तावद् विधीयते। प्रातिशाख्यपर्यायः पार्षदशब्दोऽपि प्राचीनवाङ्मय उपलभ्यते। तथा चोचे यास्कः–**पदप्रकृतीनि सर्वचरणानां पार्षदानि**[1]–इति। प्रातिशाख्यस्य प्रधानं मौलिकं च नाम पार्षदम् इति ववृत इति सिद्धेश्वरवर्मा।[2] प्रातिशाख्य-पार्षदशब्दयोरर्थविनिश्चये सहायत्वाच् चरण-शाखा-पर्षदां स्वरूपं तावदुपस्थाप्यते।

### १. २. १. चरण-शाखा-पर्षद्विवेकः—

चरणशब्दो निरुक्ते[3], पाणिनीयाष्टाध्याय्यां[4], महाभाष्ये,[5] अन्येषु च नैकग्रन्थेषु प्रयुक्तो दृश्यते। अस्य च–शाखान्तरम्–इत्यर्थो दुर्गेण स्वीक्रियते[6]। **चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्तते**–इति काशिकाकारः[7]। **चरणशब्दः कठकालापादिषु शाखाभेदेषु मुख्यस्तदध्यायिषु पुरुषेषु गौणः**–इति हरदत्तः[8]। शाखाशब्दो मूलतः साहित्यिककृत्यर्थकः, चरणशब्दस्तु न तथा–इति मैक्समूलरः[9]। जिनेन्द्रबुद्धिस्तु प्राह–**यो हि कठादिप्रोक्ताध्ययनविशेषः शाखा, तत्र यदा चरणशब्दो वर्तते – यदा तु शाखानिमित्तः पुरुषेषु वर्तते**[10] इति। चरणशब्देन शाखाध्यायिनो गृह्यन्ते—इति कैयटहरदत्तौ।[11] चरणम् अध्ययनभेदेनानेकधा-इति न्यासः।[12] **चरणशब्दः शाखाविशेषाध्ययनपरैकतापन्नजनसंघवाची–**

---

१. निरु० १।१७॥ २. क्रिटिकल स्टडीज़—पृ० १२॥

३. पदप्रकृतीनि सर्वचरणानां पार्षदानि। निरु० १।१७॥

४. अनुवादे चरणानाम्॥ अ० २।४।३॥ चरणेभ्यो धर्मवत्॥ अ० ४।२।४६॥ गोत्रचरणाद् वुञ्॥ अ० ४।३।१२६॥ अ० ५।१।१३४॥ अ० ६।३।८६॥

५. चरणाद् धर्माम्नाययोः। महा० ४।३।१२०, वा० ११॥

६. निरु० १।१७ दुर्गः॥

७. का०. २।४।३॥ चरणशब्दाः कठकालापादयः। का० ४।२।४६॥

८. पद० २।४।३॥

९. हेंस इट इज़ क्लियर दैट शाखा मीन्स ओरिजिनली ए लिटरेरी वर्क, एण्ड दैट चरण इज़ नाट॥ हि० सं० लि०, पृ० ६५॥

१०. न्यासः २।४।३॥

११. प्रदीप०, पद० ४।१।५३॥ १२. न्यास, ४।१।६३॥

इति जगद्धरो मालतीमाधवटीकायां जगाद।[1] एतैरुद्धरणैः सुतराम् इदम् अवसीयते यत् प्राञ्चो विपश्चितश्चरणशब्देन शाखास्तदध्यायिनश्चाभिप्रयन्ति। परन्तु मतमेतद्-**जमदग्निप्रवराय वाजसनेयचरणाय यजुर्वेदकाण्वशाखाध्यायिने**[2]-इति भोजवर्मणस्ताम्रपत्रोल्लिखितवचनेन सह न सङ्गच्छते। अपि च, चरणशाखयोरैक्ये स्वीकृते वैदिकसम्प्रदायप्रसिद्धव्यवहारो न प्रकल्पेत। तस्माच् चरणशाखयोर्भेदोऽभ्युपेयः। इति तथा च भोजवर्मणस्ताम्रपत्रलेखात् सम्प्रदायव्यपदेशाच्च-वेदानाम् ऋग्यजुःसामाथर्वात्मकः प्रथमो विभागः, ततः प्रतिसंहितं वाजसनेयादिचरणात्मको द्वितीयः, पुनश्च प्रतिचरणं काण्वादिशाखात्मकस्तृतीयः शाखाप्रतिशाखानुशाखाशब्दैः क्रमशो व्यपदेश्यः स्याद्—इति शक्यते परिकल्पयितुम्[3]। अत्र च-**इत्येताः प्रतिशाखाभ्योऽप्यनुशाखा द्विजोत्तम**-[4] इति पुराणवचनम् उपोद्वलकम्। इमे सर्वेऽपि विभागाः शाखासामान्यात् शाखापदेन व्यपदिश्यन्ते।

अथ शाखाभेदः किन्निमित्तकः? मधुसूदनसरस्वती तावदाह—**प्रवचनभेदात् प्रतिवेदं भिन्ना भूयस्यः शाखाः**[5] इति। महादेवो हिरण्यकेशीभाष्ये प्रोवाच—**शाखाभेदोऽध्ययनभेदाद् सूत्रभेदाद् वा**[6]-इति। वायुपुराणे खल्वपि सङ्कीर्त्यते—

**सर्वास्ता हि चतुष्पादाः सर्वाश्चैकार्थवाचकाः।**
**पाठान्तरैः पृथग् भूता वेदशाखा यथा तथा**[7] ॥

भगवान् पतञ्जलिरप्याह—**न हि च्छन्दांसि क्रियन्ते। नित्यानि च्छन्दांसीति। यद्यप्यर्थो नित्यो या त्वसौ वर्णानुपूर्वी सानित्या। तद्भेदाच्चैतद् भवति काठकं कालापकं मौदकं पैप्पलादकम् इति**[8]। तद्भेदाद् इति भाष्यं व्याचष्टे कैयटः-**आनुपूर्वीभेदाद इत्यर्थः।** ततश्च

१. मैक्समूलरः, हि० स० लि०, पृष्ठ ६५॥
२. भगवद्दत्तः, वै० वा० इ० प्रथमभाग पृ० १७३॥
३. तु०—वै० वा० इ० प्रथमभाग पृ० १७३। सं० व्या० इ० द्वितीयभाग पृ० २८६। म० मो० घोषः, पाणिनीय शिक्षा, भूमिका पृ० ३२,३३॥
४. विष्णु पु० अंश ३। अध्याय ४। श्लो० २५ ॥
५. प्रस्थानभेदः पृ० ६ ॥
६. मैक्समूलर, हि० सं० लि०, पृ० ६६ ॥
७. वा० पु० ६१।५९ ॥ ८. महा० ४।३।१०१ ॥

**कठादयो वेदानुपूर्व्याः कर्त्तार एव न तु स्थिताया एव सुशर्मादिवत् प्रवक्तारः**[१] इति। इत्थं च पाठभेदाः शाखाभेदप्रयोजका इति निष्कर्षः। एवंविधास्वेव शाखासु शाखाशब्दो मुख्यया वृत्त्या प्रयुज्यतेऽन्यत्र तु गौण्या।

परिषत्पार्षत्-शब्दौ समानार्थकौ सभापर्यायौ स्तः। **अध्येतृसंघः परिषद्**[२]–इति कैयटः। नागेशः पार्षदशब्दं व्युत्पादयन्नाह–**शास्त्रविशेषाध्यायिनां समवायः परिषत् पर्षद् वा। तत्र भवा**[३] **कृतिरित्यर्थः**[४]–इति। प्राचीनकाले शास्त्रोपदेशस्य मौखिकत्वाद् विभिन्नशाखिनः शिष्याः शास्त्रविशेषम् आचार्यविशेषाद् अधीयते स्मेति गोभिलभाष्यवचनाद् अनुमीयते। तथा हि–**आचार्यं सपरिषत्कं भोजयेत् सब्रह्मचारिणश्च॥ सह परिषदा शिष्यगणेन वर्तत इति सपरिषत्कः, तम्। समानं तुल्यकालं ब्रह्मचारित्वं येषां त इमेऽन्यशाखिनोऽपि सब्रह्मचारिणः सवयसोऽभिधीयन्ते**[५]—इति। तथा च समानचरणानां विभिन्नशाखिनां शास्त्रविशेषाध्येतॄणां समवायः पर्षद् इति निष्कर्षः।

### १. २. २. प्रातिशाख्यस्वरूपम्—

चरण-शाखा-पर्षदां स्वरूपे निर्णीतेऽधुना प्रातिशाख्यपार्षदशब्दयोरर्थो व्यक्तीक्रियते। धातुवृत्तिकारो माधवः प्रातिशाख्यशब्दं व्युत्पादयन्नवोचत्–**प्रतिशाखं भवं प्रातिशाख्यम्, अव्ययीभावाच्चेति भवार्थेञ्यः**[६]–इति। तत्त्वबोधिनीकारोऽप्याह—**परिमुखादिगणे प्रतिशाखशब्दोऽपि बोध्यः**[७]। **तथा च शाखृ व्याप्तौ इति धातोः प्रतिशाखं भवं**

---

१. प्रदीप ४।३।१०१॥

२. प्रदीप ६।३।१४॥

३. अ० ४।३।१२३॥

४. उद्योतः प्रत्याहाराह्निके॥

५. मैक्समूलर, हि० सं० लि०, पृ० ६८॥

६. मा० धा० पृ० ५८॥

७. काशिकास्थे परिमुखादिगणे प्रतिशाखशब्दो न दृश्यते। सिद्धान्तकौमुदी-परिशिष्टेऽपि परिमुखादिगणे प्रतिशाखशब्दोऽन्तिमः। वस्तुतस्तु परिमुखादिगणोऽपाणिनीय इति–ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् (महा० ४।३।५८, वा० १) इति वार्त्तिकेन ज्ञाप्यते।

**प्रातिशाख्यम्। अव्ययीभावाच्चेति भवार्थे ञ्य इति माधवः**[1]–इति। उल्लिखितचरां परिकल्पनाम् आधृत्य चरणवाचिनः प्रतिशाखाशब्दादपि प्रातिशाख्यशब्दो व्युत्पादयितुं शक्यते। ततश्च प्रातिशाख्यविशेषश्चरणविशेषेण सम्बद्धो न तु शाखाविशेषेणेति स्पष्टम् अवगम्यते। तथा च–**प्रतिशाखासु भवं प्रातिशाख्यम् इति सम्भवाभिप्रायेण बहुवचनान्तयोगेनापि निर्वाहः**[2] इत्यनन्तव्याख्ययाप्यलम् इति मीमांसकचरणाः[3]। वाजसनेयिप्रातिशाख्यस्य भाष्यकारोऽनन्तभट्टः प्राह–**शाखायां शाखायां प्रति प्रतिशाखम्, प्रतिशाखं भवमिति प्रातिशाख्यम्**[4]–इति। तत्र प्रतिशाखम् इत्यत्र वीप्सार्थेऽव्ययीभावः[5]। तथा च चरणविशेषसम्बद्धा याश्च यावत्यश्च शाखाः, ताः सर्वा एकेनैव प्रातिशाख्येन व्याप्यन्त इति निर्गलितोऽभिप्रायः। अत एवानन्तः–**पञ्चदशसु शाखासु एकमेव कात्यायनसूत्रम्**[6]–इति सिद्धान्तम् उल्लिख्य सूत्रकारप्रवृत्तिज्ञापनैः प्रतिपादयाञ्चकार। यत्तु वासुदेवशरणः–वृक्षादीनां शाखा इवास्य वेदकल्परुहोऽवयवाः शाख्याः। शाख्यं शाख्यं प्रतीति प्रतिशाख्यम्। तदधिकृत्य कृतं प्रातिशाख्यम्[7]–इत्यवोचत्, तत्तुच्छम्, वेदावयवानामपि शाखाशब्देनैव (न तु शाख्यशब्देन) व्यवहारदर्शनात्, प्रातिशाख्यव्याख्यातृभिरीदृग्व्युत्पत्त्यनङ्गीकाराच्च।

पार्षदानि प्रातिशाख्यवाचीनि, तानि च चरणसम्बद्धानि बभूवुरिति **पदप्रकृतीनि सर्वचरणानां पार्षदानि**[8]–इति यास्कवचनेन,–**किं पार्षदानि? स्वचरणपर्षद्येव यैः प्रतिशाखं नियतम् एव पदावग्रहप्रगृह्यक्रमसंहितास्वरलक्षणम् उच्यते तानीमानि पार्षदानि प्रातिशाख्यानीत्यर्थः**[9]–इति दुर्गभाष्येण च सुतरां व्यज्यते। अपि च–**धर्मशास्त्राणां गृह्यग्रन्थानां च प्रातिशाख्यलक्षणवत् प्रतिचरणं पाठव्यवस्थोपलभ्यते**[10]–इति कुमारिलोऽपि प्रतिचरणं प्रातिशाख्यलक्षणम् अङ्गीचकार।

१. तत्त्व० पृ० २६०, अ० ४।३।५९ ॥
२. प्रतिज्ञापरिशिष्ट २।१ अ० भा०, पृ० ४१५ ॥
३. सं० व्या० इ० द्वितीयभाग, पृ० २८० ॥
४. वा० प्रा० १।१ अ० भा० ॥
५. अ० २।१।६ ॥
६. वा० प्रा० १।१ अ० भा० ॥
७. इण्डिया ग़ेज़ नोन टु पाणिनि, पृ० ३०२ पादटिप्पणी ॥
८. निरु० १।१७ ॥
९. निरु० १।१७ दुर्गं० ॥
१०. तन्त्रवार्त्तिक ५।१।३। हिं० सं० लि०, पृष्ठ ६३।

तस्यानुवदमानः प्राह अनन्तदेवः—**प्रतिपञ्चदशशाखायां भिन्नानि प्रातिशाख्यानि नोपदिष्टानि किन्तु श्रौतस्मार्तसूत्रमपि पञ्चदशशाखा-साधारणं समाम्नातम्**[१]–इति । एवञ्च शाखाविशेषं प्रति प्रातिशाख्य-प्रवृत्तिरिति मन्यमाना मैक्समूलर-विश्ववन्धुप्रभृतयः परास्ताः[२] ।

प्रातिशाख्यानां साधारणप्रतिपाद्यो विषयो वर्णोच्चारणं, पदपाठः, क्रमपाठः, सन्धिः स्वरश्च वर्तते । तैत्तिरीयप्रातिशाख्ये जटापाठः,[३] ऋक्प्रातिशाख्ये च छन्दोविचितिरप्यधिकम् उपलभ्यते । प्रतिपाद्य-विषयदृष्ट्यैव केचिद एतान् ग्रन्थान् शिक्षावेदाङ्गेऽन्तर्भावयन्ति, केचिच्च व्याकरणवेदाङ्ग इति प्रदर्शितचरम् । वस्तुतस्तूभयविषयत्वाद् उभयत्वमेषाम् ऊरीकर्तव्यम् । तथा च समभिव्याजहार वाजसनेयि-प्रातिशाख्यभाष्यकार उवटः–**वृद्धम् इदं शास्त्रम् अन्यानि शास्त्राण्य-पेक्ष्य, शिक्षाविहितं व्याकरणविहितं चास्मिन् शास्त्रे उभयं यतः प्रक्रियते**[४]–इति । गार्ग्यगोपालयज्वा चाप्यभिदधौ—

**शिक्षाव्याकरणानां यदयं विवरणात्मकः ।**
**ग्रन्थस्ततोऽत्र नातीव शब्दसंकोच इष्यते ॥**[५]

सामान्यतः प्रातिशाख्यानां व्याकरणात्मकत्वे सत्यपि तयोर्विशेषस्तु तिष्ठत्येव, स एव तावदुल्लिख्यते ।

### १. ३. व्याकरणप्रातिशाख्ययोर्भेदः—

व्याकरणेन स्वकालप्रसिद्धभाषाया वाक्यानि समस्तव्यस्तपदेषु, पदानि चोपसर्ग-धातु-प्रातिपदिकप्रत्ययागमादिषु विभज्यान्वाख्या-यन्ते । तथा चोक्तं महाभाष्ये-**सदन्वाख्यानाच्छास्त्रस्य**[६]–इति, **सच्छास्त्रे-णान्वाख्यायते**[७]–इति च । **शास्त्रेण करणेनाचार्यः स्मर्ता सद् विद्यमानं वस्तु निमित्तत्वेनान्वाचष्टे**[८]–इति च तत्रैव कैयटः । पाणिनिस्तु प्रधान-

---

१. प्रतिज्ञापरिशिष्ट २।१ अ० भा० ॥
२. हि० सं० लि०, पृ० ६२ । अ० प्रा०, भूमिका पृ० १३ ॥
३. कस्तूरिरङ्गाचार्य, तै० प्रा० भूमिका पृ० ६–१३ ॥
४. वा० प्रा० १।१६६ उ० भा० ॥
५. तै० प्रा० १।२१ वैदिकाभरणभाष्ये ॥
६. महा० १।१।६२, वा० १ ॥
७. महा० १।१।६२ ॥
८. प्रदीप १।१।६२ ॥

तया लौकिकभाषां व्याकुर्वाणोऽपि सुहृद् भूत्वा वैदिकशब्दान् अपि सामान्यतो बोधयामास। **व्याकरणं नामेयम् उत्तरा विद्या**[1], **सर्ववेद-पारिषदं हीदं शास्त्रम्**[2]–इत्यादिभिर्वचनैः पतञ्जलिर्ध्वनयति यद् नात्र शिक्षाविषया वेदविशेषविधयश्च संगृहीता इति। प्रातिशाख्यं पुनश्च-रणविशेषे कांश्चन सन्ध्यादिविधिविशेषान् व्यवस्थापयति, न व्या-करणम् इव विश्लेषणपुरःसरं पदसाधुत्वं प्रदर्शयति। अयमेव मौलिको भेदोऽस्य शास्त्रद्वयस्य वर्वर्ति। उवटः खल्वपि जगाद–**एवं शिक्षाछन्दो-व्याकरणैर्यत् सर्वासु शाखासु सामान्येन लक्षणमुच्यते तदेवास्यां शाखायाम् अनेन व्यवस्थाप्यत इत्येतत् प्रयोजनम् अस्याङ्गस्य। तथा चाथर्वणप्रातिशाख्य इदमेव प्रयोजनम् उक्तम्—एवम् इहेति च विभाषा-प्राप्तं सामान्येन (अ० प्रा० १।२)। अस्य सूत्रस्यायमर्थः–सामान्येन लक्षणेन यद् विकल्पप्राप्तं तदेवमस्यां शाखायां व्यवस्थितं भवतीति प्रातिशाख्यप्रयोजनम् उक्तम्**[3]–इति। प्रातिशाख्यकृतो व्याकरण-विचक्षणा आसन्निति तैर्विहिताः पदपार्ठनियमाः सुतरां द्योतयन्ति। अत एवाह वेनफी-महाशयः—प्रातिशाख्यानि सुविकसिताम् अवस्थाम् आपन्नं व्याकरणम् आश्रयन्ते[4]–इति।

## १. ४. ०. व्याकरणप्रातिशाख्ययोस्तन्त्राणि—

गुणपरिमाणोभयदृष्ट्या विपुलम् अनुपमं च व्याकरणवाङ्मयम् अद्यापि भारते वर्षे समुपलभ्यते। तथा च बेलवाल्करः प्राह—न्यूनतम-परिगणनया द्वादश संस्कृतव्याकरणसम्प्रदाया अद्यत्वेऽपि प्रचरन्ति, नाममात्रेण स्मृतान् अपि संकलय्य त्रिशतदेशीया ग्रन्थकृतः, मूलतद्-व्याख्यासहिताश्च सहस्रादधिकाः कृतयोऽस्मिन् क्षेत्र उपलभ्यन्ते[5]–इति। अर्वाक्कालिकाः केचन ग्रन्थकृतो नामग्राहं शाब्दिकान् तत्प्रो-क्तानि तन्त्राणि च समुदलिखन्। तथा हि—

**इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥**

---

१. महा० १।२।३२॥ २. महा० २।१।५८॥
३. ऋ० प्रा० १।१ उ० भा० पृ० २३॥
४. दि प्रातिशाख्याज़् आर बेस्ड ओन ग्रामर आफ़ ए वैरी एँडवांस्ड स्टेज। सिद्धेश्वरवर्मा, क्रिटिकल स्टडीज़—पृ० १५ उद्धृतम्॥
५. सिस्टम्स। आफ संस्कृत ग्रामर, पृ० १॥

इति वोपदेवः कविकल्पद्रुमेऽष्टौ वैयाकरणान् सस्मार[1]। श्रीतत्त्वविधौ तु नव व्याकरणतन्त्राणि स्मर्यन्ते। तद्यथा—

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**
**सारस्वतं चापिशलं शाकल्यं पाणिनीयकम्॥**[2]

बेलवाल्करस्तु स्वकाले लब्धप्रचारान् पाणिनीय-चान्द्र-जैनेन्द्र-शाकटायन-हेमचन्द्र-कातन्त्र-सारस्वत-वोपदेवीय-जौमर-सौपद्म-हरिनामामृत-प्रबोधप्रकाशाभिधान् द्वादश व्याकरणसम्प्रदायान् असूसुचत्[3]। एतेभ्यः सर्वेभ्योऽपि तन्त्रेभ्यः पाणिनीयं तन्त्रं स्वानेकविधं वैशिष्ट्यम् आदधानं प्रकृष्यत इति सर्वैः स्वीक्रियते। अस्यैव च वेदाङ्गत्वम् अप्यङ्गीक्रियते। तथा च प्राह मधुसूदनसरस्वती—**तदेतत् त्रिमुनि व्याकरणं वेदाङ्गं माहेश्वरम् इत्याख्यायते। कौमारादिव्याकरणानि तु न वेदाङ्गानि, किन्तु लौकिकप्रयोगमात्रज्ञानार्थानीत्यवगन्तव्यम्**[4]—इति।

प्रातिशाख्यानां तत्सदृशेतरलक्षणग्रन्थानां च पुरा काले महान् राशिः समवर्त्ततेति सम्प्रत्युपलभ्यमानप्रातिशाख्यादिषु स्मृतैर्नवपञ्चाशत्प्रवक्तृनामभिः सुतराम् अनुमीयते[5]। अद्यत्वे तु प्रातिशाख्येषु केवलम् ऋग्वाजसनेयि-तैत्तिरीय-मैत्रायणीय-सामाथर्वप्रातिशाख्यानि प्रातिशाख्यसदृशाश्चापरेऽष्टौ ग्रन्थाः समुपलभ्यन्ते, चत्वारि प्रातिशाख्यानि चाश्वलायन-वाष्कल-शाङ्खायन-चारायणीयनामकानि नामतः सूच्यन्त इत्याचार्यमीमांसकाः[6]। तत्र शुक्लयजुर्वेदस्य वाजसनेयिचरणस्य माध्यन्दिनीयादिपञ्चदशशाखासाधारणं कात्यायनप्रोक्तं वाजसनेयिप्रातिशाख्यं वर्तते, तच्चोवटानन्तभट्टाभ्यां कृताभ्यां टीकाभ्याम् उपेतं मुद्रितम् उपलभ्यते।

## १. ४. १. पाणिनीयाष्टाध्यायी-कात्यायनीयप्रातिशाख्ययोः स्वरूपम् (परिमाणम्)

पूर्वाचार्येभ्यः प्राप्तं स्वयं च सङ्कलितं महान्तं शब्दराशिम्

---

१. सं० व्या० इ० प्रथमभाग पृ० ६४॥
२. सं० व्या० इ० प्रथमभाग पृ० ६५॥
३. सिस्टम्स आफ् संस्कृत ग्रामर। ४. प्रस्थानभेद पृ० ७, ८॥
५. सं० व्या० इ० प्रथमभाग पृ० ६९–७२॥
६. सं० व्या० इ० द्वितीयभाग पृ० २८४, २८५॥

आश्रित्य भगवान्[1] पाणिनिराचार्यः स्वकीयं वैज्ञानिकं[2] तन्त्रं रचयामास। अष्टाध्यायात्मकत्वाद् अस्य नामधेयम् अष्टाध्यायी इति, अष्टकम् इति च प्रसिद्धम्। शब्दानुशासनम् इत्यपि समाख्या तन्त्रस्यास्य श्रूयते। वृत्तिसूत्रनाम्नापि पाणिनीयं तन्त्रं स्मर्यते[3]। अष्टाध्यायीपाठः प्राच्योदीच्यदाक्षिणात्यभेदेन त्रिविधोऽस्तीति काशिकाकारस्य पूर्वपाणिनीयापरपाणिनीयादिप्रयोगदर्शनात्[4] कैश्चित् परिकल्प्यते[5]।

पाणिनीयतन्त्रम् अष्टस्वध्यायेषु विभज्यते। तत्र प्रत्यध्यायं चत्वारः पादाः प्रतिपादं च विभिन्नसंख्याकानि सूत्राणि न्यस्तानि। काशिकास्थसूत्रपाठानुसारं सूत्रसंख्या त्वित्थम्—

| | | | | | |
|---|---|---|---|---|---|
| अथ शब्दानुशासनम्[6] | | | | | =१ |
| प्रत्याहारसूत्राणि[7] | | | | | =१४ |
| प्रथमाध्याये— | ७५, | ७३, | ९३, | ११० | =३५१ |
| द्वितीयाध्याये— | ७२, | ३८, | ७३, | ८५ | =२६८ |
| तृतीयाध्याये— | १५०, | १८८, | १७६, | ११७ | =६३१ |
| चतुर्थाध्याये— | १७८, | १४५, | १६८, | १४४ | =६३५ |
| पञ्चमाध्याये— | १३६, | १४०, | ११९, | १६० | =५५५ |
| षष्ठाध्याये— | २२३, | १९९, | १३९, | १७५ | =७३६ |
| सप्तमाध्याये— | १०३, | ११८, | १२०, | ९७ | =४३८ |
| अष्टमाध्याये— | ७४, | १०८, | ११९, | ६८ | =३६९ |
| | | | | पूर्णयोगः | =३९९८ |

१. भगवतः पाणिनेराचार्यस्य सिद्धम्। महा० ८।४।६८, वा०॥

२. नो वर्क हैज़ स्ट्रक डीपर रूट्स दैन हिज़ इन दि सायल आफ़ दि साइंटिफ़िक डिवेलपमैण्ट आफ़ इण्डिया—गोल्डस्टुकर (इण्डिया ऐज़ नोन टु पाणिनि, पृ० १, २ उद्धृतम्)। ३. सं० व्या० इ० प्रथमभाग पृ० २१३॥

४. का० ६।२।१०४॥ ५. सं० व्या० इ० प्रथमभाग पृ० २१२॥

६. पाणिनिकृतोऽयं योग इति श्रीमीमांसकाः। सं० व्या० इ० प्रथमभाग पृ० २०१–२०३॥ ७. प्रत्याहारसूत्राणि पाणिनिकृतानीति वर्णसमाम्नायविमर्शे प्रतिपादयिष्यते॥

सूत्रसंख्याम् अभिलक्ष्य सन्ति कतिपया विप्रतिपत्तयः। ता अत्र समासतः प्रदर्श्यन्ते । द्वात्रिंशदक्षरसम्मितसहस्रश्लोकपरिमाणात्मकः पाणिनीयो ग्रन्थ इति ह्वेनसाङ्गः, वैयाकरणनिकाये प्रसिद्धिश्च। पाणिनीयं तन्त्रं मूलतः पद्यात्मकम् आसीदिति मन्यमानाः स्कोल्डादयस्तु भ्रान्ताः[1], गद्यात्मकग्रन्थानां परिमाणबोधिकेयं प्राचीनशैलीति सर्वैरभिमतत्वात्। श्रीनिवासयज्वा पाणिनीयसूत्रसंख्यां निर्दिदेश—

**चतुःसहस्री सूत्राणां पञ्चसूत्री विवर्जिता ।**
**अष्टाध्यायी पाणिनीया सूत्रैर्माहेश्वरैः सह ॥**[2] इति ॥

श्रीशचन्द्रचक्रवर्ती स्वसम्पादितन्यासस्य भूमिकायाम् अष्टाध्यायीसूत्रसंख्यासूचकम् अज्ञातकर्तृकं श्लोकम् उपन्यस्यति—

**त्रीणि सूत्रसहस्राणि तथा नवशतानि च ।**
**षण्णवतिं च सूत्राणां पाणिनिः कृतवान् स्वयम् ॥**[3] इति ॥

साम्प्रतिकानां गवेषकाणां निर्णयस्त्वित्थम्—

चन्द्रकान्तपाण्डेयः प्रत्याहारसूत्राणि संयोज्य ३९९७ सूत्राणि काशिकावद् मन्यते।[4] वैद्यो, हरप्रसादशास्त्री च यथाकाशिकम्, गोल्डस्टुकरः—३९९६, मोनियरविलियम्सोऽपि तथैव, थम्वः—३९७६, तारानाथः—३९६५, हस्तलेखाः—३९८१ । कीलहार्नः—काशिकास्थे पाठे मूलतः सूत्राणां विंशतिरधिकेति निर्णिनाय। थीमेमहोदयस्तत्रैवैकं सूत्रम् अन्यत् संयोज्य काशिकास्थपाठ एकविंशतिः सूत्राणि मूलतोऽधिकानीति निरचैषीत्। माधवकृष्णस्तु तत्राप्येकं संयोज्य—काशिकास्थपाठे द्वाविंशतिः सूत्राणि मूलतोऽतिरिच्यन्त इति निरणैषीत्[5] ।

अथाष्टाध्याय्याः प्रतिपाद्यो विषयोऽध्यायक्रमेण समुपस्थाप्यते । प्रथमाध्यायस्य प्रथमे पादे संज्ञाः परिभाषाश्च, द्वितीये पादेऽतिदेशः, संज्ञापरिभाषम्, अशिष्यप्रकरणं[6] च; तृतीये पादे संज्ञापरिभाषम्

१. इण्डिया ऐज़ नोन टु पाणिनि, पृ० १९ ॥

२. स्व० सि० च० पृ० ३ ॥

३. काशिकाविवरणपञ्जिका, भूमिका पृ० ४ ॥

४. पाणिनि एण्ड हिज़ अष्टाध्यायी, पृ० १६ ॥

५. पाणिनि, कात्यायन एण्ड पतञ्जलि, पृ० २–७ ॥

६. माथुर्यां तु वृत्तावशिष्यग्रहणमापादमनुवर्तत इति पुरुषोत्तमदेव; (भाषावृत्ति १।२।५७) ॥

उपग्रहनियमश्च; चतुर्थे पादे संज्ञाः। द्वितीयाध्यायस्य प्रथमद्वितीय-पादयोः समासः; तृतीये पादे सुब्विभक्तयः; चतुर्थे पादे समासतिङ्-तद्धितविधिशेषाः। तृतीयाध्याये धातोर्विहिताः कृत्तिङ्प्रत्ययाः। चतुर्थाध्याये स्त्रीप्रत्ययास्तद्धितप्रत्ययाश्च। पञ्चमाध्यायेऽर्थविशेषे तद्धितप्रत्ययाः, स्वार्थिकाः समासान्ताश्च। षष्ठाध्यायस्य प्रथमे पादे धातुद्वित्व-सम्प्रसारणात्वागमादेशाः सन्धिः स्वरश्च; द्वितीये पादे समासस्वर; तृतीये पादे उत्तरपदे परतोऽलुक्, अतिदेशाः, आगमाः, सांहितिकदीर्घत्वं च; चतुर्थे पादेऽङ्गनिमित्ता विधयः। सप्तमेऽध्याये-ऽङ्गसम्बन्धिनो विकारागमादेशाः। अष्टमाध्यायस्य प्रथमे पादे पद-द्वित्वं पदस्वरश्च; त्रिपाद्यां पदविधयः प्लुतिः सन्धिश्च। इमे सर्वे विषयास्तत्तत्प्रकरणे सुसङ्गतया रीत्या विन्यस्ताः। यास्तु कैश्चित् प्रकरणानां विसङ्गतय उट्टङ्किताः, तास्तेषामेव सजातीयैः सुतरां समाहिताः[1]।

कालक्रमेणाष्टाध्यायीसूत्रपाठे पाठान्तराणि समजायन्त। आचार्य-युधिष्ठिरमीमांसकैः पाणिनीयसूत्रपाठेऽध्यर्द्धशतसंख्याकाः पाठभेदाः संकलिताः। तेषु पञ्चत्रिंशतोऽन्यान् स्वसङ्कलितान् संयोज्य भट्टा-चार्यः प्रकाशितवान्[2]। इमे पाठभेदाः प्रकारत्रयभाजः सन्ति। तथा हि–उभयथा ह्याचार्येण शिष्याः सूत्रं प्रतिपादिताः[3]—इत्यादिवचनैर्ज्ञापिताः प्रथमाः प्रवचनभेदजन्याः। जरद्भिरित्यपि पाठः केनचिदाचार्येण बोधितः[4]–इत्यादिशब्दैर्ज्ञापिता द्वितीया वृत्तिकृद्व्याख्याभेदजन्याः।[5] एवं चटकादैरग् इत्येतत् सूत्रम् आसीत् प्रमादात् चटकाया इति पाठः[6]–इत्यादिकथनैर्ज्ञापितास्तृतीयाः प्रमादजन्याः[7]।

---

१. पाणिनि, कात्यायन एण्ड पतञ्जलि, पृ० ४४; पा० व्या० अनु० प्रथमाध्यायः ॥

२. पा० व्या० अनु० पृ० ३७७-३९६ ॥

३. महा० १।४।१ ॥

४. पद० २।१।६७ ॥

५. तु०—दि टैक्स्ट आफ् अष्टाध्यायी ऐज् गिवन इन दि काशिका डिफर्स इन केस आफ ५८ रूल्स फ्राम दि टैक्स्ट नोन टु कात्यायन एण्ड पतञ्जलि-कीलहार्न (सिस्टम्स आफ् संस्कृत ग्रामर, पृ० ३७ उद्धृतम्) ॥

६. न्यास ४।१।१२८ ॥

७. सं० व्या० इ० प्रथमभाग पृ० २०७-२०८ ॥

अथ कात्यायनीय-प्रातिशाख्यस्य स्वरूपम् उपस्थाप्यते । प्रातिशाख्यम् इदं शुक्लयजुः-प्रातिशाख्यं (शुक्लयजुर्वेदप्रातिशाख्यम् इति वा), कात्यायनप्रातिशाख्यं (कात्यायनप्रातिशाख्यसूत्रम् इति वा), वाजसनेयिप्रातिशाख्यम् इत्येताभिः संज्ञाभिः स्मर्यते। कातीयप्रातिशाख्यम् इत्यप्यस्य नाम क्वचिद् हस्तलेखेषु समुपलभ्यते।[1] यस्तु माध्यन्दिनशाखीयप्रातिशाख्यम् इति गोभिलीयप्रयोगः,[2] स ब्राह्मण-ग्रामन्यायजन्यः । अस्य प्रातिशाख्यस्य प्रवक्ता कात्यायन आसीदिति- **इत्याह स्वरसंस्कारप्रतिष्ठापयिता भगवान् कात्यायनः**—इत्याष्टमिकेन सूत्रेण[3], ग्रन्थपरिसमाप्तौ च—**कात्यायनकृतौ**—इति वचनेन प्रकटीभवति ।[4]

अयमपि ग्रन्थः पाणिनेः शब्दानुशासनम् इवाष्टस्वध्यायेषु विभज्यते, पुनः प्रतिविंशति-सूत्रि खण्डं प्रकल्प्य सप्तत्रिंशत् खण्डाः क्रियन्ते, येषु द्विचत्वारिंशदुत्तरसप्तशतानि सूत्राणि निविष्टानीति वेबरमतम्[5] । कलकत्ता-मद्रास वाराणसीसंस्करणेषु प्रत्यध्यायं मुद्रिताः सूत्रसंख्यास्तद्योगश्चाधस्ताद् उपस्थाप्यते—

| अध्यायः | कलकत्तासं० | मद्राससं० | वाराणसी सं० (इन्दुसं०) |
|---|---|---|---|
| प्रथमाध्याये | १६९ | १६९ | १६९ |
| द्वितीयाध्याये | ६५ | ६५ | ६५ |
| तृतीयाध्याये | १५२ | १५१ | १५२ |
| चतुर्थाध्याये | १९७ | १९८ | १९६ |
| पञ्चमाध्याये | ४६ | ४६ | ४६ |
| षष्ठाध्याये | ३१ | ३१ | ३१ |
| सप्तमाध्याये | १२ | १२ | १२ |
| अष्टमाध्याये | ५५ | ५३ | ६९ |
| योगः | ७२७ | ७२७ | ७४० |

१. शुक्लयजुः-प्रातिशाख्यम् इन्दुसम्पादितम्, प्राक्कथन पृ० ७ ।।

२. क्रिटिकल स्टडीज़ ओन कात्यायनाज़ शुक्लयजुर्वेदप्रातिशाख्य, पृ०८८ ।।

३. वा० प्रा० ८।६८ ।।

४. वेंकटरामशर्मा : क्रिटिकल स्टडीज़ ओन का० शु० प्रा०, पृ० ८९ ।।

५. वाजसनेयिप्रातिशाख्य, प्रथमभाग, पृ० १८, इण्ट्रोडक्शन टु दि वा० प्रा० बाइ ए० वेबर, एस० एन० घोषाल-अनूदितम् ।।

इन्दुसम्पादितं वाराणसीसंस्करणम् अत्र प्रामाणिकम्, वेवरबनारस-कलकत्तासंस्करणान्यालोड्य हस्तलिखितकोशांश्च समाश्रित्य समालोचनात्मकदृष्ट्या सम्पादितत्वात्[1]। अतस्तदेवाश्रित्य सूत्रसंख्याभेदो विविच्यते। तृतीयेऽध्याये मद्राससंस्करणे—अभेश्च (वा० प्रा० ३।६५) इति सूत्रस्याभावाद् एकसंख्याया नैयूनम्। चतुर्थाध्याये कलकत्तासंस्करणे—वंशः (वा० प्रा० ४।२ इत्यतोऽग्रे) इति सूत्रम् अतिरिच्यते, विसर्जनीयाद् व्यञ्जनपरः (वा० प्रा० ४।१०५) इति च न विद्यत इति संख्यासाम्ये सत्यपि १६९ तमसूत्राद् आरभ्य संख्याया अशुद्धमुद्रणाद् एकसंख्याया भेदः समजनि। मद्राससंस्करणे तु—वंशः[2] (वा० प्रा० ४।२ इत्यतोऽग्रे) इति, हविर्दम्पत्योः साध्या दा[3] (वा० प्रा० ४।३१ इत्यतोऽग्रे) इति च द्वे सूत्रे अतिरिक्ते स्त इति संख्याभेदः संजातः। चतुर्थेऽध्याये वेबर-संस्करणे—न द्विरुक्तम् (वा० प्रा० ४।११६ इत्यतोऽग्रे) इति सूत्रम् अधिकं मुद्रितम्। अष्टमाध्याये सूत्रसंख्याभेदः सर्वाधिको दृश्यत आपाततः। तत्र कलकत्तासंस्करणे—अथातो वर्णसमाम्नायं व्याख्यास्यामः (वा० प्रा० ८।१) इत्येकम्, अ—इति (वा० प्रा० ८।३-७) इति पञ्च, ए—इति (वा० प्रा० ८।९-१२) इति चत्वारि, किते—पवर्गः (वा० प्रा० ८।१५-१९) इति पञ्च, यिति—इति (वा० प्रा० ८।२२) इत्येकम्, शिति इति (वा० प्रा० ८।२४) इत्येकम्—एवं संयोज्य सप्तदश सूत्राणि न संख्यायन्ते। तथा विभक्तिपरिज्ञानम् (वा० ८।४१ इत्यतोऽग्रे), अथ वर्णदेवताः (वा० प्रा० ८।६७ इत्यतोऽग्रे) इत्यनावश्यकं, पुरस्ताद् विन्यस्तत्वात्। सूत्रसंख्या ४९ इत्यत आरभ्यैका संख्याधिका मुद्रिता। इत्थं च ६९ इत्येषा संख्येन्दुसंस्करण उपलभ्यमानैव युक्ता। मद्राससंस्करणे खल्वपि-अ—इति (वा० प्रा० ८।३-७) इति पञ्चसूत्रीस्थाने एकं सूत्रम्, ए—इति (वा० प्रा० ८।९-१२) इति चतुःसूत्रीस्थाने एकम्, किति-पवर्गः (वा० प्रा० ८।१५-१९) इति पञ्चसूत्रीस्थाने एकम्, यत् किञ्चित् (वा० प्रा० ८।३३), वेदस्य—(वा० ८।४३), त्रयो—(वा० प्रा० ८।४४),

---

१. अस्य संस्करणस्यापि प्रामाणिकता सापेक्षैव, बहुत्राशुद्धिदर्शनात्। तद्यथा—ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् (वा० प्रा० १।६३) इत्यत्र हस्तग्रहणे—इति पाठो मुद्रितः।

२. अस्य योगस्यानन्तव्याख्या नोपलभ्यते॥

३. अस्य योगस्योवटव्याख्या नोपलभ्यते॥

क्रिया—(वा० प्रा० ८।६२), चतुर्दश—(वा० प्रा० ८।६३), भरद्वाज—(वा० प्रा० ८।६५), सर्व—(वा० प्रा० ८।६७) इत्येषां सूत्राणामभावः, तथा विभक्तिपरिज्ञानम् (वा० प्रा० ८।४१ इत्यतोऽग्रे) इत्येतत् सूत्रमधिकम्, अन्तिमसूत्रस्य सङ्ख्यामुद्रणाभावः—इत्थं षोडशसंख्याभेदः संजायत इन्दुसंस्करणात् । वेवरसंस्करणे—अथ वर्णदेवताः (वा० प्रा० ८।४७) इत्यत आरभ्य—वैश्वदेव (वा० प्रा० ८।५४) इति यावद् एकसूत्रत्वेनैव (सं० २७) मुद्रितम् ।

लघुकलेवरेऽस्मिन् ग्रन्थे प्रतिपाद्यविषयस्तु विभागश इत्थम् उपन्यस्यते । प्रथमेऽध्याये-शब्दाभिव्यक्तिः, स्वाध्यायाध्ययनविधिः, शिक्षा, संज्ञाः, परिभाषाश्च । द्वितीयेऽध्याये-प्रधानतः पदस्वरः, प्रसङ्गतो वाक्यस्वरः । तत्रापि प्रतिपादनक्रमोऽयम्—अनुदात्तत्वम्, आद्युदात्तत्वं, द्व्युदात्तत्वं, त्र्युदात्तत्वं, सर्वोदात्तत्वम्, अन्तोदात्तत्वम् इति । तृतीयेऽध्याये सन्धिः, तत्रायं क्रमः–विसर्जनीयविकाराः, सकारागम-षत्वणत्व-दीर्घत्वनकारविकारादयश्च । अत्र कांश्चन विसर्जनीयविकारान् वर्जयित्वा, अन्ये विकारा इतौ न भवन्ति[1] । अतएव चतुर्थाध्यायः पृथक् क्रियते । तथा चोवटानन्ताभ्यां पुरातनव्याख्योद्धृता—

**अनितावध्याय इति कृतं सूत्रं यतः पुरा ।**
**अतस्तदवधिज्ञप्तिः क्रियतेऽध्यायसंख्यया ॥**
**अत्रावधिसमाधीतं पदमन्तर्विकारि यत् ।**
**आचार्येणोच्यते तस्य प्रागुक्तवादि प्रयोजनम् ॥**[2] इति ॥

चतुर्थाध्याये–मकारनकारविकाराः, पदपाठे इतिव्यवधानं पदावृत्तिश्च, विसर्जनीयविकाराः, स्वरसन्धिः, प्रकृतिभावः, व्यञ्जनसन्धिः, एकादेशस्वरः, संक्रम-क्रम-विक्रम-स्थितोपस्थितादिविषयाः । पञ्चमेऽध्याये–अवग्रहस्य विधिप्रतिषेधौ । षष्ठेऽध्याये-वाक्ये आख्यातोपसर्गस्वरः । सप्तमेऽध्याये-अवसानानि (पदान्तस्येतौ परतः सन्धिः) । अष्टमेऽध्याये-वर्णसमाम्नायः, स्वाध्यायस्याध्ययनविध्यधिकारिप्रयोजनानि, वर्णदेवताश्च ।

कतिपये विसंवादाः सूत्रविपर्यासाः पाठभेदाश्चास्मिन् ग्रन्थे विद्वद्भिः परिलक्षिताः, तेऽत्र विभाव्यन्ते । वेवरोऽस्य ग्रन्थस्य सप्तमाष्ट-

---

१. अनितावध्याये । वा० प्रा० ३।१९ ॥
२. वा० प्रा० ४।१ उ० भा०, अ० भा० ॥

मावध्यायौ प्रक्षिप्तौ प्रतिपादयाम्बभूव, तत्र चेमान् हेतून् उपन्यस्तवान्।[1]

(१) परिपूर्वस्य ग्रहधातोः प्रयोगो यदर्थकः सप्तमेऽध्याय[2] उपलभ्यते, तदर्थकोऽन्यत्रास्मिन् ग्रन्थे नोपलभ्यते, ऋक्प्रातिशाख्ये खलूपलभ्यते। क्रियावाचकम् आख्यातम्[3] इति श्लोकश्च ऋक्प्रातिशाख्ये[4] समुपलभ्यते।

(२) प्रथमाध्याये निर्दिष्टस्य वर्णसमाम्नायस्य[5] आष्टमिकेन बहुत्र विसंवादो दृश्यते, पुनरावृत्तिश्च। आष्टमिकी श्लोकशैली नान्यत्र शास्त्रे दृश्यते।

(३) वाजसनेयिप्रातिशाख्यकार एकेषां मतेन ळ ळ्ह वर्णौ स्वीकरोति[6], न तु जिह्वामूलीयोपध्मानीयौ। ळ्ळ्हजिह्वामूलीयोपध्मानीयादीनां गौणरूपेणोपन्यासः[7] तत्प्रतिपादकसूत्रप्रक्षेपम् अनुमापयति।

वेंकटरामशर्मा तु—लिपिकरदोषेणाध्यायविपर्यासः समजनि, वस्तुतोऽष्टमोध्यायः प्रथमः[8]—इति विसङ्गतिं परिहरति।

कांश्चन सूत्रविपर्यासान् अपपाठांश्च व्याख्याकारौ सूचयामासतुः। तथा च–असस्थाने मुदि द्वितीयं शौनकस्य (वा० प्रा० ४।१२०) इत्यत्र प्रावोचताम् उवटानन्तौ—**केचिदत्र 'तृतीयामवसाने च' इत्येतत् सूत्रं पठन्ति। सोऽपपाठः, यतः—प्रथमोत्तमाः पदान्तीयाः (वा० १।८५) इत्यधस्ताद् उक्तम्**—इति। उवटश्च–एक **एतत्सूत्रं पठन्ति। सोऽपपाठः। पूर्वेणैव सिद्धत्वात्**[9]–इत्यूचे। सूत्राणां नैयूनम् आधिक्यं च निर्दशितचरम्। इन्दुसम्पादिते संस्करणे पादटिप्पणीषु पञ्चदशाधिकद्विशतसंख्यामिताः पाठभेदाः प्रदर्शिताः।

---

१. एस० एन० घोषाल : वा० प्र०, प्रथमभाग, पृ० २१-२४ ॥
२. कण्ठ्यस्वरम् एकारेण परिगृह्णीयात् प्लुतवर्जम् (वा० प्रा० ७।२) ॥
३. वा० प्रा० ८।६२ ॥ ४. ऋ० प्रा० १२।२५ ॥
५. वा० प्रा० १।३४ इत्यत आरभ्य ॥
६. वा० प्रा० ४।१४४ ॥
७. वा० प्रा० ८।४५,४६ ॥
८. क्रिटिकल स्टडीज़ ओन का० शु० प्रा०, पृ० ६८ ॥
९. असौ च शाकटायनः। वा० प्रा० ४।१२७ उ० भा० ॥

## १. ५. ०. शैली-विमर्शः—

भगवता पाणिनिना स्वकाले विद्यमानं वाङ्मयं दृष्ट-प्रोक्तोपज्ञात-कृत-व्याख्यातभेदेन पञ्चधा विभक्तम्।[1] तत्र प्रोक्तत्वं नाम स्वयम् अन्येन वा कृतस्याध्यापनेनार्थव्याख्यानेन वा प्रकर्षेण प्रकाशितत्वम्।[2] पाणिनीयशास्त्रं कात्यायनीयप्रातिशाख्यं च प्रोक्तवाङ्मयेऽन्तर्भाव्येते[3]। एवं च शास्त्रद्वयेऽपि स्वकीयः प्राक्तनश्चांशो विद्यते। तथा चाह पतञ्जलिः—**पूर्वसूत्रनिर्देशः**[4]—इति। कैयटश्च व्याचष्टे—**पूर्वशब्देन पूर्वाचार्यकृतं व्याकरणम् उच्यते**—इति। काशिकाकारोऽप्याह—**व्यक्ति-वचने इति लिङ्गसंख्ययोः पूर्वाचार्यनिर्देशः, तदीयम् एवेदं सूत्रम्**[5]—इति। यद्यपि प्रोक्तग्रन्थेषु विभिन्नाचार्याणां सामग्र्याः स्वरूपतः संग्रहणाच् छैलीनिर्धारणम्[6] अतिदुष्करं भवति,[7] तथाप्यत्र तथा प्रयासो विधास्यते यथा शास्त्रयुगलस्य प्रतिपादनपद्धतिः सुव्यज्येत।

### १. ५. १. सूत्रात्मकता—

**ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः।**
**लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः॥**[8]

इति न्यायम् आश्रित्य प्राचीनैः शास्त्रकारैः सूत्रशैल्या शास्त्राणि विरचितानि। सूत्रस्वरूपं तु विपश्चिद्भिरित्थं प्रस्तूयते—

**लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।**
**सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥**

वायुपुराणादिष्वपि—

---

१. दृष्टं साम। अ० ४।२।७, तेन प्रोक्तम्। अ० ४।३।१०१, उपज्ञाते। अ० ४।३।११५, कृते ग्रन्थे। अ० ४।३।११६, तस्य व्याख्यान इति…। अ० ४।३।६६॥ २. का०, पद० ४।३।१०१॥

३. सं० व्या० इ० प्रथमभाग पृ० २४८-२४९॥ डा० मंगलदेवशास्त्री, संस्कृतसाहित्य में ग्रन्थ प्रणयन, सारस्वती सुषमा (जन० १९४९) पृ० ४४॥

४. महा० ४।१।१४॥ ५. का० १।२।५१॥

६. शीले (स्वभावे) भवा समवधानपूर्विका प्रवृत्तिः—कैयटः, प्रदीप हयवरट्सूत्रे। ७. डब्लू० डी० व्हिटने : दि वेद इन पाणिनि, पृ०–१॥

८. पू० मी० २।१।३२ शाबरभाष्ये॥

**अल्पाक्षरम् असन्दिग्धं सारवद् विश्वतो मुखम् ।**
**अस्तोभम् अनवद्यं च सूत्रं सूत्रविदो विदुः ॥**[1] इति ॥

सूत्रेष्वेतान् विशेषान् अभिसमीक्षमाणः प्राह पतञ्जलिः—**सूत्रत एव हि शब्दान् प्रतिपद्यन्ते । आतश्च सूत्रत एव, यो ह्युत्सूत्रं कथयेन्नादो गृह्यते**[2]–इति । एतन्मूलकमेव—**सूत्रेष्वेव हि तत्सर्वं यद् वृत्तौ यच्च वार्त्तिके**[3]–इति कुमारिलोक्तिः । पाणिनीयाष्टकं कात्यायनीयप्रातिशाख्यं चेत्युभे शास्त्रे सूत्रशैल्या रचिते, उभयत्र च पूर्वोद्धृतं सूत्रलक्षणं सर्वथा समन्वेति ।

वेंकटरामशर्मा तु–अल्पाक्षरम् इत्यादिसूत्रलक्षणं वाजसनेयिप्रातिशाख्यसूत्रेषु न समन्वेति[4]–इत्याह । निदर्शनरूपेण ये दोषाः शर्ममहोदयेनोपक्षिप्तास्तेऽत्र समाधीयन्ते । तत्र–प्रणवार्थशब्दप्रयोगमात्रप्रतिपादनाय प्रातिशाख्यकारः चतुःसूत्रीं[5] रचयामासेत्यल्पाक्षरत्वं विहन्यते–इति प्रथम आक्षेपः । वस्तुतोऽत्रासन्देहार्थः प्रपञ्चः क्रियते, स च न दोषाय । तथा चाह महाभाष्यकारः—**ते वै खल्वपि विधयः सुपरिगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च**[6]–इति । एकपदद्विपदत्रिपदचतुष्पदानेकपदाः पादाः (वा० प्रा० १।१५७) इति सूत्रम् अनावश्यकम्–इति द्वितीय आक्षेपः । प्रासङ्गिकम् एतत्, तर्कतस्तु बहूनि पाणिनीयसूत्राणि महाभाष्यकृता प्रत्याख्यातानि, पुनरप्यल्पमतिबोधनार्थानि तानि स्वीक्रियन्त एव । प्रयतः, शुचौ (वा० प्रा० १।२०,२१) इति सूत्रद्वयम् अष्टमेऽध्याये पुनरावर्त्यते-शुचिना, शुचौ देशे (वा० प्रा० ८।३४, ३५) इति सूत्रयुगलेनेति तृतीय आक्षेपः । अष्ठमाध्यायस्य स्थितिः सन्दिग्धा, व्याख्यानान्तरं वा शरणम् । चतुर्थ आक्षेपो व्याख्याविषयकः । व्याख्यायाः संक्षेपविस्तारविषये व्याख्याकारस्य दर्शनमेवानिच्छतापि स्वीकर्तव्यम् इति दोषाभावः । कतिपयानि सूत्राणि दुरवबोधानि, तद्यथा-यत्तन्न (वा० प्रा० १।५), सङ्करोप (वा० प्रा० १।८), शरीरात् शरीरम्, शरीरे (वा० प्रा० १।१२, १४), द्वौ

---

१. वा० पु० ४६।१४२ ॥ २. महा० पस्पशा० ॥
३. तन्त्रवा० पृ० ६६ ॥
४. क्रिटिकल स्टडीज़ ओन का० शु० प्रा०, पृ० ६७,६८ ॥
५. वा० प्रा० १।१६-
६. महा० ६।३।१४ ॥

(वा० प्रा० १।१२९) इति पञ्चम आक्षेपः। सूत्राणि सर्वत्रैव व्याख्यानम् अपेक्षन्ते। अतएव–**व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्**[1]–इति महाभाष्यकारोक्तिः सङ्गच्छते। एवञ्चोभयशास्त्रयोः सूत्राणि लक्षणानुरूपाण्येवेति निष्कर्षः।

सूत्राणि षड्विधानीति श्रूयते। तथा हि—
**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**प्रतिषेधोऽधिकारश्च षड्विधं सूत्रलक्षणम्** ॥ इति ॥

तत्र 'अतिदेशम्' अपि संयोज्य केचित् सूत्राणां सप्तविधत्वम् आतिष्ठन्ते। निपातनसूत्राणि विधिसूत्रेभ्यो [2]विलक्षणानीति तान्यष्टमे प्रविभागे शक्यन्ते न्यसितुम्। वर्णसमाम्नायसूत्राणि (पाणिनीयतन्त्रे प्रत्याहारसूत्राणीति प्रसिद्धानि) नवमे विभागे सुसंग्रहाणि स्युः। इमे नवापि प्रकाराः पाणिनीयतन्त्रे कात्यायनीय-प्रातिशाख्ये च समुपलभ्यन्ते, तद्यथा—

| सं० सूत्र-प्रकारः | पाणिनीयाष्टके | वाजसनेयिप्रातिशाख्ये |
|---|---|---|
| (१) संज्ञा | परःसन्निकर्षःसंहिता (१।४।१०९) | वर्णानामेकप्राणयोगः संहिता (१।१५८) |
| (२) परिभाषा | विप्रतिषेधे परं कार्यम् (१।४।२) | विप्रतिषेध उत्तरं बलवदलोपे (१।१५९) |
| (३) विधिः | इको यणचि (६।१।७७) | स्वरे भाव्यन्तःस्थाम् (४।४५) |
| (४) निषेधः | न पदान्ताट्टोरनाम् (८।४।४२) | न परुषः परुषि (३।३७) |
| (५) नियमः | पतिः समास एव (१।४।८) | उदात्तमयोऽन्यत्र नीच एव (१।१५०) |
| (६) अतिदेशः | स्थानिवदादेशोऽनल्विधौ (१।१।५६) | अवग्रहः पदान्तवत् (१।१५३) |
| (७) अधिकारः | संहितायाम् (६।१।७२) | संहितायाम् (३।१) |
| (८) निपातनम् | सूत्रं प्रतिष्णातम् (८।३।९०) | दुःष्वप्न्यम् (३।७३) |
| (९) वर्णसमाम्नायः | अ इ उ ण् ॥१॥ | अ इति आ इति आ३ इति (८।३) |

१, प्रत्याहाराह्निके लण्सूत्रे महाभाष्यम् ॥ २. प्रदीप ५।१।५९ ॥

## १. ९. २. प्रत्याहारः—

प्रत्याहारो नाम संक्षेपः । तथा च व्युत्पादयति हरदत्तः—प्रत्याह्रियन्ते संक्षिप्यन्तेऽस्मिन् वर्णा इति प्रत्याहारः, विशिष्टानुपूर्वीको विशिष्टानुबन्धयुक्तश्चाक्षरसमाम्नायः[१]–इति । एवं हलादयः संज्ञाः प्रत्याहारशब्देन संगृह्यन्ते । **प्रत्याहारार्थो वर्णोऽनुबन्धो व्यञ्जनम्**[२]— इति सूत्रे ऋक्तन्त्रकारः प्रत्याहारशब्दं प्रयुयुजे । पाणिनिस्तु कण्ठतः प्रत्याहारशब्दम् अव्याहरन्नपि प्रत्याहारशैलीं भृशं समाश्रयति, प्रत्याहाररचनाप्रक्रियां च विधत्ते[३] । पाणिनीयतन्त्रे प्रत्याहारप्रयोजनं निर्दिशति महाभाष्यकारः—**प्रत्याहारो वृत्त्यर्थः**[४]—इति । अस्य च–प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थं इत्यभिप्रायः[५] । अस्याः प्रत्याहारशैल्या आविष्कारकः पाणिनिरेवेति बर्नेलः[६] । मङ्गलदेवशास्त्रिमहोदयास्तु नैतत् सहन्ते, पाणिनेः प्राग्वर्त्तिषु उणादिसूत्र-फिट्सूत्र-परिभाषापाठेषु प्रत्याहारप्रयोगं प्रदर्शयन्तश्च स्वपक्षं पोषयन्ति[७] । पाणिनीयतन्त्रे आक्षरसमाम्नायिकास्तद्व्यतिरिक्ताश्चेति द्विविधाः प्रत्याहाराः प्रयुज्यन्ते । तत्राक्षरसमाम्नायिका एकचत्वारिंशत् प्रत्याहारा अष्टाध्याय्याम् आचार्येण प्रयुक्ताः । जयादित्यस्तान् संक्षेपेण निर्दिशति—

**एकस्मान् ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः ।**
**ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः ।।**[८] इति ।।

पुरुषोत्तमदेवः खल्वप्यनुबन्धक्रमेण सङ्गृह्णाति—

**एकं त्रीणि पुनश्चैकं चत्वार्येकं त्रयं त्रयम् ।**
**एकं द्वे षट् तथैवैकं चतुः पञ्च षडेव च ।।**[९] इति ।।

तचा च–एङ् यञ्, अण्, छव्, अट्; झष्, भष्; अक्, इक्, उक्; अण्, इण्, यण्; अम्, यम् ङम्; अच्, इच्, एच्, ऐच्; यय्, मय्,

---

१. पद० प्रथमभाग पृ० १८ ।।

२. ऋ० त० १।३ ।।

३. अ० १।१।७१ ।।

४. महा० पस्पशा० ।।

५. तत्रैवोद्योतः ।।

६. दि इन्वेंशन आफ़ दि शिवसूत्राज़ एण्ड आफ़ यूज़ आफ़ दि प्रत्याहाराज़ फोर ग्रुप्स आफ़ टर्मिनेशन—(ओन दि ऐन्द्र स्कूल—पृ० ३९) ।

७. प्रौसीडिंग्स आफ़ फोर्थ ओरियण्टल कान्फ्रेंस, पृ०४६५-४७४ ।।

८. काशिका प्रत्याहारसूत्रान्ते ।।

९. भाषावृत्तिः पृ० १ ।।

झय्, खय; यर्, झर्, खर्, चर्, शर्; अश्, हश्, वश्, झश्, जश्, बश्; अल्, वल्, हल्, रल्, झल्, शल्–इतीमे प्रत्याहारौ आक्षरसमाम्नायिकाः। अत्र पूर्वपरणकारद्वयेन द्वा अण्–प्रत्याहारो गण्येते। काशिकाकारो लण् इति प्रत्याहारसूत्रे रप्रत्याहारमपि स्वीचकार, परं प्रत्याहार-परिगणने तस्य विस्मरणं तदयुक्ततामेव ज्ञापयति। नागेशोऽपि रप्रत्याहारकल्पनां प्रत्याचख्यौ[1]। आक्षरसमाम्नायिकेभ्यो व्यतिरिक्तास्तु प्रकृतिप्रत्ययसंक्षेपरूपाः प्रत्याहाराः पाणिनिना प्रयुयुजिरे। ते खल्वप्यत्रोपन्यस्यन्ते–सुट् (अ० १।१।४४) इति स्वादयः पञ्च प्रत्ययाः, सुप् (अ० १।४।१४) इति स्वादय एकविंशतिः प्रत्ययाः, तिङ् (अ० १।४।१४) इति तिवादयोऽष्टादश प्रत्ययाः, तङ् (अ० १।४।१००) इति तादयो नव प्रत्ययाः, आप् (अ० ७।२।११२) इति टाप्रत्ययस्याकारात् प्रभृति सुपः पकारं यावत् प्रत्ययाः, तृन् (अ० २।३।६९) इति लटः शतृशानचौ० (अ० ३।२।१२४) इत्यारभ्या तृनः (अ० ३।२।१३५) नकारात् प्रत्ययाः, कृञ् (अ० ३।१।४०) इति कृभ्वस्तियोगे० (५।४।५०) इत्यारभ्या कृञो द्वितीय–(अ० ५।४।५८) इत्यस्मात् कृभ्वस्तयः प्रकृतयः। तृन्कृञ्-प्रत्याहारौ वृत्तिभाष्यादिसम्मतावपि सन्तौ न पाणिन्यभिमतौ, मध्यवर्त्तिग्रहणे प्रत्याहारान्तरवैलक्षण्याद् इति देवस्थली[2]।

वाजसनेयिप्रातिशाख्ये यद्यपि तिङ् इत्यस्य प्रत्याहारस्य प्रयोग उपलभ्यते[3] तथाप्यस्मिन् शास्त्रे प्रत्याहारशैली नोपयुज्यते। पाणिनेराक्षरसमाम्नायिकप्रत्याहाराणां स्थाने प्रातिशाख्यकारः कात्यायनो लाघवार्थं सिमादीर्वर्णसंज्ञा व्यवहरति।

### १. ५. ३. अनुबन्धाः—

वार्त्तिककार–कात्यायनात् प्रभृत्यद्य यावद् वैयाकरणैः प्रयुज्यमानोऽप्यनुबन्धशब्दः पाणिनिना न प्रायोजि, अस्य स्थाने च 'इत्'-शब्दः संज्ञात्वेन व्यवाहारि।[4] इत्-संज्ञा चान्वर्थेति चान्द्रवृत्त्या समवगम्यते। तथा हि–एतीति इत्। गच्छति, न तिष्ठति, लुप्यत इत्यर्थः[5]—

---

१. बृहच्छब्द० प्रथमभाग पृ० ७; उद्योत १।१।९ ॥

२. अनुबन्धाज़ आफ़ पाणिनि, पृ० ११,१२ ॥

३. वा० प्रा० १।२७ ॥

४. अ० १।३।२ ॥ ५. चान्द्र० १।१।५ ॥

इति। इतिशब्दस्य संक्षिप्तरूपम् इत्शब्दः, इत्थं चायं साङ्केतिक-वर्णार्थक इति मैकडानलमतं तु माधवकृष्णो निपुणं समीक्ष्य प्रत्याख्यातवान्[१]।

इत्पर्यायोऽनुबन्धशब्दः—नासिकाम् अनुगत इत्यनुनासिक[२] इत्यनुकृत्या बन्धम् अनुगत इत्यनुबन्धः[३]—इति व्युत्पाद्यते कैश्चित्। वस्तुतस्तु-अनु समीपं बध्यत आसज्यत इत्यनुबन्धः—इति व्युत्पत्तिरेव रुचिरतरा, पुरस्तादप्यासज्यमानानां वर्णानां संग्रहणात्। कातन्त्र-टीकाकारस्तु परिकल्पयामास—अनुबध्यत इति कर्मणि घञ्। अनुपूर्वो बन्धिर्विलोपने वर्त्तते, यथाग्नीषोमीयो गौरनुबध्यताम्[४]—इति।

पाणिनीयतन्त्रेऽनुबन्धानां प्रभूतः प्रयोग उपलभ्यते। अनुबन्ध-प्रयोगशैली पाणिनेः प्रागपि सुविकसिता बभूवेति महाभाष्यादिग्रन्थानाम् अग्रोद्धृतवचनैः सुव्यज्यते तथा हि—**पूर्वसूत्रेषु येऽनुबन्धा न तैरिहेत्कार्याणि क्रियन्ते**[५]—इति पतञ्जलिः। **धेनुरनञि ठकम् उत्पादयति**[६]—इत्यापिशलिविधावनुबन्धप्रयोगः। **आङ्पूर्वाद् गमेः**[७]—इति यास्कस्य सानुबन्धकस्याङः प्रयोगः। **पूर्वाचार्यास्तु डावतुं विदधिरे**[८]—इति कैयटः। अन्यत्र खल्वपि कैयटः प्राह—**तथा च पूर्वाचार्याणां सानुबन्धकप्रत्ययस्य विधानम्। आङ् इति पूर्वाचार्यप्रक्रियया तृतीयैक-वचनग्रहणम्**[९]—इति। एवं चानुबन्धासञ्जनं यद्यपि न पाणिन्युपज्ञं, तथाप्यनुबन्धानां नूतनव्यवस्थाया आविष्कारकः पाणिनिरेवेति पूर्वोद्धृतमहाभाष्यवचनाद् अनुमीयते[१०]।

वाजसनेयिप्रातिशाख्येऽपि बहुषु स्थलेष्वनुबन्धप्रयोगशैली परिलक्ष्यते। तद्यथा—तिङ् (वा० प्रा० १।२७), आङ् (वा० प्रा० ६।२४), एत्, ओत् (वा० प्रा० १।११४; ४।६०), वांसौ (वा० प्रा०

---

१. पाणिनि, कात्यायन एण्ड पतञ्जलि, पृ० २४॥

२. श० कौ० १।१।८॥

३. अनुबन्धाज् आफ् पाणिनि, पृ० १॥

४. कातन्त्र टीका ४।४।३१॥ टैक० टर्म्स, पृ० १३६॥ डि० सं० ग्रा०, पृ० २४॥

५. महा० ७।१।१८॥

६. महा० ४।२।४५॥

७. निरु० ११।२४॥

८. प्रदीप ५।२।३९॥

९. प्रदीप ६।४।१४१॥

१०. दि इन्वेंशन आफ् ए न्यू सिस्टम आफ् अनुबन्धाज्—(ओन दि ऐन्द्र स्कूल, पृ० ३९)॥

५।११) ईदृशाः स्वल्पप्रयोगाः प्रातिशाख्यकृतः कात्यायनस्यानुबन्ध-शैल्या सह परिचयमात्रं ध्वनयन्ति । पाणिनीयमार्गे तु पादमात्रमपि विनानुबन्धैर्न शक्यते क्रमितुम् । अत एव तस्येत्संज्ञारम्भो न्याय्यः । ऐ औ झ ठ ढ थ द ध फ ब म ह इत्येतान् वर्णान् परित्यज्य पाणिनिः सर्वानन्यान् आद्यन्तमध्यस्थान् एकशो द्विशः (त्रि, टु, डु, इर्) चानु-बन्धरूपेण प्रयुयुजे । बहुप्रयोजनाः पाणिनीया अनुबन्धाः प्रयोजनानु-सारं वर्गीकृत्येह संक्षेपत उपस्थाप्यन्ते—

(१) प्रत्याहारार्थाः—अच्-हल्-तिङ् इत्यादिषु चलङादयः (अ० १।१।७१) ।

(२) रूपग्रहणार्थाः—(क) तत्कालग्रहणार्थाः—अत्-इत् इत्या-दिषु तकारः (अ० १।१।७०) ।

(ख) सवर्णग्रहणार्थाः — कुचुटुतुपुषूकारः (अ० १।१।६९) ।

(३) विशेषणार्थाः—श्नमादिषु शकारः (अ० ६।४।२३) ।

(४) सामान्यग्रहणार्थाः—ङीप्, ङीष्, ङीन् इत्यत्र ङकारः (अ० ४।१।१) ।

(५) सामान्यग्रहणाविघातार्थाः—क्यच् (क्यङ्-क्यष्) इत्यत्र चकारः (अ० १।४।१५) ।

(६) स्वरार्थाः—ण्यत्-ण्वुल्-अनीयर् इत्यादिषु तलरेफादयः (अ० ६।१।१८५, १९३, २१७) ।

(७) विध्यर्थाः—अणादिषु णादयो वृद्धयर्थाः (अ० ७।२।११५), शीङ् चिञादिषु ङञादय आत्मनेपदार्थाः (अ० १।३।१२, ७२), कुड्यादिष्विकारो नुमर्थः (अ० ७।१।५८) ।

(८) निषेधार्थाः—क्त-चङादिषु कङौ गुणनिषेधार्थौ (अ० १।१४) ।

(९) संज्ञार्थाः—शबादिषु शकारः सार्वधातुकसंज्ञार्थः (अ० ३।४।११३), घसादिषु सकारः पदसंज्ञार्थः (अ० १।४।१४) ।

(१०) आदेशार्थाः—शादिषु शकारः सर्वादेशार्थः (अ० १।१।५५), अनङादिषु ङकारोऽन्त्यादेशार्थः (अ० १।१।५३) ।

(११) देशनियमार्थाः—अट्-मुक्-नुम् इत्यादिषु टकमा आद्य-न्तमध्यनियामकाः(अ० १।१।४६, ४७) ।

(१२) इत्संज्ञापरित्राणार्थाः—वति-वनीत्यादिषु अन्त्य इकारस्त-कारनकारादीनाम् इत्संज्ञायाः परित्राणार्थः (अ० १।३।३) ।

(१३) मुखसुखार्थाः—च्लि-सु-इत्यादिषु इकारोकारादयः, आत्-इत्यादिषु च तकारो मुखसुखार्थः[1] । मुखसुखार्थानां वर्णानाम् इत् संज्ञा न भवति, उच्चारणमात्रफलत्वात्, ते स्वत एव निवर्त्तन्त इति काशि-काकारादीनां मतम् । तथा चाह काशिकाकारः—**तासिसिचोरिदित्कार्यं नास्तीत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते**[2] । नागेशस्तु खलू-च्चारणार्थानामपि वर्णानाम् इत्संज्ञाम् आतिष्ठते । तथा हि—**दिव औदिति । यद्यप्ययमुच्चारणार्थस्तथापि समभिव्याहृतवर्णोच्चारणे सहायसम्पादकतया तस्य चारितार्थ्येन विधेयविषये विशिष्टस्यापि विधेय-त्वसम्भावनासत्त्वाद् इत्संज्ञालोपयोः प्रवृत्तयोर्बाधे मानाभावाद् उच्चा-रणार्थानाम् अपीत्वमस्त्येव । किं च तदभावे उच्चारितस्य निवृत्तिः कथं स्याद् इति भावः । एतेनोच्चारणार्थानाम् इत्संज्ञा नेति नव्योक्तिः परास्ता**[3]–इति ।

### १. ५. ४. संज्ञापरिभाषम्—

शास्त्रेषु लाघवार्थं स्पष्टप्रतिपत्त्यर्थं च संज्ञापरिभाषम् आश्रीयते । पाणिनीयतन्त्रे वाजसनेयिप्रातिशाख्ये च संज्ञाः परिभाषाश्च यथेष्टम् उपयुज्यन्ते । उभयत्र शास्त्रोदये संज्ञाः परिभाषाश्चोपन्यस्यन्ते । संज्ञा-परिभाषापूर्वकप्रतिपादनं यद्यपि द्वयोरप्याचार्ययोर्नापूर्वम्, तथापि कश्चन नवीनोंऽश उभयत्र दृश्यते । आचार्यद्वयप्रयुक्तेयं शैली संज्ञा-परिभाषाविमर्शाभिधे तृतीयेऽध्याये विस्तरेण निरूपयिष्यते ।

### १. ५. ५. गणपाठः—

गणो नाम समूहः । शाब्दिका आचार्याः स्वशास्त्रेषु लाघवं सम्पा-दयितुं समानकार्यभाजः शब्दांस्तावत् पृथक् पेठुः, तेषां च प्रथमशब्देन कार्यविशेषं विदधुः । इमे शब्दसमूहा गणसंज्ञां लेभिरे, शैली चैषा गण-प्रयोगशैलीत्यभिधीयते । आचार्यः पाणिनिः शैलीम् इमाम् आश्रित्य स्वकीये तन्त्रे द्वाविंशत्यधिकद्विशतं गणान् व्यरचयत् । गणनिर्देशसूत्र-रचनातः प्रागेव पाणिनिर्गणविशेषे शब्दविशेषाम् तेषां क्रमं च निर-

---

१. का० ३।२।१७१ ॥ २. का० ७।१।५८ ॥
३. उद्योत १।३।९ ॥

धारयद् इति—पूर्वादिभ्यो नवभ्यो वा (अ० ७।१।१६), सर्वत्र लोहितादिकतन्तेभ्यः (अ० ४।१।१८) इत्यादिभिः सूत्रैः सुव्यज्यते[१]। यद्यपि गणपाठः शास्त्राङ्गभूत इति सर्वैः समर्थ्यते, तथाह धर्मकीर्त्तिः—

**धातुपाठगणोणादिवाक्यलिङ्गानुशासनम् ।**
**आगमप्रत्ययादेशा उपदेशाः प्रकीर्त्तिताः ।।**[२] इति ।।

तथापि लाघवदृष्ट्यायम् आचार्यैः सूत्राद् वहिरेव इति—**अस्ति च पाठो बाह्यश्च सूत्राद्**[३]—इति पतञ्जलिवचनैर्ध्वन्यते । द्विविधा इमे गणाः—धातुगणाः, प्रातिपदिकगणाश्च । तत्र धातुगणा धातुपाठनाम्ना प्रातिपदिकगणाश्च गणपाठनाम्ना संगृह्यन्ते ।

गणप्रयोगशैली पाणिनेरेव वैशिष्ट्यं[४], न तु वाजसनेयिप्रातिशाख्यकारस्य कात्यायनस्य । परन्तु वाजसनेयिप्रातिशाख्यकारोऽपि गणप्रयोगशैल्या परिचित आसीदिति तस्य–उतम्भनादीन्यादिसंशयात् (वा० प्रा० ५।३८) इति सूत्रेण ज्ञाप्यते । वेंकटरामशर्मा त्वस्य सूत्रस्य गणनिर्देशकत्वमेवापलपत्यनावश्यकत्वात्[५]। इयं शैली पाणिनेः प्रागपि सुविकसिता बभूवेति सर्वैर्मनीषिभिः स्वीक्रियते[६]। यस्तु–एतत् प्रतीयते यत् कृत्स्नो गणपाठः परिणामतश्च तत्सम्बन्धीनि विभिन्नानि सूत्राणि पाणिनेः प्राञ्चि[७]–इति पावतेमहाशयस्य निष्कर्षः स सर्वथा हेय इति कपिलदेवशास्त्री निपुणं समीक्ष्य प्रत्यपीपदत्[८]। अयाचितोऽपि पावतेमहाशयस्य प्रतिज्ञाया द्वितीयम् अंशं नाङ्गीकरोति[९]।

पाणिनीयसूत्रेषु गणनिर्देशो बहुविध उपलभ्यते । तद्यथा—

(१) आदिपदेन—गणस्य प्रथमशब्द आदि शब्दपरकः प्रयुज्यते । तद्यथा—सर्वादीनि सर्वनामानि (अ० १।१।२७) ।

---

१. के० डी० शास्त्री, गणपाठ ऐस्क्राइब्ड टु पाणिनि, पृ० २० ।।
२. रूपावतार प्रथमभाग पृ० १ ।। ३. महा० १।३।१ ।।
४. ओन दि ऐन्द्र स्कूल, पृ० ३६ ।।
५. क्रिटिकल स्टडीज़ ऑन का० शु० प्रा० पृ० ८० ।।
६. गणपाठ ऐस्क्राइब्ड टु पाणिनि, पृ० ८–१८ ।।
७. आई० एस० पावटे : स्ट्रक्चर आफ़ अष्टाध्यायी, पृ० ८६ ।।
८. गणपाठ ऐस्क्राइब्ड टु पाणिनि, पृ० २१-२४ ।।
९. एस० एम० अयाचित : गणपाठ : ए क्रिटिकल स्टडी (इण्डियन लिंग्विस्टिक्स, वाल० २२, १९६१) ।।

(२) प्रभृतिपदेन—गणस्य प्रथमशब्दः प्रभृतिशब्दपरकः प्रयुज्यते । यथा—साक्षात्प्रभृतीनि च (अ० १।४।७४) ।

(३) बहुवचनेन—गणस्य प्रथमशब्दो बहुवचनविभक्त्या पठ्यते । यथा—सप्तमी शौण्डैः (अ० २।१।३९), अर्द्धर्चाः पुंसि च (अ० २।४।३१) । तथा चाह महाभाष्यकारः—**बहुवचननिर्देशाच्छौण्डादिभिरिति विज्ञास्यते**[1]—इति, **बहुवचननिर्देशादाद्यर्थो गम्यते**[2]—इति च ।

(४) आद्यन्तपदनिर्देशेन—क्वचिदाद्यन्तपदनिर्देशेनापि गणो निर्दिश्यते, यथा—सर्वत्र लोहितादिकतन्तेभ्यः (अ० ४।१।१८) । गर्गादिगणान्तर्भूतत्वाद् अत्रोभयकोटिनिर्देशः स्यात् ।

(५) ससंख्यावाचिशब्देन—इयत्तावधारणार्थं क्वचिद् गणनिर्देशे संख्यावाचिशब्दोऽपि प्रयुज्यते । यथा—पूर्वादिभ्यो नवभ्यो वा (अ० ७।१।१६) ।

द्विविधा हि पाणिनीयगणाः—परिनिष्ठितगणाः, आकृतिगणाश्च । तथा चाह महाभाष्यकारः—**श्रेण्यादयः पठ्यन्ते, कृतादिराकृतिगणः**[3]—इति । कैयटश्च—**अत एवात्रादिशब्दो व्यवस्थावाची, कृतादिरित्यत्रादिशब्दः प्रकारवाची । प्रयोगदर्शनाच्चोदाहरणस्थानीयाः कतिपये वृत्तिकारैः प्रदर्शिताः**[4]—इति । तत्र परिनिष्ठितगणेषु नियताः शब्दाः पठ्यन्ते, आकृतिगणे चापरिमितशब्दसमूहः । तथा च वर्धमानः—**आकृत्या आकारेण लक्ष्यते स आकृतिगणः**[5]—इति । गणेषु क्वचिद् अन्तर्गणा अपि लभ्यन्ते, यथा सर्वादिगणे (अ० १।१।२७) त्यदादिगणः (अ० १।१।७४) । प्रयोजनविशेषात् क्वचित् क्रमविशेषोऽपि गणेष्वनुरुध्यते, तद्यथा त्यदादिषु (अ० १।२।७२) । तथा च—**त्यदादिषु यद् यत् परं तत्तच् छिष्यते**[6]—इत्येकशेषविधिरुपपद्यते । गणेषु यानि गणसूत्राणि समुपलभ्यन्ते, तानि न पाणिनिकृतानीति कपिलदेवशास्त्री[7] । सामान्यतो गणेषु प्रातिपदिकानि पठ्यन्ते, अत एव जिनेन्द्रबुद्धिः—खिलपाठो धातुपाठः, चकारात् प्रातिपदिकापाठश्च[8]—इति वाक्ये गणपाठं प्रातिपदिकपाठनाम्ना सस्मार । परन्तु क्वचित् सविभक्तिकाः

---

१. महा० २।१।३९ ॥ २. महा० २।४।३१ ॥
३. महा० २।१।५९ ॥ ४. प्रदीप २।१।५९ ॥
५. गणरत्न० पृ० ४६ ॥ ६. का० १।२।७२ ॥
७. गणपाठ ऐस्क्राइब्ड टु पाणिनि, ३६-३७ ॥
८. न्यास १।३।२ ॥

शब्दा अपि पठिता लक्ष्यन्ते, यथा–उरःप्रभृतिभ्यः कप् (अ० ५।४।१५१) इत्यत्र। केषुचिद् गणेषु वाक्यान्यपि पठ्यन्ते, यथा–प्रवृद्धादीनां च (अ० ६।२।१४७) इत्यत्र। एतान्यपि वाक्यानि प्रक्षिप्तानि स्युः। सन्ति खलु काश्चन विसङ्गतयोऽपि गणेषु। तद्यथा–नन्द्यादिगणेषु (अ० ३।१।१३४) नन्दनो ग्राही पच इत्यादयो निष्पन्नाः शब्दाः, सपत्न्यादिगणे (अ० ४।१।३५) समान, एक इत्यादीनि पूर्वपदानि न्यस्तानि। पूर्वाचार्यानुरोधाद् एता विसङ्गतयः समाधीयन्ते[१]।

### १. ५. ६. निपातनानि—

शाब्दिकसम्प्रदाये निपातनशब्द आचार्यप्रयुक्तविशिष्टपदवाच्यत्वेन प्रसिद्धः। अत एव पतञ्जलिः—**किं निपातनम्? द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्**[२]—इति पाणिनीयसूत्रस्थं तृतीयशब्दम् अत्र निपातनशब्देन निर्दिशति। तथैव—**किं निपातनम्? क्त्वायां वा प्रतिषेधः**[३]–इत्यत्र वार्त्तिकस्थः, **किं निपातनम्? गविष्ठिर–शब्दो बिदादिषु पठ्यते**[४]—इत्यत्र गणपाठस्थः, **कथम् उद्यमोपरमौ? अड उद्यमे, यम उपरमे इति निपातनाद् अनुगन्तव्यौ**[५]—इत्यत्र धातुपाठस्थः शब्दो निपातनशब्देन व्यपदिश्यते। इमे शब्दा आचार्यैः प्रसङ्गवशात् प्रयुक्ताः। नैतेषां साधुत्वप्रतिपादनार्थः प्रयत्नविशेषो व्यधायि तैः। कदाचिदाचार्या रीतिविशेषम् अङ्गीकृत्य प्रयत्नपुरःसरं सूत्रेषु परिनिष्ठितपदानि न्यस्यन्ति, येषां साधुत्वं पाठमात्रेणैव प्रतिपादयन्ति, न तु प्रकृत्यादिविभागेन। इमान्यपि निपातनपदभाञ्जि भवन्ति।[६] प्रदर्शयाम्बभूव चैतद् महाभाष्यकारः—**इमे विंशत्यादयः सप्रकृतिकाः सप्रत्ययकाश्च निपात्यन्ते, तत्र न ज्ञायते का प्रकृतिः कः प्रत्ययः, कः प्रत्ययार्थः**[७]—इति। इयमेव रीतिरस्मिन् परामर्शे निपातनशैलीशब्देन व्यपदिश्यते।

इयं निपातनशैली पाणिनीयतन्त्रे वाजसनेयिप्रातिशाख्ये च भृशम्

---

१. रामशंकर भट्टाचार्य, पा० व्या० अनु० पृ० ७७॥
२. महा० ६।४।२॥
३. महा० ६।४।१४॥
४. महा० ६।३।९॥
५. का० ७।३।३४॥
६. का० वा० अभ्यङ्कर: डि० सं० ग्रा०, पृ० २०५॥
७. महा० ५।१।५९॥

आश्रीयते। काशिकाकार उवटश्च निपातन-स्वरूपं प्रदर्शयाञ्चक्रतुः- **यद् इह लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धम्-**[1] इति। भट्टाचार्यो निपातन-कार्यसंग्राहकं श्लोकम् उद्धरति—

**अप्राप्तेः प्रापणं चापि प्राप्तेर्वारणमेव वा।**
**अधिकार्थविवक्षा च त्रयम् एतन्निपातनात्॥**[2]

इत्थं च निपातनरूपेण पठितेषु शब्देषु प्रकृति-तद्विकार-प्रत्यया-देशागमादीनि कार्याण्यनुमीयन्ते। ननु विधिनिपातनयोस्तर्हि को भेदः? विधिनिपातनयोश्चायं भेदो **यत्रावयवा निर्दिश्यन्ते समुदायोऽनुमीयते स विधिः, यत्र समुदायः श्रूयतेऽवयवाश्चानुमीयन्ते तन्निपातनम्**[3]—इति। लक्षणैरेव पदसाधुत्वं प्रतिपाद्यतां, कृतमनया पद्धत्येति निपातनशैलीम् अभिलक्ष्य शङ्कन्ते केचित्।[4] अतो निपातनशैली-प्रयोजनानि समासत उपन्यस्यन्ते—

(१) **प्रक्रियालाघवम्**—पाणिनीयतन्त्रे-दृढः स्थूलबलयोः (अ० ७।२।२०) प्रभौ परिवृढः (अ० ७।२।२१), सद्यःपरुत्परार्यैषमः० (अ० ५।३।२२) इत्यादिषु, वाजसनेयिप्रातिशाख्ये च-निषण्णाय-(वा० प्रा० ३।८७) इत्यादिषु निपातनशैल्या महत् प्रक्रियालाघवं समजायतेति व्यक्तम्। एकेन प्रयत्नेन नैककार्य-सिद्धिरनया प्रणाल्या जायते। तथा चाह महाभाष्यकारः—**समासार्थं ल्यबभावार्थं च निपातनं कर्त्तव्यं, तेनैव यत्नेन स्वरो भविष्यति**[5]—इति। तत्रैव च कैयटोऽप्यवोचत्-**अनेकप्रयोजनसम्पत्तिर्निपातनाद् भवति**[6]—इति।

(२) **अर्थविशेषप्रदर्शनम्**—पाणिनीयशास्त्रे बहुषु स्थलेषु निपातनैर्विशिष्टोऽर्थः प्रदर्श्यते। तद्यथा-क्षुब्धस्वान्त० (अ० ७।२।१८), आकालिकडाद्यन्तवचने(अ० ५।१।११४)। तथा च-**आकालान्निपातनानर्थक्यं ठञ्प्रकरणाद्**-इति वार्त्तिककृतः शङ्कां परिहरति महाभाष्यकारः—**इदं तर्हि प्रयोजनम् एतस्मिन् विशेषे निपातनं करिष्यामि-**

---

१. का० ३।१।१२३; वा० प्रा० ३।८६ उ० भा०॥
२. पा० व्या० अनु०, पृ० १०३॥
३. प्रदीप ५।१।५९॥
४. आइ० एस० पावटे : स्ट्रक्चर आफ अष्टाध्यायी, पृ० ६३॥
५. महा० ६।२।२॥
६. प्रदीप ६।२।२॥

**समानकालस्याद्यन्तविवक्षायाम्**[१]–इति । तत्रैव चाब्रवीत् कैयटः—**जन्मविनाशयोश्चाव्यवहितकालत्वम् । विधौ त्वयमर्थः क्लेशेन प्रतीयत इति निपातनाश्रयणम्**[२]–इति । आश्चर्यमनित्ये (अ० ६।१।१४६) इत्यत्रापि कैयटः प्राह—**निपातनाच्चानित्यविशेषो विस्मयहेतुर्गृह्यते**–[३] इति । ज्ञानेन्द्रसरस्वती खल्वप्यवोचत्—**यद्यपि पणितव्यशब्दोऽर्थद्वय-साधारणस्तथापि निपातनस्येह रूढ्यर्थत्वाद् व्यवहर्त्तव्य एवायं निपात्यते**[४]—इति । निपातनानि प्रायेण रुढानि भवन्तीत्याचार्यः क्वचित् कण्ठतोऽपि घोषयाञ्चकार । तद्यथा—ब्राह्मणकोष्णिके संज्ञायाम् (अ० ५।२।७१) इति । अपि च–**निपातनाद् रूढिराश्रीयते**[५]–इति कैयटोक्तिः, प्रदीपोद्घृताग्रिमभर्तृहरिकारिका च निपातनानां रुढितां प्रकटयतः । तथा हि—

**धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च ।**
**अनुबन्धविकाराणां रूढ्यर्थे च निपातनम् ।।**[६] इति ।।

(३) **अनिष्टरूपनिवृत्तिः**—अनिष्टरूपस्य निवृत्त्यर्थमपि निपातनं क्रियते । तथा चावोचत कैयटः—**यद्यपि फुल्लादयः पचाद्यचीगुपलक्षणे के च सिध्यन्ति, तथापि निष्ठा च द्व्यजनात् (अ० ६।१।२०५) इत्यादिकार्यसिद्धये क्षीबिताद्यनिष्टरूपनिवृत्तये निपातनम्**[७]—इति ।

(४) **स्वरः—बाधकान्येव निपातनानि**[८]—इति पतञ्जलिवचनाद् निपातनानां सर्वकार्यबाधकत्वम् अवसीयते । अतो निपातनस्वरः सर्व-स्वरस्य बाधको भवति । महाभाष्यकारोऽपि तथैव प्रतिपादयति—**यथैव निपातनस्वरः प्रकृतिस्वरस्य बाधकः, एवं समास-स्वरस्यापि**[९]–इति ।

(५) **ज्ञापकम्**—कार्मस्ताच्छील्ये (अ० ६।४।१७२) इत्यत्र कार्म-शब्दस्य निपातनं परिभाषां ज्ञापयतीति पतञ्जलिः प्रतिपादयति–**एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यस्ताच्छीलिके णेऽण्-कृतानि भवन्तीति**[१०]– इति ।

---

१. महा० ५।१।११४ ।। २. प्रदीप ५।१।११४ ।।
३. प्रदीप ६।१।१४६ ।। ४. तत्त्वबोधिनी ३।१।१०१ ।।
५. प्रदीप ३।१।१२७ ।। ६. प्रदीप ५।१।११४ ।।
७. प्रदीप ८।२।५५ ।। ८. महा० १।१।२७ ।।
९. महा० ६।१।१२३ ।। १०. महा० ६।४।१७२ ।।

निपातनानि बहुविधानि विभागशोऽत्र निदर्श्यन्ते—

(१) **अर्थनिर्देशपराणि**—पाणिनीयनिपातनसूत्रेषु क्वचित् क्वचिद् अर्थोऽपि निर्दिश्यते। स चापि–सूत्रं प्रतिष्णातम् (अ० ८।३।९०) इत्यादिषु प्रथमया,–प्रष्ठोऽग्रगामिनि (अ० ८।३।९२) इत्यादिषु च सप्तम्या निर्दिश्यते। निर्दिष्टोऽर्थोऽपि वाच्यविषयादिभेदाद् बहुविधः। वाजसनेयिप्रातिशाख्येऽपि प्रणाल्येषा दृश्यते। तद्यथा—पूरुषोऽवसाने (वा० प्रा० ३।११९) इति।

(२) **शब्दसंख्यानपराणि**—पाणिनीयशास्त्रे वाजसनेयिप्रातिशाख्ये च निपातनानि प्रायेण शब्दसंख्यानरूपेण पठ्यन्ते। तत्रापि प्रकारत्रयम्–(क) दाधर्त्ति० (अ० ७।४।६५) इत्यादिषु पाणिनीयतन्त्रे, निषण्णाय०–(वा० प्रा० ३।८७) इत्यादिषु च वाजसनेयिप्रातिशाख्ये यथादृष्टं शब्दाः प्रथमान्ता अविभक्तिका वा निर्दिश्यन्ते। (ख) दाण्डिनायन—(अ० ६।४।१७४) इत्यादिषु पाणिनीयतन्त्रे कृतसमासा निपातनशब्दा निर्दिश्यन्ते। (ग) ग्रसित—(अ० ७।२।३४) इत्यादिषु पाणिनीयतन्त्रे, पिबा सोमम् (वा० प्रा० ३।१३०) इत्यादिषु च वाजसनेयिप्रातिशाख्ये समस्तासमस्तशब्दाः सह निर्दिश्यन्ते।

(३) **आचार्यनिर्देशपराणि**—वाजसनेयिप्रातिशाख्ये–परिमाण इति शाकटायनः (वा० प्रा० ३।८७) इत्यत्राचार्यनिर्देशोऽप्युपलभ्यते। शाकटायनाचार्यग्रहणं विकल्पार्थम्। सोऽपि व्यवस्थितः, काण्वादेर्भवति न माध्यन्दिनानाम्[1]–इत्यनन्तः।

(४) **अनुबन्धपराणि**—पाणिनीयतन्त्रे बहुषु निपातनसूत्रेषु सानुबन्धको निर्देश उपलभ्यते। तद्यथा–ऐकागारिकट् चौरे (अ० ५।१।१२३) श्रोत्रियंश्छन्दोऽधीते (अ० ५।२।८४), क्षेत्रियच् परक्षेत्रे चिकित्स्यः (अ० ५।२।९२)।

(५) **तन्त्रातन्त्रनिर्देशपराणि**—पाणिनीयतन्त्रे निपातितशब्देषु क्वचिद् वचनादिनिर्देशोऽविवक्षितो भवति। तथा च–षष्टिकाः षष्टिरात्रेण पच्यन्ते (अ० ५।१।९०) इत्यत्र बहुवचनम् अतन्त्रम्[2]। दाधर्त्ति—(अ० ७।४।६५) इत्यत्रापि 'अलर्षिशब्दे' सिपा निर्देशोऽतन्त्रं तिप्यपि 'अलर्ति दक्षः'[3] इति दर्शनात्[4]।

---

१. वा० प्रा० ३।८७ अ० भा०॥ २. का० ५।१।९०॥
३. ऋ० ८।४८।८॥ ४. का० ७।४।६५॥

अयमत्र विशेषो यत् सन्ति केचन शब्दा ये पाणिनीयतन्त्रे निपात्यन्ते, वाजसनेयिप्रातिशाख्ये तु लक्षणैः साध्यन्ते। तथा हि—पत्यौ सकारेण (वा० प्रा० ३।५०) इत्यत्र वनशब्दानुवर्त्तनाद् वनस्पतिरिति साध्यते। पाणिनीयनये तु पारस्करादिगणस्याकृतिगणत्वात्[1] सुट्। तथा चाह काशिका—**वनपतिशब्दावाद्युदात्तौ पारस्करप्रभृतित्वात् सुट्**[2]—इति। प्रातिशाख्ये—तद्बृहतौ करपत्योस्तलोपश्च (वा० प्रा० ३।५२) इति लक्षणेन तस्करबृहस्पतिशब्दौ साध्येते। पाणिनीयैस्तु पारस्करादिगणस्थाद् अस्मादेव वचनाद् महाभाष्ये वार्त्तिकरूपेणोपलभ्यमानात् सुड् निपात्यते।

## १. ५. ७. अधिकारः (अनुवृत्तिः)—

अधिकारो नाम विनियोगः[3]। स च योगस्य योगावयवस्य वा योगान्तर उपस्थानम्। तच्च प्राय उत्तरयोगेषु, क्वचित् पूर्वत्रापि[4]। शब्दकौस्तुभकारोऽप्यूचे—**एकत्रोपात्तस्यान्यत्र व्यापारोऽधिकारः**[5]—इति। अयं व्यापारोऽनुवृत्तिशब्देनापि व्यपदिश्यते शाब्दिकैः। अनेनैव व्यापारेण क्रमगता योगास्तन्तुनेव परस्परं ग्रथ्यन्ते। अत एव—सूत्रयति, सूत्र्यते इति वा सूत्रम्[6]—इति सूत्रशब्दव्युत्पत्तिः सङ्गच्छते। इयं शैली व्याकरणसूत्रग्रन्थेषु विशेषत आश्रीयते। पाणिनीयतन्त्रेऽस्याः प्रभूत उपयोगः, वाजसनेयिप्रातिशाख्येऽपि न ततोऽल्पीयान्। आचार्यः पाणिनिः स्वशास्त्रेऽधिकारद्योतनार्थं—स्वरितेनाधिकारः (अ० १।३।११) इति परिभाषासूत्रं प्रोवाच। स्वरितचिह्नेनाधिकारो वेदितव्य इति तदर्थः। स्वरितश्च वर्णमात्रधर्मः कलाध्मातादितुल्यः केवलं सूत्रेष्वेव भवति न प्रयोगेषु[7]। स्वरितस्य संकीर्णत्वात् **प्रतिज्ञास्वरिताः पाणिनीया** इत्यभियुक्तोक्तिः।[8] तस्माद् व्याख्यानमेवात्र शरणम्। अत एव कात्यायनः स्वकीये प्रातिशाख्ये नेदृशीं परिभाषां प्रोक्तवान् इत्यनुमीयते। वाजसनेयिप्रातिशाख्ये—अथ शिक्षाविहिताः (वा० प्रा० १।२९) इत्यादिस्थलेष्वथशब्दोऽधिकारार्थः प्रयुज्यते[9]। परन्तु शास्त्रे

१. का० ६।१।१५७॥ २. का० ६।२।१४०॥
३. का० १।३।११॥ ४. उद्योत १।३।११॥
५. श० कौ० १।२।६५; डि० सं० ग्रा० पृ० १४॥
६. सं० व्या० इ० प्रथमभाग पृ० २२०॥ ७. पद० १।३।११॥
८. का० १।३।११॥ ९. द्र०—उवटानन्तभाष्ये॥

सर्वत्रैषा शैली नावलम्ब्यते। तथा च-संहितायाम् (वा० प्रा० ३।१) इत्यादिषु नाथशब्दः प्रयुज्यते।

महाभाष्यकारः स्वरितेन तिस्रोऽधिकारगतीः प्रतिपादयति[1]। तथा हि—

(१) **अधिकारगतिः**—गोस्त्रियोरुपसर्जनस्य (अ० १।२।४८) इत्यत्र स्त्रीग्रहणस्य स्वरितत्वात्—स्त्रियाम् (अ० ४।१।३) इत्येवं प्रकृत्य ये प्रत्यया विहितास्तेषां ग्रहणं विज्ञायते। एतेन वार्त्तिककृतो-**गोटाङ्ग्रहणम्**[2]-इति चोद्यं परिह्रियते।

(२) **अधिकं कार्यम्**—स्वरितत्वाद् गौणानामपि कारकाणाम् अपादानादिसंज्ञकत्वात्-साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतराः- इत्यादिष्वप्यपादानादित्वं सिद्धं भवति।

(३) **अधिकःकारः**—विप्रतिषेधे परं कार्यम् (अ० १।४।२) इति वचनात् पूर्वो विधिर्वाध्यः स्वरितत्वप्रतिज्ञानाद् बाधकः सम्पद्यते। ततश्च पूर्वविप्रतिषेधा न पठितव्या भवन्ति।

षड्भिः प्रकारैरनुवृत्तिः (अधिकारो वा) प्रभाविता भवतीति पतञ्जलिः प्रदर्शयामास।[3] तथा हि-(१) सम्बन्धेन (२) मण्डूकगत्या (३) एकयोगकरणेन (४) चकारकरणेन (५) यत्नविशेषेण (६) अपेक्षया चेति। अनुवृत्तिविषयो महतीं सूक्ष्मेक्षिकाम् अपेक्षत इति महाभाष्यकारस्य-**तदेतद् अत्यन्तं सन्दिग्धं वर्तत आचार्याणां, विभाषानुवर्त्तते न वेति**[4]-इत्युक्त्या सुतराम् अभिव्यज्यते। तथा-काशिकाकारः कालोपसर्जने० (अ० १।२।५७)इति सूत्रं यावद् अशिष्यपदम् (अ० १।२।५३) अनुवर्त्तयति, माथुरीकारस्त्वापादान्तम्[5]।

शास्त्रेषु त्रिविधा अधिकारा उपलभ्यन्ते। तथा चोक्तम्—

**सिंहावलोकितं चैव मण्डूकप्लुतमेव च।**
**गङ्गाप्रवाहवच्चापि अधिकारास्त्रिधा मताः॥**[6]

(१) **गङ्गाप्रवाहवत्**—यस्य योगस्य योगैकदेशस्य वोत्तरयोगेषूपस्थितिः प्रार्थ्यते, स गङ्गाप्रवाहवद् अधिक्रियते। **प्रतियोगं तस्यानिर्देशार्थः**[7]-इत्यादिवचनैः पतञ्जलिनापीदमेवाभिप्रेयते। प्रत्ययः (अ०

---

१. महा० १।३।११॥ २. महा० १।२।४८ वा० २॥
३. महा १।१।३॥ ४. हयवरट्सूत्रमहा०॥
५. पुरुषोत्तमदेवः, भा पृ० (१।२।५७)॥
६. डि० सं० ग्रा० पृ० १४॥ ७. महा० १।१।४८॥

३।१।१) अङ्गस्य (अ० ६।४।१), पदस्य (अ० ८।१।१७) इत्यादयो वहवो योगाः पाणिनीयाः, अनुदात्तम् (वा० प्रा० २।२), संहितायाम् (वा० प्रा० ३।१), दीर्घम् (वा० प्रा० ३।९७) इत्यादयः कात्यायनीयाश्चैतत्प्रकारभाजः ।

(२) **मण्डूकप्लुतवत्**—यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः[1]—इति पतञ्जलिः । पाणिनीयतन्त्रे—पृथग्विना० (अ० २।३।३२) इत्यत्र पञ्चमी, उपमानादाचारे (अ० ३।१।१०) इत्यत्र क्यच् मण्डूकप्लुत्यानुवर्त्तते । वाजसनेयिप्रातिशाख्ये—ककारपकारयोः सकारम् (वा० प्रा० ३।२१) इत्यत्र विसर्जनीयानुवृत्तिर्मण्डूकप्लुत्या भवति ।

(३) **सिंहावलोकितवत्**—उत्तरसूत्रस्थपदस्य पूर्वत्रोपस्थितिः सिंहावलोकितन्यायं भजते । तथा च—उदि श्रयतियौतिपूद्रुवः (अ० ३।३।४९) इत्यत्र काशिका—**वक्ष्यमाणं विभाषाग्रहणम् इह सिंहावलोकितन्यायेन सम्बध्यते**[2]— इति । अयं पन्था न स्वाभाविकः, सूत्रकारेणाभिप्रेतो न वेत्यत्रापि सन्देह एव । वाजसनेयिप्रातिशाख्येऽपि—तम् इति विकारः (वा० प्रा० १।१३३) इत्यत्र निर्दिष्टे (वा० प्रा० १।१३४) इति पदं सिंहावलोकितन्यायेन सम्बध्यते ।

अधिकारावधिद्योतनार्थं पाणिनिना प्रातिशाख्यकृता कात्यायनेन च विहिताः प्रयत्नाः संक्षेपत उल्लिख्यन्ते—

(१) **व्याख्यानम्**—व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्[3]—इति न्यायेन व्याख्याकाराणां व्याख्यानमेव प्रधानतयाधिकारावधिं द्योतयति ।

(२) **प्राक्शब्दः**—उभयत्र शास्त्रयोः प्राक्शब्देनाधिकारावधिर्निर्दिश्यते । तद्यथा—प्राक् कडारात् समासः (अ० २।१।३) प्राग् उवर्णाद्० (वा० प्रा० ४।१३०) ।

(३) **आङ्शब्दः**—आङा निपातेनापि क्वचिद् अधिकारावधिर्निर्दिश्यते । तद्यथा—आ कडारादेकासंज्ञा (अ० १।४।१) ।

(४) **चशब्दः**—चशब्देनापि बहुषु स्थलेषु द्योत्यतेऽधिकारावधिः ।

---

१. महा० १।१।३ ॥ २. का० ३।३।४९ ॥
३. परि० १, महा० प्रत्याहाराह्निके ॥

तथा च-**चानुकृष्टं नोत्तरत्र**[1]-इति परिभाष्यते। एवं च-भुवो भावे (अ० ३।१।१०७) इत्यत्र न यत् प्रत्ययो भवति—वदः सुपि क्यप् च (अ० ३।१।१०६) इत्यत्र चानुकृष्टत्वात् । धामञ्छत्रूं श्चित्वान्० (वा० प्रा० ३।१४६) इत्यत्र चकारस्तकारापवादावधिद्योतनार्थं इत्युवटः।[2] अयमुपायो न सार्वत्रिकः । अत एव महाभाष्येऽनुवृत्ति-फलकाः सर्वे चकाराः प्रत्याख्याताः[3]।

(५) **प्रतियोगिशब्दप्रयोगः**—प्रतियोगिशब्दप्रयोगाद् अधिकारो निवर्तते। तद्यथा—शप्श्यनोर्नित्यम् (अ० ७।१।८१) इत्यत्र नित्यग्रहणे विभाषानिवृत्तिः। रलावृलृवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र (वा० प्रा० ४।१६) इत्यत्र सर्वत्रशब्दः संहितानिवृत्त्यर्थः प्रयुज्यते। इतिशब्दोऽपि क्वचिद् अधिकारं निवर्त्तयति। तथा चाहोवटः—**इतिशब्दः पदाधि-कारप्रकरणसमाप्तिज्ञापनार्थः**[4]-इति।

### १. ५. ८. सूत्रक्रमः—

पाणिनिः प्रातिशाख्यकार-कात्यायनश्च स्वकीयशास्त्रयोः सूत्राणां विन्यासं क्रमविशेषेण चक्रतुः। तत्र सूत्रविपर्यासो न सम्भवति । द्वे उदाहरणे अत्रोपस्थाप्येते—

(१) परबलवत्वम्—पाणिनिः सूत्रयामास-विप्रतिषेधे परं कार्यम् (अ० १।४।२) इति । प्रक्रियायां यत्र द्वयोस्तुल्यबलयोः कार्ययो-रन्यत्र सावकाशयोर्युगपत प्राप्तिर्भवति, तत्र सूत्रक्रमे यत् परं शास्त्रं, तस्य कार्यं भवतीति परिभाषासूत्रस्यास्याभिप्रायः। तद्यथा-सुपि च (अ० ७।३।१०२) इत्यस्यावकाशो वृक्षाभ्याम् इत्यत्र, बहु-वचने झल्येत् (अ० ७।३।१०३) इत्यस्यावकाशो वृक्षेष्वित्यत्र। वृक्षेभ्य इत्यत्रोभयोर्युगपत् प्राप्तिः । क्रमसंख्यया परत्वाद् एत्वविधायकं शास्त्रमेव प्रवर्त्तते। तथैव वाजसनेयिप्रातिशाख्ये-विप्रतिषेध उत्तरं बलवदलोपे (वा० प्रा० १।१५९) इति परिभाषा समारभ्यते। अत्रापि लोपवर्जं सैव स्थितिः। तथा च-स्वरितवान् स्वरितः (वा० प्रा० ४।१३१) इति योगः—

---

१. परि० ४६, महाभाष्ये नोपलभ्यते, काशिकायां (८।४।५५) तूपलभ्यत एव।
२. वा० प्रा० ३।१४६ उ० भा०॥
३. महा० १।३।६३॥
४. वा० प्रा० ४।३२ उ० भा०॥

**स्वाहा॑ अव॒क्र॒न्दाय॑=स्वाहा॑वक्र॒न्दाय॑(मा० स० २२।७)**

इत्यत्र सावकाशः, उदात्तवान् उदात्तः (वा० प्रा० ४।१३२) इति योगश्च—

**च॒ असि॑=चासि॑ (मा० सं० १।२७)।**

इत्यत्र सावकाशः। इहोभयप्राप्तिः—

**सु॒प्वा॑ इति॑=सुप्वेति॑ (मा० सं० ३।१०)।**

परत्वाद् उदात्तत्वमेव भवति।

(२) परासिद्धत्वम्—पाणिनीयतन्त्रे सूत्रं दृश्यते–पूर्वत्रासिद्धम् (अ० ८।२।१) इति। त्रिपादी सपादसप्ताध्यायीं प्रत्यसिद्धा, त्रिपाद्यां वापि परं परंपूर्वं पूर्वं प्रति असिद्धम् इति तदर्थः। तथा च–अस्मा उद्धर इत्यत्र यलोपस्य (८।३।१९) असिद्धत्वात् पुनर्गुणो (अ० ६।१।८७) न भवति। वाजसनेयिप्रातिशाख्ये खल्वपि–न परकालः पूर्वकाले पुनः (वा० प्रा० ३।४) इति पाणिनीयशास्त्रवत् परिभाष्यते। कालशब्दोऽत्र स्थानपर्यायः। तदयमर्थः—परकालसन्धिः पूर्वकालसन्धौ प्राप्तवन्न भवति। असिद्धो भवतीत्यर्थं इत्यनन्तः। पूर्वपरकालद्योतनार्थं च–'हि' इति सूत्रद्वयं (वा० प्रा० ४।१०, १२४) प्रोच्यते, परिभाष्यते च–ह्यन्तराः कालाः (वा० प्रा० ३।५) इति। तथा च–या ओषधीः (मा० सं० १२।९२) इत्यत्र कण्ठ्यपूर्वो यकारमरिफितः (वा० प्रा० ४।३६) इत्यवर्णपूर्वस्य विसर्जनीयस्य यकारे सति,–यवंयोः पदान्तयोः स्वरमध्ये लोपः (वा० प्रा० ४।१२५) इति यकारलोपः। पुनः—सन्ध्यक्षर ऐकारौकारौ (वा० प्रा० ४।५६) इति सूत्रं प्रवर्त्तमानं प्रतिषिध्यते—न परकालः पूर्वकाले पुनः (वा० प्रा० ३।४) इति।

इत्थं चाचार्यद्वयोपात्तः सूत्रक्रमः सोद्देश्यकः। स्वलक्ष्यप्राप्तौ च द्वावप्याचार्यौ सुतरां सफलौ बभूवतुः।

### १.५.९ आचार्यनिर्देशः—

आचार्यः पाणिनिः प्रातिशाख्यकारः कात्यायनश्च स्वशास्त्रयोः पूर्ववर्त्तिनमनेकम् आचार्यम् उल्लिलिखतुः। तत्र पाणिनिस्तावद् दशाचार्यान् नामग्राहं सस्मार, अन्यांश्च बहून् प्रागादिशब्दैः। तथा हि—

**(क) नाम्ना स्मृताः**—(१) आपिशलिः (अ० ६।१।९२),

(२) काश्यपः (अ० १।२।२५) (३) गार्ग्यः (अ० ७।३।९९), (५) चाक्रवर्मणः (अ० ६।१।१३०), (६) भारद्वाजः (अ० ७।२।६३), (७) शाकटायनः (अ० ३।४।१११), (८) शाकल्यः (अ० १।१।१६), (९) सेनकः (५।४।१११), (१०) स्फोटायनः (अ० ६।१।१२३)।

(ख) **अन्यथा स्मृताः**—(१) प्राञ्चः (अ० १।१।७५), (२) उदञ्चः (अ० ४।१।१५७), (३) आचार्याः (अ० ६।३।४९), (४) सर्वे (अ० ८।३।२२), (५) एके (अ० ८।३।१०४)।

प्रातिशाख्यकृता कात्यायनेनापि दशाचार्या नामग्राहं स्मृताः, वहवश्चैकशब्देन। तेऽप्यत्र संगृह्यन्ते। तथा हि—

(क) **नाम्ना स्मृताः**—(१) काण्वः (वा० प्रा० १।१२३), (२) गार्ग्यः (वा० प्रा० ४।१६५), (३) शाकटायनः (वा० प्रा० ३।९), (४) माध्यन्दिनः (वा० प्रा० ८।४५), (५) शाकल्यः (वा० प्रा० ३।१०), (६) औपशिविः (वा० प्रा० ३।१३२), (७) काश्यपः (वा० ४।४), (८) दाल्भ्यः (वा० प्रा० ४।१५), (९) शौनकः (वा० प्रा० ४।१२०), (१०) जातुकर्ण्यः (वा० प्रा० ४।१२३)।

(ख) **एकशब्देन स्मृताः**—(१) एके (वा० प्रा० ३।९२), (२) एकेषाम् (वा० प्रा० ४।५५)।

सूत्रेष्वाचार्यस्मरणपद्धतिस्तु द्वयोरपि शास्त्रयोः सर्वथैकरूपतां न भजते। तद्गतवैशिष्ट्यम् अत्रोपस्थाप्यते—

(१) **विभक्तिः**—पाणिनिर्नाम्ना स्मृतेषु शब्देषु यथायोगं षष्ठ्या एकवचनद्विवचनबहुवचनानि, प्रागादिशब्देषु च षष्ठ्या बहुवचनं प्रयुयुजे। वाजसनेयिप्रातिशाख्यकारः कात्यायनस्तु कांश्चनाचार्यान् षष्ठ्या, कांश्चन च प्रथमया विभक्त्या संकीर्तितवान्। तत्र–औपशिवि-गार्ग्य-शाकटायन-शाकल्य-काश्यपाः प्रथमाया एकवचनेन, काण्व-दाल्भ्य-शौनक-जातुकर्ण्याः षष्ठ्येकवचनेन, माध्यन्दिनः षष्ठीबहुवचनेन, एकशब्दः षट्सु स्थलेषु प्रथमाबहुवचनेन त्रिषु च स्थलेषु षष्ठीबहुवचनेन निर्दिश्यते। एवं प्रातिशाख्येऽस्मिन् शैलीद्वयस्य सम्मिश्रणं स्फुटम् अवभासते। प्रथमान्तनिर्देशपद्धतिः प्राचीनतरेति—**षड् भावविकारा भवन्तीति वार्ष्यायणिः**[1]—इति निरुक्तादिप्रयोगैः सुतरां

१. निरु० १।२॥

निश्चीयते। सर्वस्य शास्त्रीयवाङ्मयस्य प्रोक्तत्वाभ्युपगमात् कात्यायनीय-प्रातिशाख्य उपलभ्यमाना विसङ्गतिः शक्यते समाधातुम्।

(२) **उपन्यासः**—सूत्रेष्वाचार्यनामोल्लेखो द्वयोरपि शास्त्रयोः प्रायः सूत्रान्ते क्रियते। यथा—लोपः शाकल्यस्य (अ० ८।३।१९), न दाल्भ्यस्य (वा० प्रा० ४।१५)। पाणिनीयतन्त्रे—सम्बुद्धौ शाकल्यस्येतावनार्षे (अ० १।१।१६), इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च (अ० ६।१।१२७) इति स्थलद्वये सूत्रमध्ये शाकल्यपाठः। तथैव वाजसनेयिप्रातिशाख्येऽपि-इतिपरस्तिर्यङ्—काण्वस्य वा (वा० प्रा० १।१४९), ख्यातेः खयौ कशौ गार्ग्यः सख्योख्यमुख्यवर्जम् (वा० प्रा० ४।१६५), अविकारं शाकल्यः शषसेषु (वा० प्रा० ३।१०) इत्येतेषु सूत्रेष्वाचार्यनामोल्लेखः सूत्रमध्ये दृश्यते। अत्र शैलीद्वयोपादाने प्रोक्तत्वमेव हेतुः कल्प्यते।

(३) **इतिशब्दः**—प्राक्तना आचार्या आचार्यान्तरमतोपन्यास इतिशब्दं प्रयुयुजिरे इति यास्कस्योद्धृतचरेण वचनेनावगम्यते। पाणिनिना स्वशास्त्रे आचार्यनिर्देशेषु क्वचिदपीतिप्रयोगो नाकारि। प्रातिशाख्यकारः कात्यायनस्तु—परिण इति शाकटायनः (वा० प्रा० ३।८८), श्रीमना इत्येके (वा० प्रा० ३।९२), हरिशयेत्येके (वा० प्रा० ३।१२९), पारावतानाग्निमारुताश्चेति जातुकर्ण्यस्य (वा० प्रा० ५।२२), अधीवासम् इत्येके (वा० प्रा० ५।२३), अनुस्वारागमत्वादित्येके (वा० प्रा० ५।४४) इत्येतेषु सूत्रेषु पूर्वाचार्यमतोपन्यास इतिशब्दं प्रयुक्तवान्। इतिशब्दत्यागे पाणिनेरभिप्रायः शब्दलाघवमेव स्यात्। भट्टाचार्यस्तु—पूर्वाचार्याणाम् आनुपूर्वीग्रहणम् अनेन विधिना पाणिनेरभिप्रेतम्-इति कल्पयति[1]। प्रातिशाख्यकारस्तु—परि ण इति शाकटायनः (वा० प्रा० ३।८८) इत्यादिषु इतिप्रयोगं कुर्वन्नप्यानुपूर्वीं लक्षयति।

(४) **अनेकाचार्योल्लेखः**—द्वयोरपि शास्त्रयोः क्वचित् क्वचित् सूत्रेषु नैकाचार्यनिर्देश उपलभ्यते। तद्यथा—अङ्गार्ग्यगालवयोः (अ० ७।३।३९), नोदात्तस्वरितोदयम् अगार्ग्यकाश्यपगालवानाम् (अ० ८।४।६७) लोपं काश्यपशाकटायनौ (वा० प्रा० ४।४)। ईदृगुल्लेखस्य प्रयोजनम् अनुपदमेव वक्ष्यते।

---

१. पा० व्या० अनु०, पृ० ३४८-३४९॥

अथ सूत्रेष्वाचार्यनामसंकीर्त्तने को हेतुः ? आचार्याः स्वाभिमतस्य दाढ्यर्थिम् अन्येषाम् आचार्याणां मतानि स्वशास्त्रेषूपन्यस्यन्ति । तथा चाह निरुक्तटीकाकारः स्कन्दः—**वार्ष्यायणिरित्याचार्यग्रहणं न स्वमतं व्युदसितुम्, किन्तर्हि ? उक्तस्यैवार्थस्य दाढ्यर्थिम् मतान्तरस्यानुपन्यासात्**[1]—इति । आपाततः प्राचार्यनामसंकीर्त्तनेन विकल्पः प्रतीयते, व्याख्याकारैश्च तथैव व्याख्यायते । तथा च—लोपः शाकल्यस्य (अ० ८।३।१९) इत्यत्र–**शाकल्यग्रहणं विभाषार्थम्**[2]–इति काशिका । परि ण इति शाकटायनः (वा० प्रा० ३।८८) इत्यत्र–**शाकटायनग्रहणं विकल्पार्थम्**[3]–इत्यनन्तः । परन्तु नित्यशब्दवादिनां मते आचार्यग्रहणं न विकल्पार्थम्, अपितु पूजार्थम् । तथा चावोचत् पतञ्जलिः—**यस्य पुर्नानित्याः शब्दाः, गालवग्रहणं तस्य पूजार्थम्**[4]–इति । वा सुप्यापिशलेः (अ० ६।१।९२)इत्यादिषु पाणिनीयसूत्रेषु, इति–परस्तिर्यङ्—काण्वस्य वा (वा० प्रा० १।१४९) इति वाजसनेयिप्रातिशाख्यसूत्रे च विकल्पेन सहाचार्योल्लेखस्तस्य पूजार्थत्वमेवोपोद्वलयति । वृत्तिकारो महाभाष्यकारश्च तत्र तत्राचार्यग्रहणं पूजार्थम्[5] इति वर्णयतः । ईदृशेषु स्थलेषु व्यवस्थितविभाषा समास्थीयते । प्रातिशाख्ये तु यथासम्प्रदायं पाठव्यवस्थेति सिद्धान्तः । अत एवानन्तः प्रातिशाख्यप्रयुक्तम् आचार्यविशेषद्योतकम् एकशब्दं कदाचिद्–**एकशब्दोऽत्र मुख्यपरः–तथा च प्रथमशाखिनां काण्वानां दीर्घपाठः**[6]–इति व्याचष्टे,कदाचिच्च–**अत्रैकेषाम् इत्येकशब्दस्य, एके मुख्यान्यकेवलाः, इत्यभिधानाद अन्यार्थता, न मुख्यार्थता**[7]–इति व्याचष्टे । अङ्गार्ग्यगालवयोः (अ० ७।३।९९) लोपं काश्यपशाकटायनौ (वा० प्रा० ४।४) इत्यादिषु सूत्रेष्वनेकाचार्यनिर्देशोऽपि पूजार्थ एव । एतत् सर्वं संक्षिपन्नाह कैयटः–**ननु च नित्येषु शब्देषु विकल्पिते विधौ विकल्पमात्रं प्रदर्शयितव्यम् । तत्र कस्य किं मतं यत् प्राच्यावितं स्यात् ? उच्यते–विकल्पप्रतिपादनाय वाग्रहण एव कर्त्तव्ये पूजार्थम् आचार्या उपादीयन्ते । सा चैवं**

१. निरु० स्क० पृ० २६ । २. का० ८।३।१९ ।।
३. वा० प्रा० ३।८८ अ० भा० ।।
४. महा० १।१।४४ ।।
५. महा० १।२।५५; का० ५।४।११२; ६।१।९२,१२३; ६।३।६१ ।।
६. वा० प्रा० ३।१२८ अ० भा० ।।
७. वा० प्रा० ४।१२६ अ० भा० ।।

**पूजा भवति–यदि येनाचार्येण यः शब्दः स्मृतः स तेनैव स्मृतत्वेनोपदिश्यते, एवं हि तस्य स्मर्तृत्वेन स्तुतिः कृता भवति । एवञ्चाङ् गार्ग्यगालवयोरित्यादावनेकाचार्योपादानम् अर्थवद् भवति, विकल्पस्यैकाचार्योपादानेनापि सिद्धत्वात्[1]–इति ।**

### १. ५. १०. कार्यि-कार्य-निमित्तनिर्देशः—

उभयत्र शास्त्रयोः सूत्रेषु त्रयोऽंशा विद्यन्ते–कार्यी, कार्यं निमित्तं चेति । क्वचित्तु तेषां द्वयोरेव निर्देशः क्रियते । तथा चासूसुचद् दुर्गादासः—

**कार्यी कार्यं निमित्तं च त्रिभिः सूत्रमुदाहृतम् ।**
**कदाचित् कार्यिकार्याभ्यां क्वचित् कार्यनिमित्ततः[2] ।।** इति ।।

कार्यिकार्यनिमितानि खल्वपि दुर्गादासेन लक्ष्यन्ते—

**यस्य निर्दिश्यते कार्यं स कार्यी गदितो बुधैः ।**
**क्रियते यत्तु तत् कार्यम् आदेशप्रत्ययागमम् ।।**
**यस्मात् परं परे यस्मिंस्तन्निमित्तं द्विधा मतम्[2] ।।** इति ।।

तथा च—अकः सवर्णे दीर्घः (अ० ६।१।१०१) इति पाणिनीयसूत्रे अक इति कार्यी, सवर्ण इति निमित्तं, दीर्घ इति कार्यम् । सिं सवर्णे दीर्घम् (वा० प्रा० ४।५०) इति वाजसनेयिप्रातिशाख्यसूत्रे सिम् इति कार्यी, सवर्ण इति निमित्तं, दीर्घम् इति कार्यम् ।

सूत्रेषु कार्यी निमित्तं कार्यम् इति निर्देशक्रमः प्रायेण समुपलभ्यते । अयमेव च स्वाभाविकः क्रमः । तथा च कातन्त्रटीकाकारो दुर्गसिंहः प्राह–कार्यी निमित्तं कार्यम् इत्येष निर्देशक्रमः[3]–इति । परन्तु–इको यणचि (अ० ६।१।७७), आत औ णलः (अ० ७।१।३४) इत्यादिषु पाणिनीय-सूत्रेषु, अनुस्वारं रोष्मसु मकारः (वा० प्रा० ४।१) इत्यादिषु च वाजसनेयिप्रातिशाख्यसूत्रेषु क्रमो व्याहन्यते । यश्चापि हरिनामामृतवृत्तौ—

**प्राङ्निमित्तं तथा कार्यी कार्यं परनिमित्तकम् ।**
**अत्र क्रमेण वक्तव्यं प्रायः सूत्रेषु सर्वतः[4] ।।**

---

१. प्रदीप ७।२।६३ ।। २. मुग्धबोधटीका २१ ।।
३. कातन्त्र टीका० २।१।२४ ।।
४. हरि० विष्णुपदप्रकरणे सूत्र० १५६ ।।

इति क्रमं उक्तः, सोऽपि शास्त्रद्वयेऽत्र न सर्वथा संवदते। **सतो हि कार्यिणः कार्येण भवितव्यम्**[1]—इत्यपि नियमो—वृद्धिरादैच् (अ० १।१।१), अपृक्त एकाल्प्रत्ययः (अ० १।२।४१), सिमादितोऽष्टौ स्वराणाम् (वा० प्रा० १।४४), प्लुतस्त्रिः (वा० प्रा० १।५८) इत्यादिषु व्यभिचरति। विनियमहेतुस्त्वत्र शास्त्रयोः प्रोक्तत्वं स्यात्।

पाणिनीयतन्त्रे कार्यिनिमित्तकार्येषु यथासंख्यं षष्ठी, पञ्चमी-सप्तम्यौ, प्रथमा इत्येता विभक्तयः प्रयुज्यन्ते। हरिनामामृतवृत्तावपि विभक्तिविधिः प्रोच्यते। तथा हि—

**कार्यपूर्वे पञ्चमी स्यात् कार्यस्थाने तु षष्ठिका।**
**कार्ये तु प्रथमा वाच्या सप्तमी विषये परे ॥**[2]

तथा च—ङमो ह्रस्वादचि ङमुण् नित्यम् (अ० ८।३।३२) इत्यादिषु सूत्रेषु विभक्तयो व्यवस्थाप्यन्ते। वाजसनेयिप्रातिशाख्ये तु कार्यी प्रथमया, कार्यं द्वितीयया, पूर्वनिमित्तं पञ्चम्या, परनिमित्तं च सप्तम्या निर्दिश्यते। अत्र कार्यिकार्यनिर्देशः पाणिनीयनिर्देशाद् भिद्यते। अयमेव व्यवहारः प्राचीनप्रातिशाख्येषु समुपलभ्यते।[3] स्वयं चाह वाजसनेयिप्रातिशाख्यकारः—तमिति विकारः (वा० प्रा० १।१३३) इति। ईदृग्विभक्तिनिर्देशस्य व्यभिचारोऽपि कदाचिद् उभयत्र समुपलभ्यते। तद्यथा—पाणिनीयतन्त्रे—हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् (अ० ६।१।६८), चितः (अ० ६।१।१२३), ति विंशतेर्डिति (अ० ६।४।१४२), तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य (अ० ७।१।७४), सदिरप्रतेः (अ० ८।३।६६) इत्यादिषु सूत्रेषु कार्यी प्रथमया निर्दिश्यते।[4] वाजसनेयिप्रातिशाख्ये कार्यी क्वचित् षष्ठ्यापि निर्दिश्यते। यथा—यवयोः पदान्तयोः स्वरमध्ये लोपः (वा० ४।१२५) इति। तथा च परिभाष्यते—षष्ठी स्थानेयोगा (वा० प्रा० १।१३६) इति। तेनेत्यागमः (वा० प्रा० १।१३७) इति

---

१. महा० १।१।१ ॥ २. द्र०—पृष्ठ ४४ टि० ४ ॥

३. असावमुम् इति तद्भावमुक्तं यथान्तरम्। ऋ० प्रा० १।५६, आकार आगमविकारिलोपिनाम्। तै० प्रा० १।२३, अं० विकारस्य। तै० प्रा० १।२८ ॥

४. इमे निर्देशाः पूर्वाचार्याणां स्युः। तथा चाह महाभाष्यकारः—पूर्वसूत्रनिर्देशश्च चित्वान् चित इति (महा० ६।१।१२६)। तत्रैव च कैयटः—पूर्वव्याकरणे प्रथमया कार्यी निर्दिश्यते—इत्यवोचत्।

परिभाषावशात् प्रातिशाख्ये आगमनिर्देशस्तृतीयया क्रियते। यथा—ङ्नौ क्ताभ्यां सकारे (वा० प्रा० ४।१४) इति।

### १. ९. ११. अर्थनिर्देशः—

आचार्याः सूत्रेषु क्वचिद् अर्थान् निर्दिशन्ति क्वचिद् न निर्दिशन्ति। तथा चाह पतञ्जलिः—**एवमर्थं खल्वप्याचार्यश्चित्रयति, क्वचिद् अर्थान् आदिशति क्वचिन्नेति**[1]—इति। आचार्यः पाणिनिर्बहुषु स्थलेषु कण्ठतोऽर्थान् निर्दिदेश, वहुष्वन्येषु च स्वप्रवृत्तिविशेषेणार्थान् बोधयामास[2]। प्रातिशाख्यकारः कात्यायनोऽपि प्राधान्येन स्वरप्रकरणेऽर्थान् निर्दिदेश, सन्ध्यादौ तेषाम् अनपेक्षणात्। यथा पाणिनीयतन्त्रे बहुविधोऽर्थनिर्देशः, न तथा वाजसनेयिप्रातिशाख्ये। उभयत्र सामान्येन सप्तम्या विभक्त्यार्थो निर्दिश्यते। यथा—क्षयो निवासे (अ० ६।१।२०१), परः प्रधाने (वा० प्रा० २।२७)। पाणिनीयतन्त्रे तु क्वचित् प्रथमयाप्यर्थो निर्दिश्यते, जयः करणम् (अ० ६।१।२०२) इति यथा। उभयोः शास्त्रयोः केषुचन स्थलेष्वर्थशब्देन समासं विधायार्थो निर्दिश्यते। तद्यथा—अके जीविकार्थे (अ० ६।२।७३), तृतीयार्थे (अ० १।४।८५), वो वान्ते त्वदर्थे (वा० प्रा० २।५), धात्वर्थे यकारे स्वरपूर्वे (वा० प्रा० ५।१०)। पाणिनीयतन्त्रे यथा सामान्यनिर्देशे विशेषोऽवगम्यते, तथैव वाजसनेयिप्रातिशाख्येऽप्यवलोक्यते। तद्यथा—नौ वृ धान्ये (अ० ३।३।४८), कर्णः स्वाङ्गे (वा० २।३१)।

शास्त्रद्वयेऽपि निर्दिष्टा अर्थाः समासतो वर्गीक्रियन्ते—

(१) **वाच्यार्थाः**—केषुचित् सूत्रेषु वाच्यार्थो निर्दिश्यते। यथा—प्रष्ठोऽग्रगामिनि (अ० ८।३।९२), मात्रा च परिमाणे (वा० प्रा० २।२८)।

(२) **विषयार्थाः**—क्वचिद् विषयोऽर्थत्वेन निर्दिश्यते। यथा—कपिष्ठलो गोत्रे (अ० ८।३।९१), सुकृतं भूते (वा० प्रा० २।४५)।

(३) **विशेषणार्थाः**—क्वचिद् अर्थनिर्देशो विशेषणार्थो भवति। यथा—गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु (अ० ५।१।१३४), महो नपुंसके (वा० प्रा० ६।३२)।

---

१. महा० ३।१।१९॥

२. रामशंकरभट्टाचार्यः, पा० व्या० अनु०, पृ० २७२-२७९॥

(४) **गम्यमानार्थाः**—क्वचिद् गम्यमानोऽर्थो निर्दिश्यते । यथा—निनदीभ्यां स्नातेः कौशले (अ० ८।३।८९), आसीदिति चोत्तरं विचारे (वा० प्रा० २।५३) ।

## १. ५. १२. सौत्रनिर्देशः

पाणिनीयाष्टक-कात्यायनीयप्रातिशाख्ययोः सूत्रेषु प्रयुज्यमानाः केचन शब्दाः सामान्येन व्यवह्रियमाणां प्रक्रियां नानुरुन्धन्ति । महाभाष्यकारादिभिरीदृशाः प्रयोगाः—**छन्दोवत् सूत्राणि भवन्ति**[1], **सौत्रो निर्देशः**[2]—इत्यादिवचनैः समाधीयन्ते ।[3] अर्वाक्कालिका विद्वांस एवंविधान् प्रयोगान् असाधून् मन्यमानाः प्रयोगानर्हान् एव घोषयन्ति । तथा चोचे कुमारिलः—

**सूत्रवार्त्तिकभाष्येषु दृश्यते चापशब्दनम् ।**
**अश्वारूढाः कथं ह्यश्वान् विस्मरेयुः सचेतनाः ॥**[4] इति ॥

वस्तुतस्तु नैते प्रयोगा असाधवः, अपितु पाणिन्यादिभिः प्रामाणिकैराचार्यैः पुरातनेभ्यस्तन्त्रेभ्य उद्धृत्य तत्र तत्र प्रयुक्ताः, प्रधानविधीनामेवोपदेशत्वाच्च स्वस्वशास्त्रे न संस्कृताः ।[5]

पाणिनीयतन्त्रे कात्यायनीयप्रातिशाख्ये चोपलभ्यमानाः सौत्रनिर्देशा अत्र संक्षेपेण विविच्यन्ते ।

(१) **रूपभेदः**—सूत्रस्थानां केषाञ्चन पदानां रूपाणि यथाशास्त्रं नोपलभ्यन्ते । तद्यथा—तिर्यच्यपवर्गे (अ० ३।४।६०) अन्वच्यानुलोम्ये (अ० ३।४।६४), प्रोक्ताल्लुक् (अ० ४।२।६४)—इत्यत्र यथाक्रमं तिरश्चि, अनूचि, प्रोक्ताद् इति रूपैर्भाव्यम् । सर्वत्रैवात्र महाभाष्यकारः—**सौत्रो निर्देशः**—इति समादधौ ।

(२) **विभक्तिव्यत्ययः**—शास्त्रद्वयेऽपि विभक्तिव्यत्ययो बहुषु स्थलेषु समवलोक्यते । पाणिनीयतन्त्रे तावत्—ऋहलोर्ण्यत् (अ०

---

१. महा० १।१।१ ॥

२. महा० ३।४।६०,६४; ४।२।६४ ॥

३. छन्दोवत् सूत्राणीत्यत्र प्रयुक्तस्य सूत्रशब्दस्य कल्पसूत्राभिधायकत्वाद् असमीचीनोऽयं समाधिरिति भट्टाचार्यः । द्र०—पा० व्या० अनु०, पृ० ९९-१०० ॥

४. तन्त्रवार्त्तिक १।३।२४, पूर्वपक्षोऽयम् ॥

५. सं० व्या० इ० प्रथमभाग पृ० ३२-३३ ॥

३।१।१२४) इत्यत्र प्रत्ययविधित्वात् पञ्चम्या भाव्यम्, परश्च (अ० ३।१।२) इत्यधिकारात्, तद्योगे च पञ्चमीविधानात्[1]। विभक्ति-व्यत्ययेनात्र षष्ठी। तथा चोक्तं वृत्तिकृता-**पञ्चम्यर्थे षष्ठी**[2]-इति। कैयटस्त्वीदृशेषु स्थलेषु प्रयुक्तां षष्ठीम् आनन्तर्यसम्बन्धे व्याचष्टे[3]। बालमनोरमाकारोऽपि विभक्तिव्यत्ययं निर्दिशति-ऋत् हन् **अनयोर्द्वन्द्वात् पञ्चम्यर्थे षष्ठी, स्ये इति षष्ठ्यर्थे सप्तमी**[4]-इति। कैयटः खल्वपि व्यत्ययं प्रदर्शयति-**दीर्घाच्छे तुग् भवतीत्यत्र षष्ठीस्थाने व्यत्ययेन पञ्चमी**[5]-इति। वाजसनेयिप्रातिशाख्ये खल्वपि-वांसौ च भूतकाले स्वरेण ह्रस्वादनुषि (वा० प्रा० ५।११) इत्यत्राह व्याख्याकार उवटः-**एवं तृतीया पञ्चम्यर्थे इति विभक्तिव्यत्ययेन योजना**[6]-इति।

कुषिरजोः प्राचां श्यन् परस्मैपदं च (अ० ३।१।९०) इति सूत्रे कुषिरजोरित्यत्र पञ्चमीस्थाने षष्ठी। एतत्सूत्रस्थस्य प्राचाम् इति पदस्य प्रयोगेणानुमीयते-प्राञ्च आचार्याः स्वकीयतन्त्रेषु परयोगे षष्ठीं प्रयुयुजिरे, तत एव च पाणिनिः सूत्राणीमानि संजग्राहेति[7]।

(३) **विभक्तिलुक्**—न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः[8]-इति शाब्दिके समये सत्यपि पाणिनीयतन्त्रे वाजसनेयिप्रातिशाख्ये च बहवः प्रयोगा विभक्तिरहिता उपलभ्यन्ते। एक तद्धिते च (अ० ६।३।६२) इत्यत्र केवला प्रकृतिः प्रयुज्यते-एक इति, द्वित्रिभ्यां ष मूर्ध्नः (अ० ५।४।११५) इत्यत्र च केवलः प्रत्ययः प्रयुज्यते—ष इति। वाजसनेयिप्रातिशाख्येऽपि—विश्व सहभुवपुषवसुषु (वा० प्रा० ३।१०२) इत्यत्र केवला प्रकृतिः प्रयुज्यते-विश्व इति। एवं यत्र न्याय्या विभक्तिर्न श्रूयते, तत्र तस्या लुक् कल्प्यते व्याख्याकृद्भिः। तथा चोक्तं वृत्तिकृता-**प्रातिपदिकग्रहणम् असमस्तमेव सुपां सुलुग् इति**

---

१. अ० २।३।२९ ॥ २, का० ३।१।१२४ ॥
३, प्रदीप १।१।४५ ॥
४. बालमनोरमा ७।२।७० ॥
५. प्रदीप १।१।६६ ॥
६. वा० प्रा० ५।११ उ० भा० ॥
७. आइ० एस० पावटे : स्ट्रक्चर आफ अष्टाध्यायी, पृ० १३४ ॥
८. महा० १।२।६४ ॥

**षष्ठ्या लुका निर्दिष्टम्**[1]–इति। तत्त्वबोधिनीकारः खल्वप्याह–**नेति लुप्तषष्ठीकं पदं सौत्रत्वात्**[2]–इति।

(४) **लिङ्गभेदः**—सूत्रेषु क्वचिद् न्याय्यस्य लिङ्गस्य स्थाने लिङ्गान्तरं प्रयुज्यते। तथा च—ऊकालोऽज्झ्रस्वदीर्घप्लुतः (अ० १।२।२७) इत्यत्र नपुंसकलिङ्गे प्राप्ते सौत्रत्वात् पौंस्नम्। जिनेन्द्रबुद्धिरवोचत्—**अनेन तदर्थमित्यत्र सुब्व्यत्ययेन सप्तम्याः स्थाने प्रथमा, लिङ्गव्यत्ययेन च स्त्रीलिङ्गस्य स्थाने नपुंसकलिङ्गं कृतमिति दर्शयति**[3]–इति। बालमनोरमा-तत्त्वबोधिनीकारावप्याहतुः—(छदिरुपधिबलेरित्यत्र) **समाहारद्वन्द्वे सौत्रं पुंस्त्वम्**[4]—इति। युवोरनाकौ (अ० ७।१।१) इति सूत्रे कैयटः—**तत्र सौत्रत्वान्निर्देशस्य नुममकृत्वोकारलोपं वा कृत्वा निर्देश इति न दोषः**[5]–इति जगाद।

(५) **वचनभेदः**—पाणिनीयतन्त्रे वचनभेदोऽपि बहुषु स्थलेषु लक्ष्यते। तमेवाभिसमीक्ष्याभियुक्तैः परिभाष्यते—**सूत्रेषु लिङ्गवचनमतन्त्रम्**[6]–इति। महाभाष्यकारोऽप्यत्रानुकूलः, तथा चाह तत्र भवान्—**नात्र बहुवचनेन निर्देशस्तन्त्रम्**[7]–इति। क्वचित्तु वचनभेदेनाचार्योऽभिप्रायविशेषं ज्ञापयति। तथा हि–अर्द्धर्चाः पुंसि च (अ० २।४।३१) इत्यादिषु बहुवचनं गणावबोधकमिति पूर्वमुक्तमेव। नदीभिश्च (अ० २।१।२०) इत्यत्र बहुवचनं नदीशब्दविशेषस्य नदीवाचकानां च ग्राहकम् इति भाष्ये स्पष्टम्[8]। अन्यान्यपि बहूनि प्रयोजनानि व्याख्यातृभिरूहितानि[9]। वाजसनेयिप्रातिशाख्ये तु नैषा शैली समुपलभ्यते।

### १. ५. १३. वर्ण-धातु-निर्देशः—

पाणिनीयतन्त्रे वाजसनेयिप्रातिशाख्ये च वर्णा बहुभिःप्रकारैर्निर्दिश्यन्ते। प्रातिशाख्ये एतद्विषयिण्यः परिभाषा अप्यारभ्यन्ते।[10] परं ताः

---

१. का० ८।२।७ ॥
२. तत्त्वबोधिनी ८।२।७ ॥
३. न्यास ५।१।१२ ॥
४. बालमनोरमा—तत्त्वबोधिनी० ५।१।१३ ॥
५. प्रदीप ७।१।१ ॥
६. सीर० परि० ३० ॥
७. महा० १।२।३९ ॥
८. महा० १।१।२३ ॥
९. पा० व्या० अनु०, पृ० ३१५-३२१ ॥
१०. वा० प्रा० १।३६-४१ ॥

सव्यभिचारा इति संज्ञापरिभाषाविमर्शे प्रदर्शयिष्यते । शास्त्रद्वये सूत्रेषूपलभ्यमाना वर्णनिर्देशप्रकारास्तावद् उपन्यस्यन्ते—

(१) **असहायो वर्णः**—सहायान्तररहिताः केवला वर्णा उभयत्र शास्त्रयोर्निर्दिश्यन्ते । तत्र सहायान्तररहितानां स्वराणां प्रयोगो वाजसनेयिप्रातिशाख्ये नावलोक्यत इति विशेषः । पाणिनीयतन्त्रे तावत्—यस्येति च (अ० ६।४।१४८), ओः सुपि (अ० ६।४।८३), उरण् रपरः (अ० १।१।५१), रो रि (अ० ८।३।१४) इति । वाजसनेयिप्रातिशाख्ये खल्वपि—वेर्युदयः (वा० प्रा० ३।६७), ङ्नौ क्ताभ्यां सकरे (वा० प्रा० ४।१४) इति ।

(२) **अकारपरकः**—व्यञ्जननिर्देशः प्रायोऽकारेण क्रियते । यथा—ढो ढे लोपः (अ० ८।३।१३), चछयोः शम् (वा० प्रा० ३।७) ।

(३) **इकारपरकः**—व्यञ्जनं क्वचिद् इकारेण निर्दिश्यते । यथा—कुतिहोः (अ० ७।२।१०४), हेर्मिथोदयः (वा० ३।६८), शिलिसिवर्गमध्यमव्यवहितोऽपि (वा० प्रा० ३।६६) ।

(४) **उकारपरकः**—व्यञ्जनस्योकारपरको निर्देशोऽतिविरलः, प्रातिशाख्ये एवोपलभ्यते, स चापि नकारस्यैव । यथा—नुः (वा०प्रा० ३।१३४) ।

(५) **एफपरकः**—प्रातिशाख्ये र-वर्ण एफपरको निर्दिश्यते । यथा—करेफाभ्यां च (वा० प्रा० ३।५८) । नैषा परिपाटी पाणिनीयाष्टाध्याय्यां समाश्रीयते । पाणिनीयसम्प्रदाये तु सर्वैरवलम्ब्यत एषा पद्धतिः । तथा च—**राद् इफः**[1]—इति वार्त्तिककारः ।

(६) **कारपरकः**—प्रातिशाख्ये कारशब्देन वर्णा निर्दिश्यन्ते । तत्र व्यञ्जननिर्देशे कारोऽकारेण व्यवधीयते । यथा—ककारपकारयोः सकारम् (वा० प्रा० ३।२१) । अष्टाध्याय्यां तु क्वचिदपि वर्णः कारेण न निर्दिष्टः । उच्चैस्तरां वा वषट्कारः (अ० १।२।३५) इत्यत्र पाणिनिः कारपरकं वषट्शब्दं प्रयुयुजे । पाणिनीयसम्प्रदाये तु वर्णाः कारेण निर्दिश्यन्ते । तथा च वार्त्तिककारो विधत्ते—**वर्णात् कारः**[2]—इति ।

---

१. महा० ३।३।१०८ वा० ४ ॥

२. महा० ३।३।१०८ वा० ३ ॥

(७) **इतिपरकः**—इतिना वर्णानां निर्देशः प्रातिशाख्य एव क्रियते, न पाणिनीयाष्टके। स चापि वर्णसमाम्नायेऽष्टमेऽध्याय एव दृश्यते नान्यत्र। यथा–अ इति—(वा० प्रा० ८।३)।

(८) **वर्णपरकः**—द्वयोरपि शास्त्रयोर्वर्गशब्देनापि क्वचिद् वर्णा निर्दिश्यन्ते। यथा–सहिवहोरोदवर्णस्य (अ० ६।३।११२), यीवर्णयो-र्दीधीवेव्योः (अ० ७।४।५३), कण्ठ्याद् इवर्ण एकारम् (वा० ४।५२), उवर्ण ओकारम् (वा० प्रा० ४।५३)।

वर्णकारयोरयं विशेषः—वर्णशब्दो ह्रस्वस्वराणामेव निर्देशकत्वेन प्रयुज्यते, तथा निर्दिश्यमानाश्च स्वराः स्वसवर्णान् अपि संग्राहयन्ति। कारस्तु सामान्येन स्वरव्यञ्जनानां निर्देशकः तथा निर्दिश्यमानाश्च वर्णाः स्वरूपमेव संग्राहयन्ति।[1]

(९) **संख्यया**—प्रातिशाख्ये पूरणप्रत्ययान्तैः शब्दैरपि वर्गस्था वर्णा निर्दिश्यन्ते। पाणिनीयाष्टके तु तादृशो व्यवहारो नोपलभ्यते। प्रातिशाख्ये –प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः (वा० प्रा० ४।१०८), पञ्चमे पञ्चम् (वा० प्रा० ४।१२१)।

स्पर्शवर्णानां वर्गनिर्देशो द्वयोरपि शास्त्रयोः परिभाषाभ्यां निय-म्यते। तथा च पाणिनीयतन्त्रे–अणुदित्सवर्णस्य चाप्रत्ययः (अ० १।१।६९) इति सूत्रेण वर्गस्य प्रथमवर्ण उकारपरकः सर्वान् स्ववर्गीयवर्णान् संग्राहयति। यथा–अट्कुप्वाङ्नुम्व्यवायेऽपि (अ० ८।४।२)। वाज-सनेयिप्रातिशाख्ये तु–प्रथमग्रहणे वर्गम् (वा० प्रा० १।६४) इति परिभाषया वर्गस्य प्रथमो वर्णः (अकारपरकः) सम्पूर्णं वर्गं प्रत्याय-यति। यथा–इचशेयास्तालौ (वा० प्रा० १।६६), स्वरयवहकपैश्च (वा० प्रा० ३।८६)। अतो व्यतिरिक्तोऽपि द्विविधो निर्देशः प्राति-शाख्य उपलभ्यते। प्रथमस्तावत्—वर्गे च (वा० प्रा० ३।९४) इत्यत्र-वर्गपरकः प्रथमवर्णो वर्गशब्दोपेतः सम्पूर्णं वर्गं बोधयति। द्वितीयः—तकारवर्गश्चकारवर्गे चकारवर्गम् (वा० प्रा० ४।९४) इत्यत्र कार-वर्गपरकः प्रथमवर्णः (अवर्णपरकः) सम्पूर्णं वर्गं द्योतयति।

धातूनां निर्देशोऽपि द्वयोः शास्त्रयोर्बहुविध उपलभ्यते। निर्देश-प्रकारा अत्रोपस्थाप्यन्ते—

---

१. तु०—पाणिनि, पृ० ४६॥

(१) **स्वरूपेण**—स्वरूपतो धातुर्निर्देशे द्वैधम् अवलोक्यते । प्रथमः-सानुबन्धकस्य धातोर्निर्देशः । यथा-शीङः सार्वधातुके गुणः (अ० ७।४।२१) । ईदृग् धातुनिर्देशः पाणिनीयाष्टक एवोपलभ्यते, न प्रातिशाख्ये । द्वितीयः-निरनुबन्धकस्य धातोर्निर्देशः । यथा-शुषः कः (अ० ८।२।५१), पचो वः (अ० ८।२।५२), नेः स्त्यास्तनोः (वा० प्रा० ३।७०) ।

(२) **अकारेण**—पाणिनीयाष्टके धातूनां निर्देशः प्रायोऽकारेण क्रियते । यथा—आङो यमहनः (अ० १।३।२८), गमहनजनखनघसां लोपः क्ङित्यनङि (अ० ६।४।९८) ।

(३) **इक्प्रत्ययेन**—उभयत्र शास्त्रयोरिक्प्रत्ययेन धातवो निर्दिश्यन्ते । वार्त्तिककारोऽप्यनुविधत्ते—**इक्श्तिपौ धातुनिर्देशे**[1]-इति । यथा-तृषिमृषिकृषेः काश्यपस्य (अ० १।२।२५), सहेः पृतनायाः (वा० प्रा० ३।७५) ।

(४) **श्तिप्प्रत्ययेन**—बहुषु स्थलेषु धातुनिर्देशः श्तिप्प्रत्ययेन क्रियते वार्त्तिककृतापि पूर्वप्रदर्शितवार्त्तिकेन श्तिप्प्रत्ययो विधीयते । यथा-एत्येधत्यूठ्सु (अ० ६।१।८९), नेः सीदतेः (वा० प्रा० ३।५९) ।

(५) **तिप्रत्ययेन**—क्वचित् तिप्रत्ययान्ता अपि धातव उपलभ्यन्ते । यथा-सर्त्तिशास्त्यर्तिभ्यश्च (अ० ३।१।५६) इत्यत्र सर्त्यर्त्ती, प्र नेतिनुदतिहिनोमीनाम् (वा० प्रा० ३।८९) इत्यत्र नेतिः । सामान्यग्रहणार्थं क्वचिद् न्याय्यविकरणं परित्यज्यते । यथा-विभाषा लीयतेः (अ० ६।१।५१) इत्यत्र यका निर्देशः ।

(५) **विकारेण**—क्वचिद् विकृता अपि धातवो निर्दिश्यन्ते । यथा-लुटि च क्लृपः (अ० १।३।९३), धिन्विकृण्व्योर च (अ० ३।१।८०); नेः स्त्यास्तनोः (वा० प्रा० ३।७०) इत्यत्र क्लृपादिनिर्देशः ।

## १. ५. १४. उत्सर्गापवादौ—

प्रतिपत्तिलाघवम् उद्दिश्य शास्त्रकाराः सामान्यविशेषविधीन् आश्रयन्ति । इयं प्रतिपादनपद्धतिरुत्सर्गापवादशैलीनाम्नात्र व्यप-

---

१. महा० ३।३।१०८ वा० २ ॥

दिश्यते। महाभाष्यकारः पाणिनीयतन्त्रे प्रयुक्ताम् इमां शैलीं प्रदर्शयन्नाह–तस्माद् अनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः। कथं तर्हीमे शब्दाः प्रतिपत्तव्याः ? किञ्चित् सामान्यविशेषवल्लक्षणं प्रवर्त्यं येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्। किं पुनस्तत् ? उत्सर्गापवादौ। कथञ्जातीयकः पुनरुत्सर्गः कर्त्तव्यः कथञ्जातीयकोऽपवादः ? सामान्येनोत्सर्गः कर्त्तव्यः, तद्यथा–कर्मण्यण् (अ० ३।२।१)। तस्य विशेषेणापवादः, तद्यथा–आतोऽनुपसर्गे कः (अ० ३।२।३)[1]–इति। तथैव वाजसनेयिप्रातिशाख्येऽपि सूत्राणि सामान्यविशेषरूपेणोत्सर्गापवादशैल्या पठ्यन्ते। तद्यथा–प्रत्ययसवर्णं मुदि शाकटायनः (वा प्रा० ३।९) इत्युत्सर्गः, लुङ् मुदि जित्परे (वा० प्रा० ३।१३) इत्यपवादः।

उत्सर्गः सामान्यविधित्वाद् महाविषयः[2]। अपवादः पुनर्येन नाप्राप्तिन्यायेन[3] बाधकत्वाद् अल्पविषयः। प्रवृत्तिदृष्ट्या तु विशेषत्वात् पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः[4]। सामान्येनोत्सर्गाः पुरस्तात् पठ्यन्ते, ततोऽपवादाः। क्वचित्तु प्रयोजनविशेषं मनसिकृत्य पुरस्ताद् मध्ये चापवादा विन्यस्यन्ते शास्त्रकारैः। तथा हि–पाणिनीयतन्त्रे-ह्वावामश्च (अ० ३।२।२) इत्यपवादः, आतोऽनुपसर्गे कः (अ० ३।२।३) इत्युत्सर्गात् पूर्वं न्यस्यते। तथा कृञो हेतुताच्छील्यानुलोम्येषु (अ० ३।२।२०) इत्यपवादः, कर्मण्यण् (अ० ३।२।१), सुप्यजातौ णिनिस्ताच्छील्ये (अ० ३।२।७२) इत्युत्सर्गयोर्मध्य उपन्यस्यते। एतेषां विधीनां व्यवस्थार्थं–पुरस्ताद् अपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्[5], मध्येऽपवादा पूर्वान् विधीन् बाधन्ते नोत्तरान्[6]–इति परिभाषे आश्रीयेते। वाजसनेयिप्रातिशाख्येऽप्युत्सर्गात् पूर्वं परं वापवादः पठ्यते। तद्यथा–गाहमान–(वा० प्रा० ४।६३) इत्यादयोऽपवादा योगाः, प्रकृतिभाव ऋक्षु (वा० ४।८०) इत्यस्य योगस्य पुरस्ताद्, जुषाणश्चानध्वनि (वा० प्रा० ४।८१) इत्यादयोऽपवादास्तु परस्तात्। प्रातिशाख्यस्याल्पविषयत्वाद् अत्रोत्सर्गापवादा न तथा गुम्फिता यथा पाणिनीयतन्त्र इति विशेषः।

---

१. महा० पस्पशा० ॥
२. ऋ० प्रा० १।५३ उ० भा० ॥
३. सीर० परि ४८ ॥
४. परि० ६२ ॥
५. सीर० परि० ४४ ॥
६. सीर० परि० ४७ ॥

### १. ५. १५. लक्षणप्रपञ्चौ—

उत्सर्गापवादन्यायेनोपन्यस्तैरपि सूत्रैर्विषयविभागेन प्रतिपत्तिर्न सुकरेत्यनुनिशम्य प्राचार्याः स्वशास्त्रेषु प्रपञ्चशैलीमपि यथेष्टम् उपयुयुजिरे। तथा च प्रोवाच पतञ्जलिः—**ते वै खल्वपि विधयः सुपरिगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च। केवलं लक्षणं केवलः प्रपञ्चो वा न तथा कारकं भवति**[1]–इति। भाष्यवचनानि व्याचक्षाणः कैयटो जगाद–**सामान्यलक्षणं बहुलग्रहणादियुक्तं विषयविभागस्याप्रतिपादकत्वान्न तथा कारकम्। प्रपञ्चोऽप्यानन्त्यप्रसङ्गान्न कारक इति मध्यमावस्थाश्रीयत इत्यर्थः**[2]–इति। इयं लक्षणप्रपञ्चशैली पाणिनीयतन्त्रे वाजसनेयिप्रातिशाख्ये च प्रयुज्यते। तद्यथा—कर्तृकरणे कृता बहुलम् (अ० २।१।३२) इति लक्षणं विधाय सूत्रकारः पुनरारभते—कृत्यैरधिकार्थवचने (अ० २।१।३३) इति। अस्मिन् प्रकरणे बहुलग्रहणादेव सिद्धेष्वपि बहुषूदाहरणेषु पुनः सूत्रारम्भः प्रपञ्चार्थ एव।[3] तथैव सत्सूद्विष० (अ० ३।२।६१) इत्यत्र क्विपो विधिः प्रपञ्चार्थः। तथा चाह वृत्तिकारः–**अन्येभ्योऽपि दृश्यन्ते, क्विप् च (अ० ३।२।७६) इति सामान्येन वक्ष्यति, तस्यैवायं प्रपञ्चः**–[4] इति। वाजसनेयिप्रातिशाख्ये खल्वपि—प्रकृत्या नानापदस्थे नकारे (वा० प्रा० ३।८१) इति सूत्रेण सकारस्य प्रकृतिभावो (मूर्द्धन्यप्रतिषेधः) विधीयते। पुनरग्रिमे सूत्रेऽनुसन्तनोतु० (वा० प्रा० ३।८३) इति प्रपञ्चेनोदाहरणानि विन्यस्यन्ते।

### १. ५. १६. समस्तासमस्तपद-प्रयोगः—

उभाभ्यामपि शास्त्रकृद्भ्यां सूत्रेषु समासशैली व्यासशैली च समाश्रीयेते। समासशैल्याः प्रयोजनं प्रायः शाब्दिकं लाघवं भवति। व्यासशैली तु स्पष्टप्रतिपत्त्यर्थं यथावसरम् आश्रीयते। पाणिनिर्निपातनसूत्रेषु प्रायेण न समासशैलीम् अवलम्बयति। यथा—दाश्वान् साह्वान् मीढ्वांश्च (अ० ६।१।१२)। क्वचित्तु प्रयोजनवशाद् अवलम्बयत्यपि। यथा—क्षुब्धस्वान्त० (अ० ७।२।१८)। क्वचित् समासव्यासयोः सम्मिश्रणम् अप्युपलभ्यते। यथा–ग्रसितस्कभित० (अ०

---

१. महा० ६।३।१४॥ २. प्रदीप ६।३।१४॥

३. का० २।३।३८-४१॥ ४. का० ३।२।६१॥

७।२।३४)। वाजसनेयिप्रातिशाख्ये[1] व्यासशैल्याः प्राधान्यम्। यथा–अश्वरश्मिमति० (वा० प्रा० ३।९८)। बहुषु सूत्रेषु समासशैली समवलम्ब्यते। यथा—अभि विख्येषंवीरविश्व० (वा० प्रा० ३।१००)। प्रातिशाख्येऽयमपि विशेषः–केषुचित् सूत्रेषु व्यासेन पदानि विन्यस्यन्ते, अन्ते च–इत्येतेषु–इति प्रयुज्यते। तद्यथा–विश्वा ऊष्मान्तं परिद्विषस्त्वं त्वां···तेऽसीत्येतेषु (वा० प्रा० ४।२६)। सुग्रहत्वाद् इयं परिपाटी प्रातिशाख्यकारेणाङ्गीकृता।

### १. ५. १७. पद्यात्मकता—

पाणिनीयाष्टके वर्त्तमानाः कतिपये योगाः पद्यांशा इव प्रतिभान्ति। यथा–पक्षिमत्स्यमृगान् हन्ति, परिपन्थं च तिष्ठति (अ० ४।४।३५,३६), वृद्धिरादैजदेङ्गुणः (अ० १।१।१,२)। अत्र प्रथमसूत्रयुगलम् अनुष्टुभो द्वौ चरणौ, द्वितीयसूत्रयुगलं चानुष्टुभ एकचरणः। घुणाक्षरन्यायेनैतत् समपद्यत, पाणिनेर्वा ज्ञानपूर्वकं तथा विधानं, पूर्वाचार्यानुरोधाद् वेति निर्णयो यद्यपि न सर्वत्र सुकरः, तथापि रचनाविपर्यासम् अभिसमीक्ष्येदम् अवसीयते यद् एषु कतिचन सूत्राणि छन्दोबद्धग्रन्थेभ्य उद्धृतानि शास्त्रकृता।[1] एवं च–परिपन्थं च तिष्ठति (अ० ४।४।३६) इत्यत्रत्यस्य चकारस्य भिन्नक्रमत्वं[2], वृद्धिरादैच् (अ० १।१।१) इत्यत्र विधेयस्यादौ निक्षेपश्च सङ्गच्छेते। अस्तु, नैषा शैली पाणिनेः।

वाजसनेयिप्रातिशाख्ये त्रयोदश श्लोकार्द्धा अन्तिमेऽध्याये सन्निविष्टा उपलभ्यन्ते। तेषु वर्त्तमानः—

**क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।**
**सत्त्वाभिधायकं नाम निपातः पादपूरणः॥**[3]

इति श्लोक ऋक्प्रातिशाख्येऽपि समुपलभ्यते[4]। पूर्वकालवर्त्तिन ऋक्प्रातिशाख्याद् अयं श्लोक उद्धृतः स्याद्। एतच्च–अन्त्यौ द्वावध्यायौ न कात्यायनप्रोक्ता इति वेबरमतं द्रढयति। अपिच–अथापि

---

१. सं० व्या० इ० प्रथमभाग, पृ० २२१; पा० व्या० अनु०, पृ० ८६,-८७॥
२. का० ४।४।३६॥
३. वा० प्रा० ८।६२॥
४. ऋ० प्रा० १२।२५॥

भवति (वा० प्रा० ८।४२) इति सूत्रम् इमान् श्लोकान् अन्यदीयान् घोषयति। तस्मान्नैषा शैली प्रातिशाख्यकारस्य कात्यायनस्य ।

### १. ९. १८. इतिपदप्रयोगः—

पाणिनीयाष्टके कात्यायनीयप्रातिशाख्ये च वहुषु सूत्रेष्वितिशब्दः प्रयुज्यते। यद्यप्यस्य प्रयोगः सर्वत्रैकरूपतां न भजते, तथापि प्रतिपादनपद्धतेः प्रदर्शकत्वाद् इहास्य शास्त्रद्वये प्रयोजनविशेषा निरूप्यन्ते ।

(१) **स्वरूपप्रदर्शनम्**—द्वयोरपि शास्त्रयोरितिशब्दः प्रायः स्वरूपप्रदर्शनार्थः प्रयुज्यते । पाणिनीयतन्त्रे प्रायश्छान्दसनिपातनानि स्वरप्रतिपादकनिपातारश्चेतिपदेन निर्दिश्यन्ते । तद्यथा–अभ्युत्सादयां० (अ० ३।१।४२), ग्रसितस्कभित० (अ० ७।२।३४), वभूथा० (अ० ७।३।६४), नन्वित्यनुज्ञैषणायाम् (अ० ८।१।४१), हेति०, अहेति० (अ० ८।१।६०-६२,६४), चिदिति०, उपरिस्विदासीदिति च (अ० ८।२।१०१,१०२)। क्वचिद् भाषाप्रयोगाणामपि स्वरूपम् इतिना प्रदर्श्यते। यथा—सख्यशिश्वीति० (अ० ४।१।६२) । वाजसनेयिप्रातिशाख्ये पदस्वरूपं प्राय इतिना प्रदर्श्यते। तद्यथा –आववरिति० (वा० प्रा० १।१६४), इ्वाः सवितः ० (वा प्रा० १।१६८) ।

(२) **अर्थनिर्देशः**—इतिशब्दोऽर्थनिर्देशार्थम् अपि प्रयुज्यते। यथा–पाणिनीये तन्त्रे–न वेति विभाषा (अ० १।१।४४), तस्मिन्निति०, तस्मादित्यु० (अ० १।१।६६,६७) । वाजसनेयिप्रातिशाख्येऽपि–तमिति० तस्मिन्निति, तस्मादित्यु०, तेनेत्या (वा० प्रा० १।१३३-१३५, १३७) ।

(३) **प्रकारार्थः**—इतिशब्दः केषुचित् सूत्रेषु प्रकारं प्रदर्शयति । तद्यथा—विदाङ्कुर्वन्त्वित्यन्यतरस्याम् (अ० ३।१।४१)। तथा चाह वृत्तिकारः–**इतिकरणः प्रदर्शनार्थः, न केवलं प्रथमपुरुषबहुवचनं, किन्तर्हि ? सर्वाण्येव लोड्वचनान्यनुप्रयुज्यन्ते**[1]–इति। तथा—दाधर्ति० (अ० ७।४।६५) इत्यत्रापि–**इतिकरणम् एवंविधानाम् अन्येषाम् उप-**

---

१. का० ३।१।४१ ।।

**संग्रहार्थम्**[1]—इति । उवटः खल्वपि आह—**इति-शब्दः प्रकारप्रदर्शनार्थः**[2]—इति ।

(४) **विवक्षार्थः**—पाणिनीयतन्त्रे नैकसूत्रेषु विवक्षार्थं इतिशब्दः प्रयुज्यते । तद्धितप्रकरणे प्रायेणेति-शब्दो विवक्षार्थः प्रयुक्तः । तथा च तत्र तत्र निर्दिदेश वृत्तिकारः—**इतिकरणो विवक्षार्थः**[3]—इति ।

(५) **आद्यर्थः**—पाणिनिनेतिशब्दः क्वचिद् आद्यर्थेऽपि प्रयुक्तः । यथा—ज्वलितिकसन्तेभ्यो णः (अ० ३।१।१४०), शमित्यष्टाभ्यो घिनुण् (अ० ३।२।१४१) । तथा च तत्र वृत्तिकारो व्याचष्टे—**इति-शब्दः आद्यर्थः**[4]—इति ।

(६) **अधिकारसमाप्तिः**—वाजसनेयिप्रातिशाख्ये क्वचिद् इति-शब्दोऽधिकारसमाप्तिं द्योतयति । यथा—धिष्ण्या वरिवोविदं धिष्ण्या युवमिति च (वा० प्रा० ४।३२) । तथा चोचतुर्व्याख्याकारावुवटानन्तौ—**इतिशब्दः पदाधिकारप्रकरणसमाप्तिज्ञापनार्थः**[5]—इति ।

## १. ६. १९. प्रकीर्णकम्—

पाणिनीयतन्त्रे वाजसनेयिप्रातिशाख्ये च विकल्पनिर्देशकाः शब्दाः प्रायेण समाना एव प्रयुज्यन्ते । यथा पाणिनीये तन्त्रे—विभाषा (अ० १।१।३१), वा (अ० १।२।१३), अन्यतरस्याम् (अ० १।२।२१), बहुलम (अ० २।१।३२), उभयथा (अ० ३।४।११७), विभाषितम् (अ० ७।३।२५), एकेषाम् (अ० ८।३।१०४) इतीमे शब्दा विकल्पार्थकाः श्रूयन्ते, तथैव वाजसनेयिप्रातिशाख्येऽपि—वा (वा० प्रा० १।१४६), बहुलम् (वा० प्रा० ३।१८), एके (वा० प्रा० ३।९२), एकेषाम् (वा० प्रा० ४।५५), अन्यतरतः (वा० प्रा० ५।१५) इतीमे शब्दा वैकल्पिकविधीन् द्योतयन्ति । प्रातिशाख्य इमे शब्दाः सर्वत्रैव व्यवस्थितविकल्पं प्रतिपादयन्ति, पाणिनीयाष्टके तु क्वचिदेवेति

---

१. का० ७।४।६५ ॥
२. वा० प्रा० ३।१४६; ५।४५ उ० भा० ॥
३. का० ४।२।२१,५५,५७,५८; ५।१।१६; ५।२।६४ ॥
४. का० ३।१।१४०; ३।२।१४१ ॥
५. वा० प्रा० ४।३२ उ० भा०, अ० भा० ॥

  

विशेषः[1]। पाणिनीयतन्त्र एते शब्दाः क्वचित् प्रपञ्चमपि प्रकाशयन्ति। तथा चावाचि महाभाष्यकृता–**अवश्यं खल्वप्यस्माभिरिदं वक्तव्यं, बहुलम्, अन्यतरस्याम्, उभयथैकेषामिति। सर्ववेदपारिषदं हीदं शास्त्रम्। नैकः पन्थाः शक्य आस्थातुम्**[2]–इति।

पाणिनीयतन्त्रे मन्त्रः (अ० २।४।८०), छन्दः (अ० १।२।३६), निगमः (अ० ६।३।११३), ऋक् (अ० ४।१।९), यजुः (अ० ६।१।११७), साम (अ० १।२।३४) इत्यादयो वेदसम्बन्धिनः शब्दा अर्थ-विशेषं द्योतयन्ति। तथैव वाजसनेयिप्रातिशाख्येऽपि–छन्दः (वा० प्रा० १।१), आम्नायः (वा० प्रा० १।४), स्वाध्यायः (वा० प्रा० १।१६), वेदः (वा० प्रा० १।१८),यजुः (वा० प्रा० १।१३२), ऋक् (वा० प्रा० ४।८२), साम (वा० प्रा० १।१११) इत्येते वेदसम्बन्धिनः शब्दाः प्रयुज्यन्ते, इमे च तानेवार्थविशेषान् द्योतयन्ति यान् पाणिनीयतन्त्रे।

—:०:—

---

१. पाणिनेर्विकल्पवाचिविभिन्नशब्दप्रयोगस्याभिनवोऽभिप्रायः किपार्सकीम-होदयेन 'पाणिनि ऐज़ ए वेरियेशनिस्ट' इत्याख्ये ग्रन्थे समुद्घाटितः।

२. महा० २।१।५८॥

### द्वितीयोऽध्यायः

# २. ०. वर्णसमाम्नायविमर्शः

भारतीयाः शाब्दिका आचार्या वर्णानां शुद्धोच्चारणविषये सर्वदा सावधानास्तस्थुः। वर्णानाम् अन्यथोच्चारणं पुरा किलासुराणां पराभवहेतुर्बभूव[1] इत्युल्लिख्य महाभाष्यकारः शुद्धोच्चारणस्य महत्त्वं प्रदर्शयति[2]। मन्त्रोच्चारणे खलु वैदिकैः परमसावधानैर्भाव्यम् इति शिक्षाग्रन्थेषु महाभाष्ये चेन्द्रशत्रुदृष्टान्तेन प्रतिपाद्यते[3]। वर्णोच्चारणं सम्यग् अभ्यस्यैव व्याकरणादीनि वेदाङ्गानि वेदश्चाधीयन्ते स्मेति पतञ्जलिवचनैः प्रकटीभवति। तथा हि—**व्याकरणं नामेयम् उत्तरा विद्या। सोऽसौ छन्दःशास्त्रेष्वभिविनीत उपलब्ध्याधिगन्तुमुत्सहते**[4]—इति। अत्र छन्दःशास्त्राणि प्रातिशाख्यशिक्षादीनि[5]—इति नागेशः। शुद्धोच्चारणरक्षायै शिक्षाग्रन्था आचार्यैः प्रोक्ताः। प्रातिशाख्य-व्याकरणयोः शब्दविषयत्वात् तत्रापि वर्णोच्चारणविषयः समासतः प्रतिपाद्यते। अस्मिन् परामर्शे वाजसनेयिप्रातिशाख्यपाणिनीयतन्त्रे आधृत्य वर्णविषयको विचारः प्रस्तूयते।

## २. १. वर्णाभिव्यक्तिः—

वर्णानाम् अभिव्यक्तिम् अधिकृत्य शब्दविदाम् आचार्याणां मतभेदा वाक्यपदीयकारेण भर्तृहरिणा स्वग्रन्थे निर्दशिताः। तत्र कैश्चिद् वायोरन्यैरणूनाम् अपरैश्च ज्ञानस्य शब्दत्वापत्तिः समास्थीयते। तथा हि—

**वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।**
**कैश्चिद् दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः॥**[6] इति॥

---

१. श० ब्रा० ३।२।१, २३, २४॥

२. तेऽसुरा हेलयोहेलय इति कुर्वन्तः पराबभूवुः। महा० पस्पशा०॥

३. दुष्टः शब्दः स्वरतो वर्णतो वा, मिथ्या प्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥
महा० पस्पशा०; तु०—श्लो० पा० शि० ५२॥

४. महा० १।२।३२॥ ५. उद्योत १।२।३२॥

६. वा० प० १।१०७॥

शिक्षाकारैः प्रातिशाख्यकारैश्च प्रायेण वायोः शब्दत्वापत्तिरिष्यते। वाजसनेयिप्रातिशाख्ये–वायुः खात्, शब्दस्तद् (वा० प्रा० १।६, ७) इति सूत्राभ्यां वायोः शब्दत्वापत्तिर्वर्ण्यते। प्रातिशाख्यकारकात्यायनीयप्रक्रियानुसारं वर्णाभिव्यक्तिस्तावद् इत्थं भवति–आकाशाद् वायुर्जायते,[1] शब्दोऽपि वाय्वात्मक एव[2]। वायोः सर्वगतत्वेऽपि न सर्वत्र शब्दोपलब्धिः, सम्यक् करणैरुपहितत्वात्[3]। स च वाय्वात्मकः शब्दः पुरुषप्रयत्नेन स्थानानि प्राप्य वर्णत्वम् उपैति[4]। तत्रोरः कण्ठः शिरश्चेति त्रीणि स्थानानि[5], संवृतविवृताख्ये द्वे करणे[6]। इमानि च स्थानकरणानि शरीरात्[7] निर्गच्छतो वायोर्भवन्ति,मुखस्थानि त्वतोऽन्यानि। शरीराद् निर्गच्छन् वायुस्ताल्वादिषु शरीरावयवेषु[8] वर्णाभिव्यक्तिम्[9] आपद्यते। इयमेव प्रक्रिया हरिणापि प्रदर्श्यते। तद्यथा—

**लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना।**
**स्थानेष्वभिहितो वायुः शब्दत्वं प्रतिपद्यते॥**[10] इति॥

वैयाकरणास्तु–ज्ञानमेव शब्दत्वम् आपद्यत इति संगिरन्ते। तथा चाह पतञ्जलिः–**ज्योतिर्वज्ज्ञानानि भवन्ति**[11]–इति। कैयटश्चैतद् भाष्यं विवृणोति–यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात् तत्त्वेनाध्यवसीयमानं सन्ततं तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्यमानानि सन्ततान्युच्यन्ते। ज्ञानस्य शब्दत्वापत्तिरिति दर्शनमत्र भाष्यकारस्य[12]–इति। भर्तृहरिणा व्यक्ततरशब्दैः पातञ्जलसिद्धान्तस्य प्रक्रिया प्रदर्शिता। तथा हि—

---

१. वायुः खात्। वा० प्रा० १।६॥
२. शब्दस्तत्। वा० प्रा० १।७॥
३. सङ्करोप। वा० प्रा० १।८॥
४. स संघातादीन् वाक्। वा० प्रा० १।९॥
५. त्रीणि स्थानानि। वा० प्रा० १।१०॥
६. द्वे करणे। वा० प्रा० १।११॥
७. शरीरात्। वा० प्रा० १।१२॥ ८. शरीरे। वा० प्रा० १।१४॥
९. शरीरम्। वा० प्रा० १।१३॥
१०. वा० प० १।१०८॥
११. महा० १।४।२९॥ १२. प्रदीप १।४।२९॥

अथाऽयमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्त्तते ॥

स मनोभावमापद्य तेजसा पाकमागतः ।
वायुमाविशति प्राणमथाऽसौ समुदीर्यते ॥

अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।
तद्धर्मेण समाविष्टस्तेजसैव विवर्त्तते ॥

विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः ।
प्राणो वर्णान् अभिव्यज्य वर्णेष्वेवोपलीयते ॥[1] इति ॥

अयमेव क्रमः पाणिनीयशिक्षायाम् अपि निर्दिश्यते । तद्यथा—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निम् आहन्ति स प्रेरयति मारुतम् ॥

सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः ॥[2] इति ॥

पाणिनीयाष्टके वर्णाभिव्यक्तिः साक्षाद् न निर्दिश्यते, किन्तु वैयाकरणैः पाणिनीयशिक्षाप्रदर्शितः पक्ष एव पाणिनीय इत्यास्थीयते ।

## २. २. आचार्यद्वयस्य वर्णसमाम्नायौ—

उल्लिखितया प्रक्रिययाभिव्यज्यमाना वर्णाः प्राचार्यैः स्वस्वग्रन्थेषु समाम्नाताः । तत्र तत्रोपनिबद्धा वर्णसमाम्नायाः प्रयोजनादिभेदाद् भिद्यन्ते । अष्टाध्यायी-वाजसनेयिप्रातिशाख्ययोरुपात्तौ वर्णसमाम्नायावेवात्र प्रकृतत्वाद् विविच्येते । पाणिनीयाष्टके शास्त्रादौ चतुर्दशसूत्रात्मको वर्णसमाम्नाय उपलभ्यते । वाजसनेयिप्रातिशाख्ये तु शास्त्रान्तेऽष्टमेऽध्याये—अथातो वर्णसमाम्नायं व्याख्यास्यामः (वा० प्रा० ८।१) इत्यादिभिः सूत्रैर्वर्णसमाम्नाय उपदिश्यते ।

## २. ३. समाम्नायद्वये विप्रतिपत्तिः—

पाणिनीयतन्त्रस्यादौ समुपलभ्यमानानि वर्णसमाम्नायरूपाणि चतुर्दशसूत्राणि सम्प्रति शिवसूत्राणि, माहेश्वरसूत्राणि वेति नाम्ना

---

१. वा० प० १।११२-११५ ॥ २. श्लो० पा० शि० ६,९ ॥

व्यवह्रियन्ते । ततो जायत एषा विचारणा–महेश्वरप्रोक्तानीमानि सूत्राण्याहोस्वित् पाणिनिप्रोक्तानीति ? तत्र भट्टोजिदीक्षित–नागेश-प्रमुखा वैयाकरणा महेश्वरादागतानीमानि सूत्राणीत्यातिष्ठन्ते । केचनाधुनिका[1] अपि तानेवानुसरन्ति । प्राय आधुनिकाः शोधपटीयांसो विद्वांसः[2]—एतानि सूत्राणि पाणिनिना प्रोक्तानीति सङ्गिरन्ते । तत्रैतेषां पाणिनिप्रोक्तत्वमेव युज्यत इति कैश्चिद् धेतुभिः प्रतिपाद्यते—

(१) वार्त्तिक–महाभाष्य–काशिका–प्रदीपेषु क्वचिदपि चतुर्दश-सूत्रीयं शिवसूत्रनाम्ना माहेश्वरनाम्ना वा न स्मर्यते ।

(२) स्कन्दस्वामी, कुलशेखरवर्मा चेमानि सूत्राणि पाणिनि-कृतानि मन्येते । तथा हि–**नापि अ इ उ ण् इति पाणिनीयप्रत्याहार-समाम्नायवत्**[3]–इति स्कन्दः । **पाणिनिप्रत्याहार इव महाप्राणझषा-श्लिष्टो झषालङ्कृतश्च**[4]–इति कुलशेखरवर्मा ।

(३) हलन्त्यम् (अ० १।३।३), आदिरन्त्येन सहेता (अ० १।१।७१) इति पाणिनीयसूत्राभ्यां प्रत्याहाराः सिद्ध्यन्ति । इत्थं च यस्य बुद्धावष्टाध्यायी–परियोजना प्रादुरासीत्, तस्यैव वर्णानाम् आनु-पूर्वीविशेषेणापि प्रादुर्भाव्यम् । एतदेव ध्वनयन्नाह वार्त्तिककारः **—वृत्तिसमवायार्थ उपदेशः, अनुबन्धकरणार्थश्च**[5]–इति । तद् विवृणोति पतञ्जलिः—**का पुनर्वृत्तिः ? शास्त्रप्रवृत्तिः । समवायो वर्णानाम् आनुपूर्व्येण सन्निवेशः । अनुबन्धकरणार्थश्च वर्णानाम् उपदेशः । अनुबन्धान् आसंक्ष्यामीति । वृत्तिसमवायश्चानुबन्धकरणं च प्रत्याहारार्थम्**[6]–इति । अत्र नागेशोऽनुबन्धकरणमित्यस्य शिवकृतम्

---

१. मनोमोहनघोषः पाणिनीयशिक्षाभूमिका पृ० २० उद्धृतं फैडेगानमंगल-देवयोर्मतम् ।।

२. युधिष्ठिरमीमांसकः, सं० व्या० इ० प्रथमभाग, पृ० २०४ । के० माधवकृष्ण शर्मा : पाणिनि, कात्यायन एण्ड पतञ्जलि, पृ० ३२ । ए० सुब्रह्मण्य अय्यर : ओन दि फोर्टीन माहेश्वर सूत्राज़ (प्रौसीडिंग्स के० आफ फोर्थ ओरियण्टलकान्फ्रेंस, इलाहाबाद, १९२६, पृ० १३३-१४३ । पाल थीमे : पाणिनि एण्ड दि वेद, पृ० १०९-११० ।।

३. निरु० स्कन्दटीका, प्रथमभाग, पृ० ७८ ।।

४. अमरटीकासर्वस्व, भाग १, पृ० १८६ ।।

५. महा० पस्पशा० ।। ६. महा० पस्पशा० ।।

अनुबन्धबोधनम् इत्यभिप्रायं जग्राह, अनुबन्धानासंक्ष्यामीत्यस्यापि मन्येऽनुबन्धान् बोधयिष्यामीति तेन सुकल्पितं स्यात् !

(४) महाभाष्यकारः पतञ्जलिः—**एषा ह्याचार्यस्य शैली लक्ष्यते, यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति, अचो अक्षु हलो हल्षु**[1]–इति, **एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा व्याख्यानतो विशेषप्रतिपत्तिर्नहिसन्देहादलक्षणम्**[2]–इति च स्थलद्वय आचार्यपदेन पाणिनिम् अभिलक्ष्य प्रत्याहारसूत्राणां पाणिनीयत्वं द्योतयति। यत्तु नागेशस्तत्रैवोद्योत आचार्यपदेनानादिपुरुषं शिवं गृह्णाति, तदप्रासङ्गिकत्वाद् धेयम्।

(५) अक्षरसमाम्नायः पुरा प्रत्याहारसूत्रनाम्नैव प्रसिद्ध आसीदित्यष्टाध्याय्याः प्राचीनहस्तलिखितग्रन्थैरपि ज्ञायते।

प्रत्याहारसूत्राणां शिवसूत्रत्वप्रतिपादनं प्रथमतो नन्दिकेश्वरः स्वग्रन्थस्य काशिकाख्यस्य प्रारम्भे चकार। तथा हि—

**नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।**
**उद्धर्तुकामः सनकादिसिद्धान् एतद् विमर्शे शिवसूत्रजालम्॥**
इति॥

नन्दिकेश्वरः कश्मीरेषु प्रसृतेन शैवाद्वैतदर्शनेन प्रभावितत्वात् प्रत्याहारसूत्राणां शिवेन सह सम्बन्धं प्रतिपादयांचकारेति माधवकृष्णशर्मणो निष्कर्षः[3]। श्लोकात्मकपाणिनीयशिक्षायाम् उपलभ्यमानः—

**येनाक्षरसमाम्नायम् अधिगम्य महेश्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥ इति॥**

श्लोकस्तु न सार्वत्रिकः[4]।

वाजसनेयिप्रातिशाख्यस्थे वर्णसमाम्नायेऽपि विप्रतिपत्तिर्दृश्यते। उपदिष्टा वर्णाः(वा० प्रा० १।३४)इति सूत्रे निष्ठान्तप्रयोगात्, सिम् आदितोऽष्टौ स्वराणाम् (वा० प्रा० १।४३) इत्यादिभिः सूत्रैर्वर्णानां संज्ञाविधानाच्च शास्त्रादावेव वर्णसमाम्नायस्यौचित्यं प्रतीयते, परम् उपलभ्यतेऽयं शास्त्रान्ते। अष्टमाध्याये वर्णसमाम्नायस्य विन्यासविषये

---

१. महा० प्रत्याहारसूत्र ५॥
२. महा० प्रत्याहारसूत्र ६॥
३. पाणिनि, कात्यायन एण्ड पतञ्जलि, पृ० ३३-३५॥
४. म० म० घोषसम्पादितपाणिनीयशिक्षा पृ० ७९॥

व्याख्याकार उवटो न किमप्यब्रवीत् । अनन्तस्तु—**वर्णसमाम्नायस्य सर्वोपयोगित्वाद् यद्यपि प्रथमाध्याय एव वक्तुम् उचितस्तथापि मुनेः स्वतन्त्रेच्छत्वाद् अन्तिमेऽध्याये कथ्यते**[1]—इति ब्रुवन्नाष्टमिकोपन्यासम् अयुक्तमेव मेने । अपि च, सिमादितोऽष्टौ स्वराणाम्, सन्ध्यक्षरं परम् (वा० प्रा० १।४४,४५) इति संज्ञाविधावाष्टमिकवर्णसमाम्नायो न शक्यते ग्रहीतुम्, तत्र हि प्लुतानामपि समाम्नातत्वात् । ईदृशीं विसङ्गतिं दृष्ट्वा वेवरादयो विद्वांसो वाजसनेयिप्रातिशाख्यस्य सप्तमाष्टमाध्याययोः कात्यायनप्रोक्तत्वं संदिहन्ति[2] । अन्ये तु—अथ शिक्षाविहिताः (वा० प्रा० १।२९) इति शिक्षाविहिता[3] वर्णाः प्रातिशाख्यकारस्याभिमताः । लोके सम्भाव्यमानानामेव वर्णानाम् अष्टमाध्याये उपन्यासः[4]—इत्याहुः ।

समाम्नायद्वयस्य कर्तृत्वविषये विप्रतिपत्तौ सत्याम् अप्यत्र विमर्शे द्वयोरपि समाम्नाययोस्तुलना विधास्यते तत्र तत्र तयोरुपलम्भत्वात् । यद्यपि पाणिनीयशिक्षा श्लोकात्मिका सूत्रात्मिका वेत्यस्य निर्णयो[5] दुष्करस्तथापि पाणिनेः साक्षान्निर्देशाभावे ग्रन्थद्वयाद् अपि साहाय्यं ग्राहिष्यतेऽत्र तुलनायाम् ।

### २. ४. वर्णानां संख्या—

वाजसनेयिप्रातिशाख्यकारोऽष्टमेऽध्याये स्वरूपतो वर्णान् उपन्यस्य प्राह—**एते पञ्चषष्टिर्वर्णा ब्रह्मराशिरात्मा वाचः** (वा० प्रा० ८।३२) इति, पुनश्च स्वरव्यञ्जनभेदेन परिगणयति—

**त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ।**
**द्विचत्वारिंशद् व्यञ्जनान्येतावान् वर्णसंग्रहः** ॥ वा० प्रा० ८।४४ ॥

---

१. वा० प्रा० ८।१ अ० भा० ॥

२. वेंकटरामशर्मा : क्रिटिकल स्टडीज आन का० शु० प्रा० पृ० १२३; म० मो० घोष, पाणिनीयशिक्षा, पृ० ५१ ॥

३. शिक्षापदेनात्र पाणिनीयशिक्षा गृह्यते इति घोषः । (पाणिनीयशिक्षा-भूमिका, पृ० ४६) । ४. रामाज्ञापाण्डेयः, व्याकरणदर्शनभूमिका, पृ० ८२ ॥

५. म० मो० घोषः, पाणिनीयशिक्षा, भूमिका पृ० ४६-५० । युधिष्ठिर-मीमांसकः, मूल पाणिनीयशिक्षा, साहित्य (पटना) वर्ष ७ अंङ्क ५ । रामाज्ञा-पाण्डेयः, व्याकरणदर्शनपीठिका, पृ० २०१ ॥

एवं च—अ इ उ ऋ ऌ इति ह्रस्वदीर्घप्लुतभेदेन पञ्चदश, सन्ध्यक्षराणि दीर्घप्लुतभेदेनाष्ट, स्पर्शाः पञ्चविंशतिः, अन्तःस्थाश्चत्वारः, ऊष्माणश्चत्वारः, अयोगवाहा नवेति संयोज्य पञ्चषष्टिसंख्या पूर्यते। सम्भवमात्रेण ह्येते वर्णाः परिसंख्यायन्ते, न त्विमे सर्वे वाजसनेयि-शाखासूपलभ्यन्ते; माध्यन्दिनानां तावद् अ आ आ ३ इ ई इ ३ उ ऊ ऋ ॠ ऌ ए ऐ ओ ओ ३ औ इति षोडश स्वराः, पञ्चविंशतिः स्पर्शाः, चत्वारोऽन्तःस्थाः, चत्वार ऊष्माणः, चत्वारो यमाः, विसर्जनीयः, अनुस्वार इत्येवं संकलनया पञ्चपञ्चाशद् एव वर्णाः सन्ति। तथा च प्राह वाजसनेयिप्रातिशाख्यकारः—जिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम्, ऌकारो दीर्घः प्लुताश्चोक्तवर्जम (वा० प्रा० ८।४५, ४६) इति।

पाणिनिः प्रत्याहारसूत्रेषु नव स्वरान् पञ्चविंशतिं स्पर्शान्, चतुरोऽन्तःस्थान्, चतुर ऊष्मण इति द्विचत्वारिंशद् वर्णान् संजग्राह। हकारस्य प्रयोजनविशेषाद्[1] द्विः पाठः क्रियते। ग्रहणकशास्त्रेण[2] पुनर्दीर्घप्लुतोदात्तानुदात्तस्वरितसानुनासिकनिरनुनासिकभिन्नानाम् अपि वर्णानां समावेशः क्रियते[3]। पाणिनीयवर्णसमाम्नायेऽपठिता अपि केचनायोगवाहाः शास्त्रे प्रयुज्यन्त इति तेऽप्याचार्याभिमताः। तथा हि —मोऽनुस्वारः (अ० ८।३।२३), खरवसानयोर्विसर्जनीयः (अ० ८।३।१५) कुप्वोः ᳲक ᳲपौ च (अ० ८।३।३७) इत्येतेष सूत्रेषु यथासंख्यम् अनुस्वार-विसर्जनीय-जिह्वामूलीयोपध्मानीया निर्दिश्यन्ते। नासिक्ययमौ[4] तु पाणिनीयाष्टके नोपदिश्येते। वस्तुतः पाणिनिर्वर्णसमाम्नायं प्रत्याहारार्थम् उपदिदेश, न तु वर्णान् स्वरूपतो बोधयितुम्। ते हि स्वरूपतस्तत्प्रोक्तया शिक्षया समधिगन्तव्या आसन्। अत एव दीर्घप्लुतसानुनासिकोदात्तानुदात्तस्वरितानाम् उपदेशं विनापि ग्रहणकशास्त्रेण ग्रहणं भवति। अथ च दन्त्यमूर्द्धन्यौष्ठ्यनामभिर्वर्णानाम् उपदेशं विनापि शास्त्रे तदाश्रया विधय उपलभ्यन्ते। तद्यथा—लुग् वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये (अ० ७।३।७३), अपदान्तस्य मूर्द्धन्यः (अ० ८।३।५५), उदोष्ठ्यपूर्वस्य (अ० ७।१।१०२)।

---

१. महा० हयवरट्प्रत्याहारसूत्रे॥ २. अ० १।१।६९॥
३. का० १।१।६९॥
४. अशरीरं यमं प्राहुः। प्रातिशाख्यप्रदीप, शि० सं० पृ० २५२।

श्लोकात्मिकायां पाणिनीयशिक्षायाम्–**त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः**[1]–इति वर्णसंख्यां निर्दिश्य, विभागशो वर्णाः संख्यायन्ते । तथा हि—

**स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।**
**यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥**
**अनुस्वारो विसर्गश्च :क :पौ चापि पराश्रयौ ।**
**दुःस्पृष्टश्चेति विज्ञेयो[2] लृकारः प्लुत एव च ॥**[3] इति ॥

भट्टोजिदीक्षितो वर्णान् परिगणयति–अ इ उ ऋ इति ह्रस्वदीर्घप्लुतभेदात् त्रैविध्ये द्वादश, लृकार एकः, एचां दीर्घप्लुतभेदादष्टौ । इत्थं स्वरा एकविंशतिः । स्पर्शाः पञ्चविंशतिः, य र ल व श ष स हेत्यष्टौ । यमाश्चत्वारः । अनुस्वार-विसर्ग-:क- :पाश्चत्वार । दुःस्पृष्टश्च बह्वृचां प्रसिद्ध ईळे वोऴ्हेत्यादिषु ळकारः । इत्थं त्रिषष्टिः । लृकारस्य प्लुतसम्भवात् तेन सह चतुःषष्टिः[4]–इति । पञ्चिकाप्रकाशकारौ दुःस्पृष्टशब्दम् ईषत्स्पृष्टपर्यायम् अभिमेनाते ।[5] ततस्तन्मतानुसारम् अत्र अनुस्वारादयः प्लुतान्ताः पञ्च, ह्रस्वदीर्घानुस्वारौ प्रकल्प्य षड् इति त्रिषष्टिचतुःषष्टिसंख्ये पूर्यते ।

सूत्रात्मिकायां पाणिनीयशिक्षायां यद्यपि-स्थानकरणप्रयत्नपरेभ्यो वर्णास्त्रिषष्टिः । चतुःषष्टिरित्येके[6]–इति वर्णाः परिगण्यन्ते, तथापि विभागशो नोपदिश्यन्ते । द्वयोरपि शिक्षाग्रन्थयोर्वर्णाः स्वरूपतस्तथा नोपन्यस्यन्ते यथा वाजसनेयिप्रातिशाख्ये ।

### २. ५. वर्णानां क्रमः—

प्रातिशाख्यानि शिक्षाग्रन्थान् उपजीवन्ति[7], अतस्तेभ्य एव वर्ण-

---

१. श्लो० पा० शि० ३ ॥

२. पाणिनिनाऽयं सन्धिर्नानुमोदितः । ऋषयो सृजन्ति (गो० ब्रा० २।५।१५) इत्यत्रापि तथैव ।

३. श्लो० पा० शि० ४,५ ॥

४. शब्दकौस्तुभ १।१।८ ॥

५. एतच्च युक्तम्, ऋक्प्रातिशाख्ये (१३।१०) ऋक्तन्त्रे (३।१) च तथैव दर्शनात् ॥

६. सू० पा० शि० ४,५ ॥

७. डब्ल्यू० एस० एलन : फोनेटिक्स इन एन्श्येण्ट इण्डिया, पृ० ५ ॥
पाल थीमे : पाणिनि एण्ड दि वेद, पृ० ८६ ॥

समाम्नायम् उद्धरन्ति, तत्रत्यमेव च वर्णक्रमम् अनुरुन्धन्ति ।[1] वाजसनेयिप्रातिशाख्ये त्वयं विशेषः–सर्वे वर्णा अत्र स्वरूपतः पठिताः, सन्ध्यक्षरक्रमश्च स्वल्पभेदेनाश्रितः ।[2] स्वराः, स्पर्शाः, अन्तःस्थाः, ऊष्माणः, अयोगवाहाः–इति क्रमेण वर्णाः शिक्षासु वाजसनेयिप्रातिशाख्ये चोपन्यस्यन्ते । यद्यपि बाह्यप्रयत्नक्रमानुरोधेन[3] स्वरा ऊष्मभ्यः परम् उपन्यसनीयाः[4], तथापि स्वराणां प्राधान्याद्,[5] उच्चारणसौकर्याच्च त आदौ विन्यस्यन्ते । स्वरादिष्वपि वायुनिर्गमनमार्गे पततां स्थानानां क्रमः प्रायेण समाश्रीयते । आदौ तावत् कण्ठ्यतालव्यौष्ठ्या अ इ उ इतीमे न्यस्ताः । ऋलृवर्णयोः क्रमविपर्यासस्तयोः सन्ध्यक्षरवर्णसमानत्वात् कृतः स्यात् । ततः कण्ठतालव्य-कण्ठौष्ठ्यौ ए ऐ ओ औ इति द्वौ युगलौ न्यस्येते । स्पर्शेष्वपि स एव क्रमश्चवर्गटवर्गवर्जम्–तत्र कण्ठ्य–मूर्द्धन्य–तालव्य-दन्त्यौष्ठ्या इति स्वाभाविकः क्रमः कुटुचुतुपूनाम् । वर्गाक्षरेषु तु बाह्यः प्रयत्नः क्रमनियामकः । अन्तःस्थवर्णा यरलवाः स्पर्शक्रमेणैवोपन्यस्यन्ते–तालव्य-मूर्द्धन्य-दन्त्यौष्ठ्या इति । ऊष्माणोऽपि तेनैव क्रमेण शषसाः तालव्य-मूर्द्धन्य-दन्त्याः । हकारस्तु स्थितिविशेषादन्ते विन्यस्यते । अयोगवाहा अपि साधारणतः स्थानक्रमेण विन्यस्यन्ते[6] ।

पाणिनीयवर्णसमाम्नाये उपदिष्टा वर्णाः प्रथमदृष्ट्या क्रमशून्या आभान्ति । परं पाणिनेः प्रत्याहारशैलीम् अनुसृत्य यदा विविच्यन्ते, तदा ते क्रमविशेषविन्यासे तस्याद्भुतं बुद्धिकौशलं प्रदर्शयन्ति[7] । पाणिनिरादौ शिक्षाक्रमम् एवानुरुणद्धि । ऋलृवर्णयोः क्रमेण पाठ इक्-

---

१. प्रयोजनविशेषात् क्वचित् स्वकीयोऽपि क्रम आश्रीयते । यथा–अकारकारावि उ ए ओ ऐ औ । हशषसाः (ऋ० प्रा०) ।

२. मद्रास-कलकत्ता-संस्करणयोः शिक्षाप्रयुक्तक्रम एव मुद्रितः । इन्दुसम्पादिने संस्करणे ए ओ ऐ औ इति क्रमः । स च—संध्यक्षरमयवायावम् (वा० प्रा० ४।४६) इति सूत्रानुरोधाद् युक्तः ।

३. स्पृष्ट-ईषत्स्पृष्ट-ईषद्विवृत-संवृताः । द्र०—सू० पा० शि० पृ० १२ ।

४. डब्ल्यू० एस० एलन : फोनेटिक्स इन एन्श्येण्ट इण्डिया, पृ० २० ॥

५. स्वयं राजन्त इति स्वराः । महा० १।२।३० ॥

६. वर्णस्थानविषयकः शिक्षाप्रातिशाख्ययोः स्वल्पो भेदोऽत्र नाश्रीयते ॥

७. डब्ल्यू० एस० एलन : फोनेटिक्स इन एन्श्येण्ट इण्डिया, पृ० २० ॥

प्रत्याहारार्थः—इको यणचि (अ० ६।१।७७)। सन्ध्यक्षरेषु एङ्-प्रत्याहारानुरोधाद् एकारादुत्तर ओकारः क्षिप्यते-एङः पदान्तादति (अ० ६।१।१०९)। सन्ध्यक्षरक्रम एच्प्रत्याहारार्थ आश्रीयते-एचोऽयवायावः (अ० ६।१।७८)। हकारस्य यणः पूर्व पाठः अट्-प्रत्याहारे तस्य समावेशार्थः-शश्छोऽटि (अ० ८।४।६३)। अन्तःस्थानां पाठः इकः क्रमेण यथासंख्यार्थः-इको यणचि (अ० ६।१।७७)। स्पर्शानां क्रमो बाह्यप्रयत्नानुरोधेन समाश्रीयते। तत्रापि घोषवन्तः पूर्वं निक्षिप्यन्ते, ततोऽघोषाः, तेषु चापि पूर्वम् अल्पप्राणास्ततो महाप्राणा इति क्रम आश्रीयते। तथा च यम्-प्रत्याहारार्थो वर्गपञ्चमानां पाठः-हलो यमां यमि लोपः (अ० ८।४।६४)। ततो भष्-झष्-प्रत्याहारार्था वर्गचतुर्थानां पाठः-एकाचो बशो भष् झषन्तस्य स्ध्वोः (अ० ८।२।३७)। यञ् प्रत्याहारार्थः अन्तःस्थानुनासिकझभानां क्रमोऽत्रलभ्यते—अतो दीर्घो यञि (अ० ७।३।१०१)। ततो वर्गतृतीयानां पाठो हश्-जश्-अश्प्रत्याहारार्थः—हशि च (अ० ६।१।११४), झलां जशोऽन्ते (अ० ८।२।३९), भोभगोअघोअपूर्वस्य योऽशि (अ० ८।३।१७)। ततो वर्गद्वितीयानां वर्गप्रथमानां च पाठः खर्-चर् प्रत्याहारार्थः—खरि च (अ० ८।४।५५), अभ्यासे चर्च (अ० ८।४।५४)। कपयोः पृथक् पाठः छव्प्रत्याहारे (अ० ८।३।७) तयारग्रहणार्थः। तत ऊष्माणः शर्प्रत्याहारार्थं पठ्यन्ते-वा शरि (अ० ८।३।३६)। अन्ते हकारस्य पुनः पाठः शल्-झल्प्रत्याहारयोस्तस्य समावेशार्थः-शल इगुपधादनिटः क्सः (अ० ३।१।४५), झलां जश् झशि (अ० ८।४।५३)।[1]

## २. ६. ०. वर्णोच्चारणम्—

वर्णानाम् उच्चारणे स्थान-करण-प्रयत्ना[2] उपयुज्यन्ते। अत्र स्थानं प्रतिवर्णं पृथक् पृथक् विवेक्ष्यते। करणप्रयत्नौ तावत् संक्षेपेण विविच्येते। करणशब्दो यद्यपि महाभाष्यकारेणाभ्यन्तरप्रयत्नार्थे प्रयुज्यते[3], तथा-

१. पाणिनि, कात्यायन एण्ड पतञ्जलि, पृ० ३६-३९; पाणिनि एण्ड दि वेद, पृ० १०४,११० ॥

२. इह यत्र स्थाने वर्णा उपलभ्यन्ते तत् स्थानम्। येन निर्वृत्यन्ते तत् करणम्। प्रयतनं प्रयत्नः। (सू० पा० शि० पृ० १५) ॥

३. तेभ्यस्तत्तत्स्थानकरणानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते (महा० पस्पशा०)। करणम् आभ्यन्तरप्रयत्नः-इति तत्रैव प्रदीपः।

प्यत्र वाजसनेयिप्रातिशाख्यं सूत्रात्मकपाणिनीयशिक्षां चानुसृत्य जिह्वादिसाधनविशेषार्थे[1] गृह्यते । जिह्वच-तालव्य-मूर्द्धन्य-दन्त्यानां जिह्वाया अवयवविशेषाः करणम्, अवशिष्टानां तु स्वस्थानमेव करणम्[2]। आभ्यन्तर-वाह्यप्रयत्नौ पाणिनीयाष्टके वाजसनेयिप्रातिशाख्ये च साक्षान्न निर्दिष्टौ । शिक्षाकृद्भिर्वैयाकरणैश्च पञ्चाभ्यन्तरप्रयत्नाः स्वीक्रियन्ते । तद्यथा—स्पृष्टं करणं स्पर्शानाम्, ईषत्स्पृष्टम् अन्तःस्थानाम्, ईषद्विवृतं विवृतं वोष्मणाम्, विवृतं स्वराणाम्, संवृतोऽकारः ।[3] महाभाष्यकारः—विवारसंवारौ, श्वासनादौ, घोषवदघोषता, अल्पप्राणता महाप्राणता[4]—इत्यष्टौ वाह्यप्रयत्नान् निर्दिदेश । भट्टोजिदीक्षित उदात्तानुदात्तस्वरितान् अपि वाह्यप्रयत्नेष्वन्तर्भावयति ।[5] एतच्च—**अभेदका उदात्तादयः**[6]—इति महाभाष्यवचनेन न संवदते ।[7] वाह्यप्रयत्नविभागस्त्वित्थम्—खर्विसर्जनीयजिह्वामूलीयोपध्मानीयप्रथमद्वितीययमानां विवारः श्वासोऽघोषश्च । अवशिष्टानाम् अचां हलाञ्च संवारो नादो घोषश्च । वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवा अचश्चाल्पप्राणाः । अन्ये महाप्राणाः[8] । अथेदानीं प्रतिवर्णम् उच्चारणविशेषः प्रदर्श्यते ।

## २ ६. १. अवर्णस्य—

त्रयाणां ह्रस्वदीर्घप्लुतानाम् अकाराणाम् उच्चारणस्थानं कण्ठः स्वीक्रियते प्रातिशाख्यकृता कात्यायनेन पाणिनीयैश्च । तथा हि—अहविसर्जनायाः कण्ठे (वा० प्रा० १।७१) इति कात्यायनः । अकुहविसर्जनीयाः

---

१. का० ८।३।१८ ॥

२. वा० प्रा० १।७६-८४; सू० पा० शि० पृ ११ ॥

३. महा० १।१।१०; सू० पा० शि० पृष्ठ १२ ॥ श्लोकात्मकपाणिनीयशिक्षायाम् (३८) ऊष्मणां नेमस्पृष्टत्वमुच्यते ॥

४. महा० १।१।९ ॥

५. सि० कौ० पृ० १०; तु०—सू० पा० शि० पृ० १८ ॥

६. महा० १।१।९ ॥

७. तत्त्वबोधिनी ॥

८. सू० पा० शि०, पृ० १३ । महा० १।१।९। न्यास, पद०.पृ० ९८-९९ । सि० कौ०, पृ० १२ । बृ० श० शे०, पृ० ५६ ॥

कण्ठ्याः—इति जिनेन्द्रबुद्धिहरदत्तौ ।[१] पाणिनीयशिक्षायाम् अप्यवर्णः कण्ठ्य ऊरीक्रियते ।[२] ह्रस्वोऽकारः संवृत इति पाणिनेः—अ अ (अ० ८।४।६८) इति सूत्रेण ज्ञाप्यते ।[३] वाजसनेयिप्रातिशाख्यकारोऽपि—सवर्णवच्च (वा० प्रा० १।७२) इति सूत्रेण सावर्ण्यम् अतिदिशन्नस्य संवृतताम् अङ्गीचकार । तथा चावोचद् उवटः—**अकारस्य मात्रिकस्य संवृतास्यप्रयत्नस्येतरयोश्च विवृतास्यप्रयत्नयोर्द्विमात्रिकत्रिमात्रिकयोः सह सावर्ण्यं तुल्यं न सम्भवतीति तदर्थमिदमारभ्यते**[४]—इति । शिक्षायाम् अप्यकारस्य संवृतत्वं वर्ण्यते ।[५]

### २. ६. २. इवर्णस्य—

शास्त्रद्वयेऽपि त्रिविधस्येवर्णस्य स्थानं तालु स्वीक्रियते । तथा च—इचशेयास्तालौ (वा० प्रा० १।६६) इति वाजसनेयिप्रातिशाख्ये, इचुयशास्तालव्याः[१]—इति पाणिनीयाः । पाणिनीयशिक्षायामपि तथैव प्रतिपाद्यते[२] । आभ्यन्तरप्रयत्नो विवृतः ।

### २. ६. ३. उवर्णस्य—

उभयत्र शास्त्रयोस्त्रिविधस्योवर्णस्यौष्ठं स्थानम् अङ्गीक्रियते । तथा हि—उवोःप्पा ओष्ठे (वा० प्रा० १।७०) इति प्रातिशाख्यकारः; उपूपध्मानीया ओष्ठ्याः[१]—इति पाणिनीयाः । शिक्षाकारोऽप्युवर्णस्य स्थानम् ओष्ठं मन्यते[२] । आभ्यन्तर-प्रयत्नो विवृतः ।

### २. ६. ४. ऋवर्णस्य—

पाणिनीयैस्त्रिविध ऋवर्णो मूर्द्धन्यः प्रतिज्ञायते । तथा च—ऋटुरषा मूर्द्धन्याः[१]—इति न्यासपदमञ्जरीकारौ । पाणिनीयशिक्षायाम् अप्यस्य मूर्द्धन्यत्वम् उच्यते[२] । प्रातिशाख्यकारः कात्यायनस्तु—ऋः क्कौ

---

१. न्यास, पद० पृ० १०० ॥
२. श्लो० पा० शि० १५; सू० पा० शि०, पृ० १० ॥
३. महा० अइउण् सूत्रे ॥
४. वा० प्रा० १।७२ उ० भा० ॥
५. सू० पा० शि० पृ० १२; तु०—न्यास, पद० पृ० २२ ॥

जिह्वामूले (वा० प्रा० १।६५) इति सूत्रेणास्य जिह्वामूलीयत्वम् उपदिशति। ऋवर्णात् परस्य दन्त्यस्य मूर्द्धन्यादेशविधानं[1] खल्वस्य मूर्द्धन्यत्वमेवोपोद्वलयति। ऋवर्णे रेफसदृशी श्रुतिरपि वैयाकरणैः[2] प्रातिशाख्यकारैः[3] शिक्षाकारैश्च[4] स्वीक्रियते। सा च मध्ये तिष्ठति, ताम् उभयतोऽज्भक्तिरिति नागेशः।[5] ऋकारे रेफस्य मात्राविषये दर्शनभेदः कैयटेन सूच्यते—**येषां दर्शनम् अर्द्धमात्राकालो रेफ ऋकारे··· येषामपि दर्शनं मात्राचतुर्थभागो रेफ ऋकारे**[6]–इति। ऋवर्णस्य विवृतत्वात् सवैंस्तस्याच्त्वे स्वीकृतेऽपि महाभाष्यकारः प्राह—**न च ऋकार लृकारो वाजस्ति**[7]–इति। तत्र चाह कैयटः—**अन्ये तु, ईषत्स्पृष्टकरणत्वाद् अनयोर्ऋकारलृकारयोश्च विवृतत्वात् ताभ्यां तयोरग्रहणाद् अनच्त्वमाहुः**[8]–इति।

अद्यत्वे उत्तरभारते ऋकारस्योच्चारणं 'रि' ध्वनिना क्रियते, दक्षिण-भारते तु 'रु' ध्वनिना। अतिप्राचीनोऽयम् उच्चारणभेद इत्यृक्-प्रातिशाख्ये 'रु' सदृशोच्चारणस्य दोषत्वप्रतिपादनाज्ज्ञाप्यते।[9]

### २. ६. ५. लृवर्णस्य—

वाजसनेयिप्रातिशाख्यकार लृकारस्य दन्त्यत्वं प्रतिपादयति–लृलसिता दन्ते (वा० प्रा० १।६९) इति। वैयाकरणैः शिक्षाकृद्भिश्चास्य दन्त्यत्वं स्वीक्रियते।[10] अस्मिन्नपि वर्णे ऋवर्णवद् लश्रुतिरिति पूर्वं प्रदर्शितम्। ऋवर्णेनास्य सावर्ण्यं[11] प्रतिपादयता वार्त्तिककारेण

---

१. महा० ८।४।१ वा० १; वा० प्रा० ३।८५॥

२. महा० प्रत्याहाराह्निके॥

३. वा० प्रा० ४।१४६॥

४. सू० पा० शि०, पृ० ११॥

५. उद्योत ८।४।१॥

६. प्रदीप ८।४।१॥

७. महा० १।१।९॥

८. तु०—ऋलृरोर्मध्ये भवत्यर्द्धमात्रा रेफलकारयोः।
तस्मादस्पृष्टता न स्यात् सम्भवे ऋलृकारयोः॥
वर्णरत्नप्रदीपिकाशिक्षा ४२, शि० सं०, पृ० १२०॥

९. ऋ० प्रा० १४।३८॥

१०. श्लो० पा० शि० १७; सू० पा० शि०, पृ० १०; न्यास, पद० पृ० १००॥

११. महा० १।१।९ वा० ५॥

ऋकारलृकारयोः स्थानं समानं स्वीक्रियत इति केचिद् अनुमिन्वते ।[1]

प्रातिशाख्यकारः कात्यायनस्त्रिविधम् लृकारम् उपदिश्य माध्यन्दिनानां दीर्घं लृकारो नास्तीत्याह–लृकारो दीर्घः प्लुताश्चोक्तवर्जम् (वा० प्रा० ८।४६) इति। वैयाकरणैरपि लृवर्णस्य दीर्घरूपं नाभिमन्यते । अत एवाह वृत्तिकारः–लृवर्णस्य दीर्घा न सन्तीति ।[2] **लृकारस्य तु दीर्घत्वं नास्ति वाजसनेयिनः**[3]–इति शिक्षावचनं माध्यन्दिनान् उद्दिश्योक्तं स्यात्, काण्वादीनां निषेधाभावात् ।[4] वस्तुतस्तु ह्रस्व लृकार एवातिविरलो वैदिकवाङ्मय उपलभ्यते न दीर्घप्लुतौ ।

## २. ६. ६. सन्ध्यक्षराणाम्—

सन्ध्यक्षराणि दीर्घप्लुतभेदेन द्विविधानि व्याकरण-प्रातिशाख्ययोः स्वीक्रियन्ते । पतञ्जलिस्तु सामगानाम् अर्द्धैकारार्द्धौकारावपि सूचयति ।[5] वाजसनेयिप्रातिशाख्यकार एकारस्य–इचशेयास्तालौ (वा० प्रा० १।६६) इति तालु, ओकारस्य च–उवो : प्पा ओष्ठे (वा० प्रा० १।७०) इत्योष्ठं स्थानं निर्दिशति । ऐकारौकारयोः प्रविभागपुरःसरं स्थानं निर्दिश्यते प्रातिशाख्ये–ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्वोष्ठयोरुत्तरा (वा० प्रा० १।७३) इति, तथा चैकारौकारौ यथासख्यं कण्ठतालव्यकण्ठोष्ठ्यौ स्तः । परम् अनयोरुच्चारणम् एकवर्णवद् भवति ।[6] पाणिनीयैः शिक्षाकारैश्च एकारैकारौ कण्ठतालव्यौ, ओकारौकारौ च कण्ठोष्ठ्यौ मन्येते ।[7] पाणिनिरपि सन्ध्यक्षराणां कण्ठतालव्य–कण्ठोष्ठ्यत्वं स्वीचकारेति तस्य प्रवृत्त्या ज्ञाप्यते । तथा च–एच इग्घ्रस्वादेशे (अ० १।१।४७), एचोऽप्रगृह्यस्य ··इदुतौ (अ० ८।२।१०७) इति सूत्रयोरेचः प्रविभागाविज्ञ्यतः । वार्त्तिककारमतेन एकारौकारौ यथासंख्यं तालव्योष्ठ्यौ स्त इति–सिद्धमेङःसस्थानत्वात्[8]–इति वचनाद् ज्ञाप्यते । ऐकारौकारयोः पूर्वभूयस्त्व–समप्रवि-

---

१. रामगोपाल : वैदिकव्याकरण, पृ० ५ ॥
२. का० १।१।९ ॥ ३. या० शि० पृ०९१ ॥
४. वा० प्रा० ८।४६ अ० भा० ॥
५. महा० प्रत्याहाराह्निके ॥ ६. वा० प्रा० ४।१४३ ॥
७. न्यास०, पद० पृ० १००; श्लो० पा० शि० १८; सू० पा० शि०, पृ० ११ ॥ ८. महा० १।१।४७ वा० ३ ॥

भागोत्तरभूयस्त्वानीति त्रयः पक्षाः पतञ्जलिना प्रदर्शिताः ।[1] तत्र वार्त्तिककारः-ऐचोश्चोत्तरभूयस्त्वात्[2]-इत्यत्रोत्तरभूयस्त्वपक्षमाश्रयति । सिद्धं त्विदुतोर्दीर्घवचनात्[3]-इत्यत्र वाडवः समप्रविभागम् अङ्गीकरोति । शिक्षाकारस्तु एकारौकारयोः कण्ठ्यस्यार्द्धमात्राम्, ऐकारौकारयोश्च मात्रां प्रतिजानीते ।[4] सन्ध्यक्षरेषु अकारेकारोकारा विवृततरा इति वार्त्तिकभाष्ययोर्मतम् ।[5] महाभाष्यकार एकारौकारयोरकारं संवृतम्, ऐकारौकारयोश्च विवृतम् आतिष्ठत इत्येलनः ।[6]

## २. ६. ७. कवर्गस्य—

वाजसनेयिप्रातिशाख्यकारः कवर्गस्य स्थानं जिह्वामूलं निर्दिशति-ॠःक्कौ जिह्वामूले (वा० प्रा० १।६५) इति । करणम् चास्य हनुमूलं स्वीक्रियते-जिह्वामूलीयानुस्वारा हनुमूलेन (वा० प्रा० १।८३) इति । श्लोकात्मिकायां पाणिनीयशिक्षायाम् अपि कवर्गो जिह्वामूलीयः प्रतिपाद्यते ।[7] पाणिनीयैः कवर्गः कण्ठ्य आस्थीयते ।[8] व्हिटने-एलनौ कवर्गस्य स्थानं हनुमूलम् एव युक्ततरम् इति मन्येते ।[9]

## २. ६. ८. चवर्गस्य—

वाजसनेयिप्रातिशाख्ये चवर्गस्तालव्योऽभिमन्यते-इचशेयास्तालौ (वा० प्रा० १।६६) इति । पाणिनीयवैयाकरणैः[10] शिक्षाकृद्भिश्चा-

---

१. महा० ८।२।१०६ ॥ २. महा० १।१।४७ वा० ४ ॥

३. महा० ८।२।१०६ वा० ३ ॥

४. श्लो० पा० शि० १६ ॥

५. सन्ध्यक्षरेषु विवृतत्वात् ॥ वा० ॥ यदत्रावर्णं विवृततरं तद् अन्यस्मादवर्णात्, ये अपीवर्णोवर्णे विवृततरे ते अन्याभ्याम् इवर्णोवर्णाभ्याम् । महा० प्रत्याहाराह्निके ।

६. डब्ल्यू० एस० एलन : फौनेटिक्स इन एन्श्येण्ट इण्डिया पृ० ६३, तु-महा० १।१।१—प्रश्लिष्टावर्णवितौ (एङौ), विवृततरावर्णवितौ (ऐचौ) ।

७. जिह्वामूले तु कुः प्रोक्तः । श्लो० पा० शि० १८ ॥

८. सि० कौ० पृ० १२ । सू० पा० शि०. पृ० १० । न्यास, पद० पृ० १०० ॥ ९. वैदिक व्याकरण, पृ० ६४ ॥

१०. न्यास, पद० पृ० १०० ॥

प्यस्य[1] तालव्यत्वं स्वीक्रियते । प्रातिशाख्यकारः शिक्षाकारश्च जिह्वामध्यभागं तालव्यानां करणं घोषयतः ।[2]

### २. ६. ९. टवर्गस्य—

वाजसनेयिप्रातिशाख्ये टवर्गस्य स्थानं मूर्द्धेति वर्ण्यते । तद्यथा—षटौ मूर्द्धनि (वा० प्रा० १।६७) । वैयाकरणैः शिक्षाकृद्भिश्चाप्यस्य मूर्द्धन्यत्वं स्वीक्रियते । वाजसनेयिप्रातिशाख्ये डढयोः स्थाने ळळ्हौ विधीयेते ।[3] एतौ च विकारमात्राविति पृथग् न परिगण्येते । मूर्द्धन्या वर्णा जिह्वाग्रभागं प्रतिवेष्ट्योच्चार्यन्त इति प्रातिशाख्यं शिक्षा च ।[4]

### २. ६. १०. तवर्गस्य—

वाजसनेयिप्रातिशाख्ये तवर्गो दन्त्य इत्युच्यते । तथा हि–लृलसिता दन्ते (वा० प्रा० १।६९) । वैयाकरणैः शिक्षाकारैश्चाप्यस्य दन्त्यत्वम् ऊरीक्रियते । दन्त्या जिह्वाग्रकरणाः (वा० प्रा० १।७६) इति प्रातिशाख्यकारः शिक्षाकारश्च ।[5]

### २. ६. ११. पवर्गस्य—

पवर्गस्य स्थानम् ओष्ठं निर्दिश्यते वाजसनेयिप्रातिशाख्ये । यथा–उवोःप्पा ओष्ठे (वा० प्रा० १।७०) इति । व्याकरणे शिक्षायां चाप्ययम्[6] ओष्ठ्य एवोच्यते । अस्य करणम् अप्योष्ठमेव कथ्यते ।[7]

### २. ६. १२. अन्तःस्थानाम्—

यकारः सर्वैरेव तालव्योऽभिमन्यते[8] । अयं च जिह्वामध्यभागेनो-

१. सू० पा० शि०, पृ० १० । श्लो० पा० शि० १७ ॥
२. वा० प्रा० १।७९; सू० पा० शि०, पृ० ११ ।
३. वा० प्रा० ४।१४४ ॥
४. वा० प्रा० १।७८; सू० पा० शि०, पृ० ११ ॥
५. सू० पा० शि०, पृ० ११ ॥
६. सू० पा० शि०, पृ० १० । श्लो० पा० शि० १७ ॥
७. वा० प्रा० १।८०; सू० पा० शि०, पृ० ११ ॥
८. वा० प्रा० १।६६ । श्लो० पा० शि० १७ । सू० पा० शि०, पृ० १० । न्यास, पद० पृ० १०० ॥

च्चार्यत इति शिक्षाप्रातिशाख्ये[1]। वाजसनेयिनः परिस्थितिविशेषे यकारस्य जकारसदृशम् उच्चारणं कुर्वन्तीति प्रतिज्ञापरिशिष्ट-शिक्षा-ग्रन्थैर्ज्ञायते । तथा हि-अन्तःस्थानाम् आद्यस्य पदादिस्थस्यान्यहल-संयुक्तस्य-जकारोच्चारणम्[2]-इति प्रतिज्ञापरिशिष्टे । याज्ञवल्क्यशिक्षायां खल्वपि—

**पादादौ च पदादौ च संयोगावग्रहेषु च ।**
**जः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः ॥**[3] इति ॥

प्रातिशाख्यकारः कात्यायनो जकारस्य यकारसदृशम् उच्चारणं विदधाति—स्वरात् स्वरे समानपदे जो यन्न तु ऋकारे (वा० प्रा० ४।१६४) इति । गुरु-लघु-लघुतरभेदाद् यकारस्त्रिविधः । तथा चोक्तं याज्ञवल्क्यशिक्षायाम्—

**यवर्णस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः ।**
**आदौ गुरुर्लघुर्मध्ये पदान्ते तु लघूतरः ॥**[4] इति ॥

तत्र स्पृष्टप्रयत्नो गुरुः, ईषत्स्पृष्टप्रयत्नो लघुः, अत्यन्तेषत्स्पृष्ट-प्रयत्नो लघुतर इति व्याख्यातारः । पाणिनिनापि-व्योर्लघुप्रयत्नतरः शाकटायनस्य (अ० ८।३।१८) इत्यत्र लघुप्रयत्नतरो यकारः सूच्यते । सानुनासिकनिरनुनासिकभेदात् सर्वो यकारः पुनर्द्विविधः ।

रेफो मूर्द्धन्य इति वैयाकरणाः शिक्षाकृतश्च संगिरन्ते ।[5] वाजसनेयिप्रातिशाख्ये तु-रो दन्तमूले (वा० प्रा० १।६८) इति सूत्रेण रेफस्य दन्तमूलीयत्वं प्रतिपाद्यते । शिक्षाकृताप्यस्यैकीयमतेन दन्तमूलीयत्वं सूच्यते ।[6] रेफात् परस्य नकारस्य णकारविधानम् अस्य मूर्द्धन्यत्वं ज्ञापयतीत्याधुनिकाः[7] । जिह्वाग्रेण करणेनायम् उच्चार्यत इति वाजसनेयिप्रातिशाख्यकारः—रश्च (वा० प्रा० १।७७) इति ।

---

१. सू० पा० शि०, पृ० ११ । वा० प्रा० १।७९ ॥
२. प्रति० परि०, पृ० ४१४ ॥
३. या० शि०, पृ० १११ ॥
४. या० शि०, पृ० ११२ टि० २ ॥
५. न्यास, पद०, पृ० १०० । सू० पा० शि० पृ० १० । श्लो० पा० शि० १७ । ६. सू० पा० शि०, पृ० १० ॥
७. वैदिक व्याकरण, पृ० १५ ॥

लकारो वाजसनेयिप्रातिशाख्यकारेण दन्त्यो निर्दिश्यते–लृलसिता दन्ते (वा० प्रा० १।६९) इति। वैयाकरणैः शिक्षाकृद्भिश्चाप्ययं दन्त्य एव स्वीक्रियते।[1] जिह्वाग्रेण करणेनायम् उच्चार्यत इति प्रातिशाख्यकारः। तद्यथा—दन्त्या जिह्वाग्रकरणाः (वा० प्रा० १।७६)। सानुनासिकनिरनुनासिकभेदेन द्विविधो लकारः।

वकारः प्रातिशाख्यकारेण कात्यायनेन–उवोः प्पा ओष्ठे (वा० प्रा० १।७०) इत्योष्ठ्यः संकीर्त्यते, करणं चास्य–वोदन्ताग्रैः (वा० प्रा० १।८१) इति दन्ताग्रभागः प्रतिपाद्यते। पाणिनीयैः शिक्षाकृद्भिश्च वकारस्य दन्तोष्ठ्यत्वम् आस्थीयते[2], अयमपि सानुनासिकनिरनुनासिक-भेदेन द्विविधः प्रोच्यते। याज्ञवल्क्यशिक्षाकारेण वकारस्यापि यकारवत् त्रयो भेदा निर्दिश्यन्ते। तथा हि—

**वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः।**
**आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूतरः॥**[3] इति॥

पाणिनिः खल्वपि शाकटायनमतेन प्राह–व्योर्लघुप्रयत्नतरः शाकटायनस्य (अ० ८।३।१८) इति। वृत्तिकारो लघुप्रयत्नतरत्वं विवृणोति–**लघुप्रयत्नतरत्वम् उच्चारणे स्थानकरणशैथिल्यम्। स्थानं ताल्वादि, करणं जिह्वामूलादि। तयोरुच्चारणे शैथिल्यं मन्दप्रयत्नता**[4]–इति।

### २. ६. १३. ऊष्मणाम्—

शकारस्तालव्य इति पाणिनीयैः प्रातिशाख्यकृद्भिश्च स्वीक्रियते।[5] जिह्वामध्येन करणेनायम् उच्चार्यत इति प्रातिशाख्यकृत् कात्यायनः शिक्षाकारश्च।[6]

षकारो मूर्द्धन्य इति सर्वसम्मतम्[7]। जिह्वाग्रं प्रतिवेष्ट्य षकार

---

१. न्यास, पद० पृ० १००। सू० पा० शि०, पृ० १०। श्लो० पा० शि०, १७॥

२. न्यास, पद० पृ० १००। श्लो० पा० शि० १८। सू० पा० शि०, पृ० १०॥ ३. या० शि० पृ० ११२॥ ४ का० ८।३।१८॥

५. न्यास, पद० पृ० १००। श्लो० पा० शि० १७। सू० पा० शि०, पृ० १०। वा० प्रा० १।६६॥

६. वा० प्रा० १।७९; सू० पा० शि०, पृ० ११।

७. न्यास, पद० पृ० १००। श्लो० पा० शि०, पृ० १७। पृ० १०। वा० प्रा० १।६७॥

उच्चार्यत इति प्रातिशाख्यकारः कात्यायनः[1] । प्रतिज्ञापरिशिष्टे शिक्षाग्रन्थेषु च षकारस्य क्वचित् खकारसदृशम् उच्चारणं विधीयते ।[2]

सकारो दन्त्य इति सर्वैः सम्मन्यते[3] । दन्त्यत्वादयमपि जिह्वाग्रकरणः[4] ।

हकारः कण्ठ्य इति सर्वैरभिमन्यते ।[5] कैश्चित्तु चकारस्योरस्यत्वं प्रोच्यते ।[6] हकारस्य द्विविधोच्चारणत्वात् पाणिनिर्वर्णसमाम्नाये द्विर्हकारं जग्राहेति केचित् ।

## २. ६. १४. अयोगवाहानाम्—

अयोगवाहशब्दस्य व्युत्पत्तयः संज्ञापरिभाषाविमर्शे प्रदर्शयिष्यन्ते । पाणिनिः स्ववर्णसमाम्नाये विसर्जनीय-जिह्वामूलीयोपध्मानीयानुस्वार-नासिक्ययमान्[7] अयोगवाहाभिधान् वर्णान् न सन्निवेशयामास । तदसन्निवेशे त्वयं हेतुः प्रतीयते—पाणिनेः समाम्नायो न वर्णस्वरूपप्रदर्शनपरः, किन्तु प्रत्याहारार्थः । प्रत्याहारेषु चायोगवाहानां सामान्येन सर्वत्र ग्रहणम् इष्यते पाणिनीयैः ।[8] तस्मात् प्रयोजनाभावात् तदुपदेशाभावः । शिक्षाकारः—**अयोगवाहा विज्ञेया आश्रयस्थानभागिनः**[9]—इति वचनेन स्वपूर्ववर्णस्थानमेवायोगवाहानां स्थानं भवतीति निर्दिशति ।

विसर्जनीयः कण्ठ्य इति पाणिनीया वाजसनेयिनश्च[10] । कैश्चिद् अस्योरस्यत्वम् अप्यास्थीयत इति—हविसर्जनीयावुरस्यावेकेषाम्[11]—इति

---

१. वा प्रा० १।७८ ॥

२. प्रति० परि० २।१२, पृ०४२३ ॥ वैदिकव्याकरण पृ० ६८ टि०६५ ॥

३. न्यास, पद० पृ० १०० । श्लो० पा० शि०, पृ० १७ । सू० पा० शि० पृ० १० । वा० प्रा० १।६९ ॥

४. वा० प्रा० १।७६, सू० पा० शि, पृ० ११ ।

५. न्यास, पद० पृ० १०० । श्लो० पा० शि०, पृ० १७ । सू० पा० शि०, पृ० १० । वा० प्रा० १।७१ ॥

६. श्लो० पा० शि० १६; सू० पा० शि०, पृ० १० ।

७. महा० प्रत्याहाराह्निके पञ्चमे सूत्रे ।

८. महा० हयवरट्सूत्रे ।

९. श्लो० पा० शि० २२ ॥

१०. सू० पा० शि०, पृ० १० । न्यास, पद०, पृ० १०० । वा० प्रा० १।७१ ॥

११. सू० पा० शि०, पृ० १० ।

शिक्षाकारवचनाज्ज्ञायते । जिह्वामध्यभागोऽस्य करणम् इति प्रातिशाख्यम् ।[1]

जिह्वामूलीयस्य स्थानं जिह्वामूलम् इत्यस्य नाम्नैव ध्वन्यते ।[2] अस्य करणं हनुमूलम् इति प्रातिशाख्यकृत् कात्यायनः ।[3] शिक्षाकारस्तु-**जिह्वामूलीयो जिह्व्यः**[4]-इत्याह, जिह्वामूलं चास्य करणम्[5] अभिमन्यते ।

उपध्मानीय ओष्ठ्य इति वैयाकरणा वाजसनेयिनश्च[6] । अस्य करणम् अप्योष्ठम् एवेति शिक्षा-प्रातिशाख्ये ।[7]

अनुस्वारस्य स्थानं सर्वनासिका निर्दिश्यते ।[8] प्रातिशाख्यकारः कात्यायनोऽस्य करणं हनुमूलम् आह-जिह्वामूलीयानुस्वारा हनुमूलेन (वा० प्रा० १।८३) इति । द्विविधोऽयं वर्णः । तथा चाह वाजसनेयिप्रातिशाख्यकारः—अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चार्द्धमात्रा, दीर्घादर्द्धमात्रा पूर्वा चाध्यर्द्धा (वा० प्रा० ४।१४८, १४६) इति । प्रतिज्ञापरिशिष्टेऽनुस्वारस्य गुङ्कार आदेशो विधीयते, तस्य च त्रैविध्यं प्रतिपाद्यते । तथा हि—**अथानुस्वारस्य ॐ इत्यादेशः शषसहरेफेषु । तस्य त्रैविध्यम् आख्यातं ह्रस्वदीर्घगुरुभेदैः, दीर्घात् परो ह्रस्वो, ह्रस्वात् परो दीर्घो, गुरौ परे गुरुः**[9]—इति । एतेन गुङ्कारो न वर्णान्तरम् इति निष्कर्षः । अद्यत्वे वैदिकैरुच्चार्यमाणो गुङ्कारोऽनेकवर्णसमूह इति स्पष्टम् अनुभूयते । तस्माद् अस्योच्चारणं भ्रष्टम् इत्यनुमीयते ।

नासिक्यो वर्णो नासिकास्थानो नासिकाकरणश्च वाजसनेयिप्रातिशाख्ये निर्दिश्यते । तद्यथा—यमानुस्वारनासिक्यानां नासिके (वा० प्रा०

---

१. वा० प्रा० १।८४ ॥

२. वा० प्रा० १।६५ ॥ ३. वा० प्रा० १।८३ ॥

४. सू० पा० शि०, पृ० १० ॥ ५. सू० पा० शि० पृ० ११ ॥

६. सू० पा० शि०, पृ० १०; न्यास, पद०, पृ० १०० । वा० प्रा० १।७० ॥

७. वा० प्रा० १।८०; सू० पा० शि०, पृ० ११ ॥

८. सू० पा० शि०, पृ० १० । न्यास, पृ० १०० । श्लो० पा० शि० २२ । वा० प्रा० १।७४ ॥

९. प्रति० परि० १, २ पृ० ४२६ ॥

१।७४),समानस्थानकरणा नासिक्यौष्ठ्याः(वा० प्रा० १।८०) इति । यद्यप्ययं वर्णो महाभाष्येऽयोगवाहेषु[1] परिगण्यते,तथापि नायं वैयाकरणै-रुपयुज्यते क्वचिदपि । वाजसनेयिप्रातिशाख्यकारः—हुं इति नासिक्यः (वा० प्रा० ८।३०) इति स्वरूपत उपदिशन्नपि स्वशास्त्रे क्वचनाप्य-स्योपयोगं न प्रदर्शयामास । ऋक्प्रातिशाख्येऽपि नासिक्यस्य नासिका-स्थाननिरूपणं[2] विहायान्यद् न किञ्चिद् उच्यते । सानुनासिकहकारस्येयं संज्ञेति प्रातिशाख्यकारकात्यायन-कृतेन—हुं-इति स्वरूपनिर्देशेनाक्षि-प्यते । तैत्तिरीयप्रातिशाख्येऽस्य स्पष्टं विधानम् उपलभ्यते । तथा हि—**हकारान्नणमपरान्नासिक्यम्**[3]-इति । तत्र सोमयार्यो हकारस्यैवा-नुनासिक्यम् इत्यङ्गीकुर्वन्नाह–**हकाराद् इति कर्मणि ल्यब्लोपे पञ्चमी । तस्मान्नणमपरं हकारम् आरुह्य नासिक्यं भवति । सानुनासिको हकारः स्याद् इत्यर्थः**[4]–इति । गार्ग्यगोपालयज्वा तु प्राह – **हकारात् खलु नकारणकारमकारपरात् परतो नासिक्यागमम् एक आचार्या उपदिशन्ति**[5]–इति । तथा चास्यागमपक्षोऽभीष्टः । अत्र—हे मपरे वा, नपरे नः (अ० ८।३।२६,२७) इति पाणिनीययोगाभ्यां मनपरे हकारे मकारस्य यथासंख्यं मकारनकारविधानं हकारस्यैव सानुनासि-कत्वम् अनुमापयति । अतोऽत्र सोमयार्यपक्ष एव युक्ततरकः प्रतीयते ।

यमा नासिकास्थाना नासिकाकरणाश्च सर्वैरङ्गीक्रियन्ते[6] । व्या-करणे यमानां विशिष्टं वर्णनं नोपलभ्यते, केवलं स्थानम् उपदिश्यते । भट्टोजिदीक्षितो यमस्वरूपं स्फुटीकुर्वन्नाह— **वर्गेष्वादितश्चतुर्णां पञ्चमे परे तन्मध्ये पूर्ववर्णसमानाकारं वर्णान्तरं प्रातिशाख्येष्वागम-त्वेन विहितम्, तद् यमसंज्ञम् । यम इव यमः । यमौ हि लोके प्रायेण समानाकारौ भवतः**[7]–इति । वाजसनेयिप्रातिशाख्यकारो विच्छेदशब्दे-नापि यमान् स्मरति[8] । स च—स्वरात् संयोगादिः (वा० प्रा०

---

१. महा० हयरवट्सूत्रे ॥ २. ऋ० प्रा० १।४८ ॥

३. तै० प्रा० २१।१४ ॥

४. तै० प्रा० २१।१४ त्रिभा० ॥

५. तै० प्रा० २१।१४ वैदिका० ॥

६. न्यास, पद० पृ० १०० । सू० पा० शि० पृ० १० । श्लो० प्रा० शि० २२ । वा० प्रा० १।७४ ॥ ७. श० कौ० १।१।८ ॥

८. वा० प्रा० ४।६१ उ० भा०, अ० भा० ॥

४।१६९) इत्यादिना योगेन विहितद्वित्वस्यापञ्चमस्य वर्णस्य पंचमे वर्णे परतोऽन्तः-पदे यमादेशं विदधाति—अन्तःपदेऽपञ्चमः पञ्चमेषु विच्छेदम् (वा० प्रा० ४।१६१) इति । इमे यमाश्चत्वार एव—कुं खुं गुं घुं इत्येतैः शब्दैः प्रदर्श्यन्ते । एतैश्च यथासंख्यं वर्गाणां प्रथमद्वितीय-तृतीयचतुर्था वर्णा उपलक्ष्यन्ते । अतएव प्रथमयमादिव्यवहार उपपद्यते । तदाहोवटः—**एवं विंशतिर्यमा बह्वृचां भवन्ति, स्वरूपैश्चत्वार एव**[1]–इति । अननुनासिकस्य वर्णस्यांशिकोऽनुनासिकध्वनिर्यम इत्याधुनिकाः[2] । आंशिकध्वनीनां व्याकरणपरिधेर्बहिर्भूतत्वाद् न ते पाणिनिना निर्दिदिशिरे ।

## २. ७. ०. उच्चारणविशेषाः—

प्रातिशाख्येषु शिक्षाग्रन्थेषु च ध्वनिविषयिका महती सूक्ष्मेक्षिका समुपलभ्यते । आचार्यैः सूक्ष्मध्वनिविशेषा निपुणं विविक्ताः, ततो वर्गीकृत्य तद्भेद-कालादीनां विशदं निरूपणं विहितम् । व्याकरण-शास्त्रस्योत्तरविद्यात्वात् तत्र च शब्दविश्लेषणस्य प्राधान्यात् तादृग्ध्वनिविशेषाणां निरूपणं न क्रियते । वाजसनेयिप्रातिशाख्ये निरूपितत्वाद् अत्र केचनोच्चारणविशेषा विविच्यन्ते ।

## २. ७. १. स्वरभक्तिः—

रेफलकारयोः परवर्त्तिनोष्मणा संयोगे जाते तन्मध्ये स्वल्पः स्वरांश उच्चार्यते । स एव स्वरांशः प्रातिशाख्यकारैः शिक्षाकृद्भिश्च 'स्वरभक्तिः' इति नाम्ना स्मर्यते[3] । ऋचां छन्दःपूर्त्यर्थं स्वरभक्तिरुच्चार्यत इति पाश्चात्त्याः[4] । एषा प्रवृत्तिर्लोकेऽपि ददृश इति सिद्धेश्वरवर्मा सोदाहरणं प्रत्यपीपदत्[5] ।

स्वरभक्तेः स्वरूपम् उच्चारणं चाचार्यैर्भेदेन प्रदर्श्यते । तथा च—

---

१. ऋ० प्रा० १।५० उ० भा० ॥

२. वैदिक व्याकरण, पृ० ५३ ॥

३. ऋ० प्रा० ६।१३ ॥ वा० प्रा० ४।१६ ॥ तै० प्रा० २१।१५ ॥ अ० प्रा० १।१०१ ॥ शि० सं०, पृ० २९३ ॥

४. ए० ए० मैक्डानल : वैदिक ग्रामर, पृ० १३, १४॥

५. क्रिटिकल स्टडीज़, पृ० १३६ ॥

अवर्णसदृशी सेति अथर्वप्रातिशाख्यकारः।[1] ऋक्प्रातिशाख्यकारस्त्वस्या ऋवर्णसादृश्यं पूर्वोत्तरस्वरस्वरूपतां च प्रतिपादयामास[2]। तत्र च प्रोक्तम् उवटेन—**न केवलम् ऋकाररूपा स्वरभक्तिः—धूर्षम् इत्यूकाररूपा स्वरभक्तिः, बर्हिषद इतीकाररूपा स्वरभक्तिः**[3]—इति। माण्डूकी शिक्षा खल्विकाररूपामेव समीचीनां मन्यमाना अकारोकाररूपां सदोषां घोषयति। तथा हि—

**सम्यगेनां विजानीयाद् द्वौ दोषौ परिवर्जयेत्।**
**सम्यगेनां यदा पश्येच्छतवल्शेति निदर्शनम्॥**
**अकारं चाप्युकारं च विच्छिन्नं विवृतं तथा॥**[4] इति॥

वाजसनेयिप्रातिशाख्यकारः—रलावृलृवर्णाभ्याम् ऊष्मणि स्वरोदये सर्वत्र (वा० प्रा० ४।१७) इति सूत्रे ऋकारलृकारसदृशीं स्वरभक्तिमङ्गीचकार। उवटो वाजसनेयिप्रातिशाख्यसूत्रं विवृण्वन्नाह—**तौ स्वरावुत व्यञ्जनाविति, शृणु, ऋलृसदृशौ व्यञ्जनार्द्धमात्रकाविति ब्रूमः। तौ स्वरभक्तिरित्यन्येषु पदेषु प्रसिद्धौ**[5]—इति। केशवी शिक्षा, प्रतिज्ञापरिशिष्टं, लघुमाध्यन्दिनी शिक्षा च स्वरभक्तेरेकारसदृशम् उच्चारणं प्रतिपादयन्ति[6]।

स्वरभक्तेः परिमाणविषय आचार्याणां मतानि भिद्यन्ते। तथा चाथर्वप्रातिशाख्ये मात्रार्ध-मात्राचतुर्थ-मात्राष्टमपक्षाः प्रदर्शिताः[7]। उवटो व्यञ्जनार्द्धमात्रापक्षम् अङ्गीचकारेति तस्य पूर्वोद्धृतवचनाद् व्यज्यते। प्रसङ्गात् कैयटनागेशौ मात्रातुर्यामशभक्ति रेफमुभयत ऋकारे निर्दिदिशतुः।[8] स्वरभक्तिर्मध्ये वर्तमानापि सती संयोगं न विहन्ति[9]।

---

१. अ० प्रा० १।१०१॥ २. ऋ० प्रा० ६।४६, ५३॥
३. ऋ० प्रा० ६।५३ उ० भा०॥
४. शि० सं०, पृ० ४७२॥
५. वा० प्रा० ४।१७ उ० भा०॥
६. शि० सं०, पृ० ११५, १४१, १४२, २३३। प्रति० परि०, पृ० ४१६॥
७. अ० प्रा० १।१०१॥
८. प्रदीपोद्योतौ ८।४।१॥
९. वा० प्रा० ४।१७ उ० भा०, अ० भा०॥

ऊष्मणां द्वित्वं त्वनया बाध्यत एव।[१] शिक्षाकाराः स्वरभक्तेः पञ्च-प्रभेदान् वर्णयन्ति[२]। तथा हि—

**करिणी कुर्विणी चैव हरिणी हरिता तथा।**
**तद्वद्धंसपदा नाम पञ्चैताः स्वरभक्तयः ॥**
**करिणी रहयोर्योगे कुर्विणी लहकारयोः।**
**हरिणी रशयोर्योगे हरिता लशकारयोः ॥**
**या तु हंसपदा नाम सा तु रेफषकारयोः ॥**[३] इति ॥

वैयाकरणाः स्वविषयबहिर्भूतत्वाद् यद्यपि स्वरभक्तिं स्वशास्त्रे न निरूपयन्ति, तथापि प्रसङ्गान्तरे तत्सदृशीम् अज्भक्तिम् अङ्गीकुर्वन्ति। तथा चाह महाभाष्यकारः—**यत्तद् रेफात् परं भक्तेस्तेन व्यवहितत्वान्न प्राप्नोति**[४]—इति। तत्रैव—**मात्राचतुर्थस्य पृथगभावात्**[५]—इति कैयटवचनं विवृण्वन्नाह नागेशः—**रेफोऽर्द्धमात्रः, उभयतोऽज्भक्तिरर्द्धमात्रा। अत्र मानं प्रत्याहाराह्निक उक्तम्। एवञ्च परभागो मात्रातुर्य इति स्पष्टमेव**[६]—इति।

## २. ७. २. अभिनिधानम्—

अभिनिधानं नाम व्यञ्जनविधारणं वर्णश्रुतेर्वा संवरणम्[७]। अभिनिहितवर्णस्य ध्वनिः पीडितो, दुर्बलतरो, हीनश्वासनादश्च भवतीत्यथर्ववेदप्रातिशाख्यकारः[८]। अस्य विशिष्टोच्चारणस्य विवरणं प्रातिशाख्येषु शिक्षाग्रन्थेषु चोपलभ्यते[९]। तत्र स्पर्शानां रेफवर्जम् अन्तःस्थानां चाभिनिधानं स्पर्शेषु परतोऽवसाने च सर्वैरङ्गीक्रियते।

वाजसनेयिप्रातिशाख्ये यद्यप्यभिनिधानस्य साक्षान्निर्देशो नोपलभ्यते, तथापि तत्प्रवृत्त्या ज्ञाप्यते यदेतद् वैशिष्ट्यं प्रातिशाख्यकारेण

१. शि० सं० पृ० २९५ ॥
२. शि० सं० पृ० १७, १७५, ४५७, ४७२ ॥
३. या० शि० पृ० ८५-८६, शि० सं०, पृ० १७ ॥
४. महा० ८।४।१ ॥ ५. प्रदीप ८।४।१ ॥
६. उद्योत ८।४।१ ॥ ७. अ० प्रा० १।४३ ॥ ऋ० प्रा० ६।१७ ॥
८. अ० प्रा० १।४३ ॥
९. ऋ० प्रा० ६।१७; अ० प्रा० १।४३। चारायणीयशिक्षा द्र०—क्रिटिकल स्टडीज़, पृ० १४२ ॥

समवाबोधीति । तथा हि–स्पर्शान्तस्य स्थानकरणविमोक्षः, अवसाने च (वा० प्रा० १।९०,९१) इति कात्यायनीयौ योगौ स्थानकरणविमोक्षं विदधाते । स्थानकरणविमोक्षात् स वर्णविशेषो व्यक्तम् उच्चार्यते । कैश्चिद् ग्रन्थः स्पर्शोऽभिनिधीयतेऽपूर्णतयोच्चार्यते स्मेति कात्यायनविधानेन ज्ञाप्यत इति केचित् ।[1] उवटस्तु—द्विवर्णम् एकवर्णवद् धारणात् स्वरमध्ये समानपदे (वा० प्रा० ४।१४२) इति योगेन विधीयमानम् एकवर्णवद्भावम् अभिनिधानम्[2] अभ्यधात् ।

### २. ७. ३. स्फोटनम्—

अयम् उच्चारणविशेषः प्रातिशाख्येषु शिक्षाग्रन्थेषु च विव्रियते । यदावसानो वर्णः परवर्णवर्गात् पूर्ववर्गीयो भवति, तदा पूर्वोत्तरवर्णयोर्मध्ये स्वल्पः स्वरध्वनिरुच्चार्यते, येन पूर्वो वर्णः स्फुटीभवति । अयमेव ध्वनिविशेषः स्फोटननाम्ना स्मर्यते । तथा च—**वषट् कृतम्** (मा० सं० ७।२६) इत्यत्र टकाराद् उत्तरं स्फोटनं स्वीक्रियते । अथर्वप्रातिशाख्यकारः स्फोटनस्वरूपं प्रदर्शयति—वर्णविपर्यये स्फोटनः पूर्वेण चेद् विरामः (अ० प्रा० २।३८) इति । अस्योच्चारणविशेषस्य कालः कैश्चिद् मात्राचतुर्थ उररीक्रियते, परैश्च मात्राष्टमः[3] ।

वाजसनेयिप्रातिशाख्यकारः—स्फोटनं च ककारवर्गे वा स्पर्शात् (वा० प्रा० ४।१६३)–इति सूत्रेण कवर्गे परतः स्फोटनं विकल्पेन प्रतिपादयाम्बभूव । तत्रैवोवटः स्फोटनं विवृण्वन्नाह—**स्फोटनं नाम पिण्डीभूतस्य संयोगस्य पृथग् उच्चारणम्**[4]–इति । स्फोटनं दोष इति प्रातिशाख्यकारस्य कात्यायनस्य पक्षः । अत एव–स्वरात् संयोगादिः (वा० प्रा० ४।९९) इति द्वित्वविधानं सम्भवति ।[4] शिक्षाकारोऽपि प्रातिशाख्यकृत्कात्यायनस्यानुवदते—

**स्पर्शात् परककारस्य स्फोटनं दोषकृन्न वा ।**
**अत्राचार्याशयाद् द्वित्वं स्फोटनं द्वित्वनाशनम् ॥**
**अयस्पिण्डेन तत्तुल्यं तस्माद् उच्चारणं तथा ॥**[5] इति ॥

---

१. सिद्धेश्वरवर्मा, क्रिटिकल स्टडीज्, पृ० १४१ ॥
२. वा० प्रा० ४।१४१ उ० भा० । मुद्रितग्रन्थेषु 'अभिधानम्' इति पाठः ।
३. अ० प्रा० १।१०३ ॥
४. वा० प्रा० ४।१६३ उ० भा० ॥
५. वर्णरत्नप्रदीपशिक्षा १८५, १८६ ॥ शि० सं०, पृ० १३३ ॥

यद्यपि वाजसनेयिप्रातिशाख्यस्य कवर्गमात्रे स्फोटननिर्देशोऽथर्व-प्रातिशाख्यस्थापेक्षया सङ्कुचितः प्रतीयते, तथापि कस्याञ्चिद् वाजसनेयिसंहितायां कवर्गमात्र एव स्फोटनोपलम्भात् तथा निर्देशो युक्त एव । व्हिटनेमहोदयस्तु प्रावोचत्—वाजसनेयिप्रातिशाख्येन विधीयमानः स्थानकरणयोर्मोक्षः (वा० प्रा० १।९०) परिस्थित्यन्तरे प्रायेण स्फोटनमेव[1]—इति ।

## २. ८. अक्षरविभागः—

प्रातिशाख्यकारैर्वैयाकरणैश्चाक्षरशब्दः स्वरार्थे स्वरव्यञ्जनसमुदायार्थे च प्रयुज्यते । तथा च प्राह प्रातिशाख्यकारः कात्यायनः—तत्समुदायोऽक्षरम्, वर्णो वा (वा० प्रा० ८।५५, ५६) । पूर्वाचार्या अक्षरशब्दं वर्णार्थ प्रयुञ्जते स्मेति श्लोकवार्त्तिककारस्य—**वर्णं वाहुः पूर्वसूत्रे**[2]—इति कथनाद् व्यज्यते । वर्णो वा (वा० प्रा० ८।५६) इत्यत्र वर्णशब्दो न वर्णसामान्यार्थकः, किन्तु स्वरमात्रार्थक इति प्रातिशाख्यकृतः प्रवृत्त्या ज्ञाप्यते । तथा हि, प्रथमाध्याये सूत्र्यते—स्वरोऽक्षरम् (वा० प्रा० १।९९) इति । पाणिनीयैः—एकाचो द्वेप्रथमस्य (अ० ६।१।१) इत्यत्र योऽर्थ एकाच्-शब्देन गृह्यते, स एव प्रातिशाख्यकृता कात्यायनेनात्राक्षरसंज्ञया समवबोध्यते । इत्थं चाक्षरसंज्ञायां स्वरस्य प्राधान्यं भवति । अतएव केवलं व्यञ्जनं तत्समुदायो वाक्षरसंज्ञां न प्रयोजयति ।

शब्देषु स्वराणां प्राधान्याद् व्यञ्जनानि स्वरान् एव भजन्ते । तदाह महाभाष्यकारः—**व्यञ्जनानि पुनर्नटभार्यावद् भवन्ति । तद्यथा नटानां स्त्रियो रङ्गगता यो यः पृच्छति कस्य यूयं कस्य यूयमिति तं तं तव तवेत्याहुः । एवं व्यञ्जनान्यपि यस्य यस्याचः कार्यमुच्यते तं तं भजन्ते**[3]—इति । अच्समीपवर्त्तिव्यञ्जनं तत्स्वरेणाप्यनुरज्यत इति वैयाकरणैः स्वीक्रियते ।[4] वाजसनेयिप्रातिशाख्यकारः खलु व्यक्तमेव निर्दिशति—व्यञ्जनं स्वरेण सस्वरम् (वा० प्रा० १।१०७) इति । एवं व्यञ्जनानाम् अज्भक्तत्वाद् बह्वच्केषु शब्देषु किं व्यञ्जनं

---

१. डब्ल्यू० डी० व्हिटने : अ० प्रा० पृ० ९४ ॥

२. महा० प्रत्याहाराह्निकान्ते ॥

३. महा० ६।१।२ ॥ ४. महा० १।२।३० ॥

कम् अचं भजते इति निर्णय आवश्यकः। प्रातिशाख्यकारः कात्यायनः साक्षाद् अक्षर-विभागमारभते, पाणिनीयैस्तु नायं प्रयासो विहितः। अतो वाजसनेयिप्रातिशाख्यम् आधृत्यात्र समासतोऽक्षरविभागः प्रदर्श्यते।

(१) एकाक्षरेषु शब्देषु तावद् अधस्तनान्युपरितनानि च व्यञ्जनानि स्वराङ्गभूतानि। तथा च कात्यायनस्य त्रिसूत्री–सहाद्यैर्व्यञ्जनैः, उत्तरैश्चावसितैः, अवसितं च (वा० प्रा० १।१००, १०१, १०६) इति। एवं च वाक् ऊर्क् इत्यादिषु पदेषु पूर्वपरवर्त्तीनि व्यञ्जनानि स्वरं भजन्ते।

(२) अनेकाक्षरेषु शब्देषु तु मध्यवर्त्तीनि व्यञ्जनानि परस्याक्षरस्याङ्गानि भवन्ति, किन्तु तत्र सयोगस्यादिभूतं व्यञ्जनं पूर्वस्याक्षरस्यावयवोऽङ्गीक्रियते—संयोगादिः पूर्वस्य (वा० प्रा० १।१०२) इति सूत्रेण। तथा च 'अन्तः' इत्यत्र 'अन्। तः' इत्यक्षरविभागः।

(३) यमः क्रमजं व्यञ्जनं च पूर्वस्याक्षरस्याङ्गं भवतीति—यमश्च, क्रमजं च (वा० प्रा० १।१०३, १०४) इति सूत्राभ्यां प्रतिपाद्यते। तथा च रुक्क्मम्, पारश्श्व्यम् इत्यत्र 'रुक्क्। मम्' 'पारश्'। 'श्व्यम्' इत्यक्षरविभागः।

(४) क्रमजात् परं व्यञ्जनं स्पर्शे परतः पूर्वस्याक्षरस्यावयव इति—तस्माच्चोत्तरं स्पर्शे (वा० प्रा० १।१०५) इति सूत्रेण प्रतिपाद्यते। तथा च 'पार्ष्ण्यां' इत्यत्र 'पार्ष्ष्। ण्या' इत्यक्षरविभागः। अत्रोवटभाष्ये—**रेफषकारौ द्वौ णकारौ यकारश्च संयोगः**[1]–इति पाठो न युक्तः, **रेफो द्वौ षकारौ पूर्वस्य णकारयकारौ परस्य**[2]–इति प्रातिशाख्य-प्रदीपशिक्षायाम्, **पार्ष्ण्यां पूर्वस्य रषषाः परस्याङ्गं णयात्मकम्**[3]–इति वर्णरत्नप्रदीपशिक्षायां च दर्शनात्।

—:०:—

१. वा० प्रा० १।१०५ उ० भा०॥

२. शि० सं०, पृ० २५५॥

३. शि० सं०, पृ० १२१॥

तृतीयोऽध्यायः

# ३. संज्ञापरिभाषाविमर्शः

## ३. १. संज्ञापरिभाषयोः प्रयोजनम्—

संज्ञाशब्दो भावकर्मकरणेषु साधनेष्वाचार्यैर्व्युत्पाद्यते । तथा हि—संज्ञानं संज्ञेति भावे[1] । संज्ञाशब्देन कर्मसाधनेन संज्ञायमानम् अभिधीयते[2]—इति नागेशोक्त्या कर्मणि । यया प्रत्याय्यन्ते सा संज्ञा, ये प्रतीयन्ते ते संज्ञिनः[3]—इति पतञ्जलेः, करणसाधनः संज्ञाशब्दः, संक्षेपेण ज्ञायतेऽनयेति संज्ञा[4]—इति स्कन्दस्य, संज्ञायतेऽनयेति संज्ञा[5]—इति कैयटस्य, संज्ञाशब्दस्तु करणे व्युत्पन्नः[6]—इति नागेशस्य च वचनैः करणसाधनः संज्ञाशब्दः । परिभाषाशब्दोऽपि करणादिसाधनेषु व्युत्पाद्यते । तथा चाह हरदत्तः—परितः सर्वत्र पूर्वत्र परत्र व्यवहिते चानन्तरे च भाष्यते कार्यम् अनया सा परिभाषा[7]—इति । हरिणा खल्वप्युक्तम्—

**एकदेशस्थिता शास्त्रभवने याति दीपताम् ।**
**परितो व्यापृतां भाषां परिभाषां प्रचक्षते ।।**[8] इति ।।

भगवता पतञ्जलिना तु पारार्थ्यसामान्यात् संज्ञातिदेशाधिकाराः परिभाषाशब्देन व्यपदिष्टाः । तथा हि—**द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोराद्यन्तवदेकस्मिन्निति च, येन विधिस्तदन्तस्येति···अधिकारो नाम त्रिप्रकारः । कश्चिदेकदेशस्थः सर्वं शास्त्रम् अभिज्वलयति यथा प्रदीपः**[9]—इति । समर्थसूत्रे तु महाभाष्यकारः—**अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योग उपतिष्ठते, परि-**

---

१. महा० १।२।५३ ।।    २. उद्योत ३।१।११८ ।।
३. महा० १।१।१ ।।
४. निरु० स्कन्दटीका, पृ० १७ ।।
५. प्रदीप ५।२।९१ ।।    ६. उद्योत ३।१।११२ ।।
७. पद० २।१।१ ।।    ८. वा० प० ।।
९. महा० १।१।१४; द्र०—प्रदीपोद्योतौ ।

**भाषा पुनरेकदेशस्था सती सर्वं शास्त्रम् अभिज्वलयति प्रदीपवत्**[1]– इत्यधिकारपरिभाषयोर्भेदं प्रदर्शयामास।

अस्मिन् परामर्शे संज्ञापरिभाषाशब्दौ करणव्युत्पन्नौ गृह्येते। परिभाषाश्च सूत्रनिर्दिष्टा एव विभाव्यन्ते, न तु ज्ञापकन्यायसिद्धा[2] अपि।

लाघवेन व्यवहारप्रक्लृप्त्यर्थं हि संज्ञाः क्रियन्ते।[3] परिभाषास्तु शास्त्रे सन्देहनिवृत्तिपुरःसरं स्पष्टप्रतिपत्त्यर्थम् आश्रीयन्ते। एवं चोभयमपि संज्ञापरिभाषं परार्थमेव क्रियते। व्यापारदृष्ट्या संज्ञापरिभाषयोर्द्वौ पक्षौ पाणिनीयैः स्वीक्रियेते–यथोद्देशं संज्ञापरिभाषं, कार्यकालं संज्ञापरिभाषं चेति। तत्र यथोद्देशपक्षे भाष्यकारीयः प्रदीपदृष्टान्तः सवर्थोपपद्यते। कार्यकालपक्षे तु स्वविषयसर्वशास्त्रैकवाक्यत्वाद् एवमुक्तिः, पठितदेशस्थेनैव तत्र तत्र तद्बुद्धिजननात्।[4]

पाणिनिना स्वशास्त्रस्यादिमेऽध्याये प्रधानरूपेण संज्ञाः परिभाषाश्च विन्यस्ताः, स्वल्पास्तु ता यथावसरम् अष्टमाध्यायं यावत् प्रकीर्त्तिताः। कात्यायनेनापि वाजसनेयिप्रातिशाख्ये, पाणिनेरनुकुर्वतेव, प्रधानतः प्रथमेऽध्याये गुणतश्च सर्वत्र शास्त्रे संज्ञापरिभाषं विन्यासि। तत्राप्ययं विशेषः—कात्यायनो वाजसनेयिप्रातिशाख्ये–अथाख्याः समाम्नायाधिकाः प्राग्रिफितात् (वा० प्रा० १।३३) इति सूत्रेण संज्ञापरिभाषम् अधिकरोति। सूत्रस्थ आख्याशब्दः परिभाषा अप्युपलक्षयतीति व्याख्यातारौ[5]। वस्तुतस्तु समाम्नायाधिका इति वचनात् संज्ञैवाधिक्रियते, समाम्नाये परिभाषाणाम् उपदेशाभावात्। अयं चाधिकारनिर्देशः प्राधान्येन प्राग्रिफितात्, अन्यत्रापि[6] संज्ञापरिभाषयोरुपदिष्टत्वात्। पाणिनिः स्वशास्त्रे संज्ञापरिभाषाधिकारनिर्देशकं सूत्रं नोपदिदेश। वार्त्तिककारः कात्यायनस्तु तत्र प्रयत्नवान् दृश्यते।[7]

---

१. महा० २।१।१ ॥ २. परिभाषेन्दुशेखरे ॥

३. लघ्वर्थं हि संज्ञाकरणम्। महा० १।१।१ ॥

४. उद्योत १।१।४८ ॥ ५. वा० प्रा० १।३३ उ० भा०, अ० भा० ॥

६. अर्थः पदम् (वा० प्रा० ३।२), न परकालः पूर्वकाले पुनः (वा० प्रा० ३।४)।

७. महा० १।१।१ ॥ प्रातिशाख्यकार-वार्त्तिककारयोः संज्ञाधिकारविषयिका समानप्रवृत्तिस्तयोरैक्यम् इङ्गयति। एतच्च सप्तमेऽध्याये विशदीकरिष्यते।

### ३.२. संज्ञापरिभाषाप्रकाराः—

संज्ञासु द्वैधं दृश्यते—कृत्रिमाः संज्ञा अकृत्रिमाश्च । कृत्रिमास्तावच्छास्त्रीयाः संख्याकर्मादयः । अकृत्रिमाश्च लोकप्रयुक्ताः पशुदेवतादयः । कृत्रिमा अपि 'लघ्वी-महती'-भेदाद् द्विविधाः । तत्र टिघुभादयो 'लघ्वी'-संज्ञा अनन्वर्थाः, सर्वनामसंख्यादयस्तु 'महती'-संज्ञा अन्वर्थाः ।[1] एतासु महत्यः संज्ञाः शास्त्रे न सर्वत्रकृत्रिमरूपेण प्रयुज्यन्ते । अत एव कृत्रिमाकृत्रिमयोः कृत्रिमे सम्प्रत्ययः[2]—इत्यस्यापवादः—उभयगतिरिह भवति[3]—इति पतञ्जलिना प्रोक्तः कृत्रिमाकृत्रिमविभागोऽयम् द्वयोरपि पाणिनीय-वाजसनेयितन्त्रयोरुपलभ्यते । प्रकारान्तरेणापि संज्ञा विद्वद्भिर्वर्गीकृताः । तथा चाभ्यङ्करः पाणिनीयतन्त्रे प्रयुक्तानां संज्ञानां वर्गीकरणं प्रादीदृशत्—(१) अव्याख्याता एकोनविंशतिः संज्ञाः, (२) संग्राहिका अष्टादश संज्ञाः, (३) अर्थसंज्ञाः पञ्चविंशतिः,(४) प्रत्ययशब्दांशादिसंज्ञास्त्रयस्त्रिंशत्, (५) लाघवकृत-संज्ञाः पञ्च[3]—इति । एवं संकलनया शतसंज्ञाः पणिनिनोपनिबद्धाः । अपरैरपि विद्वद्भिः पाणिनीयसंज्ञाः शतादधिका न्यूना वा परिगणिताः ।[4]

अष्टाध्यायी-वाजसनेयिप्रातिशाख्ययोः प्रायेण त्रिधा भिन्नाः परिभाषा उपलभ्यन्ते । तत्र काश्चन परिभाषाः सूत्रेषु कृतान् निर्देशान् स्पष्टीकुर्वन्ति, अन्या विधिवाक्येषु नियमकारिण्यः, अपराश्च विविधान् विषयान् अभिव्यञ्जयन्ति । पाणिनीयतन्त्रे ईदृशाः परिभाषाभिमता उपपञ्चाशा योगाः परिगण्यन्ते कैश्चित्[5] । पुरुषोत्तमवृत्तिटीकायां तु प्रोच्यते—परि सर्वशास्त्र उपयुक्ता वाणी भाषा, सा परिभाषा, सा च लिङ्गवती विध्यङ्गशेषभूता च । या लिङ्गद्वाराभावे नोपयुज्यते, सा लिङ्गवती यथा—इको गुणवृद्धी (अ० १।१।३) । या सर्वैव विधिवाक्य उपयुज्यते सापरा । सापि काचिद् विधेरङ्गभूता

---

१. महा० १।१।२२; १।२।५३ ॥

२. महा० १।१।२२ ॥

३. व्या० महा० भाग ७ पृ० १६३; १६४ ॥

४. पाणिनि, कात्यायन एण्ड पतञ्जलि, पृ० १५-१६ ॥

५. परिभाषासंग्रह-भूमिका पृ० ४,५ ॥

यां विना विधिवाक्यं नैव प्रवर्त्तते, यथा–आदेः परस्य (अ० १।१।५४) इति। न हि तद्विना—ईदासः (अ० ७।२।८३) इति प्रवर्त्तते। कांचिच्च विधिशेषभूता—विप्रतिषेधे परम् (अ० १।४।२) इति[1]।

पाणिनि-कात्यायनाभ्यां प्रयुक्तासु संज्ञासु परिभाषासु चानेका पूर्वाचार्यकृतेति व्याख्याकृतः स्पष्टं समभिव्याजह्रुः। तथा हि—**द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते**–[2]इति वृत्तिकारः। **सर्वनामस्थानम् इति पूर्वाचार्यैरेवेयं प्रयोजनमन्तरेणापि महती संज्ञा प्रणीता**[3]–इति जिनेन्द्रबुद्धिः। तत्र कियान् अंशः प्राचीनः कियान् वा स्वकीय इति निर्णयो न सुकरः। अनुपदं विधीयमाने संज्ञानुक्रमे एतद्विषयको विचारः प्रस्तोष्यते।

### ३. ३. ०. संज्ञाविभागाः—

पाणिनिना, प्रातिशाख्यकृता कात्यायनेन च याः संज्ञाः स्वशास्त्रे कण्ठत उक्तास्ता विभागशोऽग्रे प्रदर्श्यन्ते—

३. ३. १. **संग्रहसंज्ञा**—संज्ञाशब्दम् अधिकाररूपेण विन्यस्य यत्र संज्ञिनः संगृह्यन्ते, ताः संज्ञा अस्मिन् विभागे निविश्यन्ते। तथा हि—अष्टाध्यायीस्थाः संज्ञास्तावत्—अच्, हल्, सुप्, तिङ्, तृन्, कृञ् इत्यादयः प्रत्याहाराः, प्रगृह्यं, संख्या, सर्वनाम, अव्ययं, धातुः, कारकं, निपातः, उपसर्गः, गतिः, कर्मप्रवचनीयः, समासः, अव्ययीभावः, तत्पुरुषः (कर्मधारयोऽपि), द्विगुः, बहुव्रीहिः, द्वन्द्वः, प्रत्यय इति। वाजसनेयिप्रातिशाख्ये खल्वपि–प्रगृह्यं, रिफित इति द्वे संज्ञे।

३. ३. २. **प्रत्ययसंज्ञा**—पाणिनीयतन्त्रे प्रत्ययानां विविधाः संज्ञाः क्रियन्ते। प्रातिशाख्ये तु प्रत्ययसम्बन्धिकार्याणाम् अभावाद् न ताः क्रियन्ते। अतः पाणिनीयाः संज्ञा अत्रोपस्थाप्यन्ते—सर्वनामस्थानम्, अपृक्तः, परस्मैपदम्, आत्मनेपदम्, प्रथमः, मध्यमः, उत्तमः, एकवचनं, द्विवचनं, बहुवचनं, विभक्तिः (प्रथमादयोऽपि), सम्बुद्धिः, आमन्त्रितं, कृत्, कृत्यः, निष्ठा, सत्, सार्वधातुकम्, आर्धधातुकं, तद्राज इति।

३. ३. ३. **वर्णसंज्ञा**—उभयोः शास्त्रयोर्वर्णैरनेकं कार्यं क्रियते।

---

१. पाणिनि, पृ० ११८॥
२. का० २।३।२॥ ३. न्यास १।१।४२॥

अतो द्वाभ्यामप्याचार्याभ्यां वर्णानां बह्वचः संज्ञाः कृताः। तत्र पाणिनीयास्तावत्--वृद्धिः, गुणः, संयोगः, अनुनासिकः, सवर्णं, सम्प्रसारणम्, उपधा, ह्रस्व-दीर्घ-प्लुताः, उदात्तानुदात्तस्वरिताः, इत्, लघु, गुरु-इति। वाजसनेयिप्रातिशाख्ये खल्वपि-उपधा, सवर्णं, सन्ध्यक्षरं, भावी, व्यञ्जनं, संयोगः, सोष्माणः, ह्रस्व-दीर्घ-प्लुताः, अनुनासिकः, अक्षरम्, उदात्तानुदात्तस्वरिताः, जात्यः, अभिनिहितः, क्षैप्रः, प्रश्लिष्टः, तैरोव्यञ्जनः, तैरोविरामः, पादवृत्तः, ताथाभाव्यः, स्वरः, स्पर्शः, अन्तःस्था, अयोगवाहः, जिह्वामूलीयः, उपध्मानीयः, अनुस्वारः, विसर्जनीयः, नासिक्यः, यम इति वर्णसंज्ञाः।

३. ३. ४. **शब्दसंज्ञा**— शास्त्रद्वयेऽपि शब्दानां शब्दांशानां च काश्चन संज्ञाः क्रियन्ते। तत्र पाणिनिस्तावत्-षट्, वृद्धं, प्रातिपदिकं, नदी, अङ्गम्, पदम्, उपपदम्, अभ्यासः, अभ्यस्तम्, आम्रेडितम् इत्येताः संज्ञाश्चकार। वाजसनेयिप्रातिशाख्यकारोऽपि -आम्रेडितं, स्थितोपस्थितम्, अपृक्तं, पदम् इत्येताः संज्ञा रचयामास।

३. ३. ५. **अर्थसंज्ञा**—उभयत्र शास्त्रयोः काश्चन संज्ञा अर्थविशेषान् बोधयन्ति। तत्र पाणिनीयतन्त्रे-विभाषा, लोपः, लुक्-श्लु-लुपः, उपसर्जनं, संहिता, अवसानम्, अपादानं, सम्प्रदानं, करणम् अधिकरणं; कर्म, कर्त्ता, हेतुः, गोत्रं, युवा—इतीमा अर्थसंज्ञा उपलभ्यन्ते। शुक्लयजुः-प्रातिशाख्ये तु—नतिः, मात्रा, अणु, परमाणु, लोपः, संहितः, असंहितः, संहिता, नाम, आख्यातम्, उपसर्गः, निपात इत्येता अर्थसंज्ञा दृश्यन्ते।

३. ३. ६. **अतिकृत्रिमसंज्ञा**—पाणिनि-प्रातिशाख्यकृत्कात्यायनाभ्यां लाघवातिशयम् उद्दिश्य काश्चनैकाक्षरसंज्ञाः कृताः। ताश्चावयवार्थ-रहिताः संज्ञिमात्रप्रत्यायिकाः सन्तीत्यतिकृत्रिमनाम्नात्र संकीर्त्यन्ते। पाणिनिस्तावत्-घु, घः, टि, घिः, भम् इत्येता अतिकृत्रिमाः संज्ञाः कृतवान्। प्रातिशाख्यकारः कात्यायनोऽपि-सिम्, जित्, मुद्, धि इतीमा अतिकृत्रिमाः संज्ञा उपदिदेश।

## ३. ४. ०. संज्ञानुक्रमः—

अथातोऽग्रे वाजसनेयिप्रातिशाख्यीयाः संज्ञा आधृत्य पाणिनीयाभिः संज्ञाभिः सह तत्तुलना विधास्यते। अत्र च प्रतिसंज्ञं पूर्वपरकालिकप्रसिद्धिरपि प्रदर्शयिष्यते।

### ३. ४. १. उपधा—

अन्त्याद् वर्णात् पूर्वं उपधा (वा० प्रा० १।३५) इति सूत्रेण कात्यायन उपधासंज्ञां विदधाति। पाणिनिस्तु—अलोऽन्त्यात् पूर्वं उपधा (अ० १।१।६५) इति सूत्रेणैतां संज्ञां विदधौ। अन्वर्था खल्वेषा संज्ञा—उपधीयते समीपं स्थाप्यते या सा उपधा। ऋक्प्रातिशाख्यकारः समीपस्थं वर्णम् उपधाशब्देन व्यपदिशति[1]। अस्मिन्नेवार्थे ऋक्प्रातिशाख्य उपहितोपधीयमानशब्दावपि प्रयुज्येते।[2] यास्क एतां संज्ञाम् अन्त्यवर्णात् पूर्ववर्णार्थे प्रयुयुजे। तद्यथा—**उपधालोपो भवति जग्मतुः। उपधाविकारो भवति राजा**[3]—इति। अत इयं संज्ञा पूर्वाचार्याणाम् इति निश्चप्रचम्। ऐन्द्रसम्प्रदायेऽपीयं संज्ञा प्रसिद्धासीद् इति बर्नेलः प्रतिपादयति[4]। सामान्येन प्रयुक्तस्य (यथा ऋक्प्रातिशाख्ये) उपधाशब्दस्य विशेषेऽवधारणाय पाणिनिकात्यायनाभ्यां पारिभाषिकीयम् उपधासंज्ञा विहितेति व्हिटनेमहोदयः।[5] यस्तु वार्त्तिककारस्य संयोगोपधशब्दप्रयोगः,[6] स संयोगावयवस्योपधात्वाद् अवयवधर्मेण समुदायव्यपदेशत्वात् समाधीयते।[7]

### ३. ४. २. नतिः—

दन्त्यस्य मूर्द्धन्यापत्तिर्नतिः (वा० प्रा० १।४२) इति कात्यायनीयं सूत्रं नतिसंज्ञां विदधाति। पाणिनिना स्वशास्त्रे एषा संज्ञा नाश्रीयते। ततः पूर्ववर्त्ति ऋक्प्रातिशख्यम्-**एषा नतिर्दन्त्यमूर्धन्यभावः**—[8] इति नतिसंज्ञां निर्दिदेश। तस्मात् पूर्वाचार्यैः कृतैषा संज्ञा वाजसनेयिप्रातिशाख्यकृता कात्यायनेन गृह्यते। ऐन्द्रसम्प्रदायग्रन्थेषु नतिसंज्ञा व्यवह्रियते स्मेति बर्नेलः[4]। प्रातिशाख्यकारा नमधात मूर्धन्यीभवनार्थे प्रायुञ्जत। तद्यथा—**नमयन्ति दन्त्यं सन्तं मूर्धन्यं कुर्वन्तीति नामिन**[9]—

१. ऋ० प्रा० २।४१; ४।२६॥
२. ऋ० प्रा० २।३६; ४।४॥
३. निरु० २।१॥ ४. ओन दि ऐन्द्र स्कूल, पृ० १६–२०॥
५. अ० प्रा० १।६२॥
६. संयोगादिगुणविधाने संयोगोपधग्रहणं कृत्रर्थम्। महा० ७।४।१० वा० १॥ ७. पद०, न्यास १।१।६५॥
८. ऋ० प्रा० ५।६१॥ ९. ऋ० प्रा० १।६५ उ० भा०॥

इति, **पूर्वो नन्ता नतिषु नम्यम् उत्तरम्**[1]–इति च । वार्त्तिककारः कात्यायनो नत्यर्थे विनामशब्दं प्रयुङ्क्ते । यथा–**अग्रहणं चेन्नुड्विधिलादेशविनामेष्वृकारग्रहणम्**[2]–इति, **अनो नुकि विनामरुविधिप्रतिषेधः**[3]—इति च । भट्टोजिदीक्षितो विनामशब्दं विवृण्वन्नाह-**विनामो नतिः, तल्लक्षणं चोक्तं प्रातिशाख्ये–नतिर्दन्त्यस्य मूर्धन्यभावः**[4]–इति । अथर्ववेदप्रातिशाख्येऽपि विनामशब्दो नत्यर्थे व्यवह्रियते–**विनाभे च**[5]–इति । वृत्तिकारो भाष्यकारश्च नमधातुं मूर्धन्यीभावार्थे प्रयुयुजाते । तद्यथा–**को विनतेऽनुरोधः**[6]–इति । **विनतम् इति षत्वणत्वयोः प्रातिशाख्येषु-प्रसिद्धिः**[7]–इति विवृणुते हरदत्तः ।

### ३. ४. ३. सवर्णः—

समानस्थानकरणास्यप्रयत्नः सवर्णः (वा० प्रा० १।४३) इति सूत्रेण कात्यायनः सवर्णसंज्ञां विदधाति । पाणिनिस्तु–तुल्यास्यप्रयत्नं सवर्णम् (अ० १।१।६) इति सूत्रेणेमां संज्ञां विदधौ । प्रातिशाख्यान्तरेष्वेषा संज्ञा प्रयुज्यमानापि न परिभाष्यते[8] । प्राचीना संज्ञैषा प्रतीयते, ऐन्द्रसम्प्रदायेऽप्युपलभ्यमानत्वात्[9] । एतत्संज्ञाविधायकं पाणिनीयं सूत्रम् अस्फुटम् । अतएव महाभाष्यादिषु समासविकल्पाः प्रदर्शिताः । वाजसनेयिप्रातिशाख्यसूत्रं तु व्यक्ततरकम्,[10] परन्तु तत्र करणग्रहणम् अनावश्यकमेव प्रतीयते ।

### ३. ४. ४. सिम्—

सिमादितोऽष्टौ स्वराणाम् (वा० प्रा० १।४४) इति योगेन

---

१. ऋ० प्रा० १।६६ ।।

२. महा० प्रत्याहाराह्निके ।। ३. महा० ८।२।१६ वा० ।।

४. शब्दकौस्तुभम्, एओङ्ऐऔच् सूत्रे ।।

५. अ० प्रा० ४।३४ ।। ६. का०, महा० ८।३।११ ।।

७. पद० ८।३।६१ ।।

८. ऋ० प्रा० १।५५; तै० प्रा० १।३; अ० प्रा० ३।४२ ।।

९. ओन दि ऐन्द्र स्कूल, पृ० १९–२० ।।

१०. दैट आफ़ वाज० प्रा० (१।४३) इज़ मोर एक्सप्लिसिट (व्हिटने : अ० प्रा० १।२७) । वा० प्रा० इज़ वेरी एक्सप्लिसिट (के० सी० चटर्जी : टैक० टर्म्स, पृ० २४१) ।

प्रातिशाख्यकारः कात्यायनः अ आ इ ई उ ऊ ऋ ॠ इत्येतेषाम् अष्टानाम् स्वराणां सिम् इति संज्ञां विदधौ। अष्टमाध्यायस्थे वर्णसमाम्नाये त्रिमात्रस्वरेष्वप्युपदिष्टेषु तेऽत्र प्रयोजनाभावान्न गृह्यन्ते, यतः सिम् संज्ञा सवर्णदीर्घार्थम् आरभ्यते। पाणिनिस्तु अक् (अइउण्, ऋऌक्) इति प्रत्याहारेण सवर्णदीर्घादीनि कार्याणि साधयति। प्रातिशाख्यान्तरेष्वेतेषां स्वराणां समानाक्षरसंज्ञा क्रियते[1]। कातन्त्रकारः समानाक्षरसंज्ञां 'समानः'[2] इति रूपेण संक्षिपति, वाजसनेयिप्रातिशाख्यकारः पुनः समानसंज्ञां सिम् इति रूपेण ह्रसयति[3]–इति क्षितीशचन्द्रचटर्जी। वार्त्तिककारः कात्यायनः समानाक्षरसंज्ञां सस्मार। तद्यथा **वर्णैकदेशा वर्णग्रहणेन चेत् सन्ध्यक्षरे समानाक्षरप्रतिषेधः**[4]–इति।

### ३. ४. ५. सन्ध्यक्षरम्—

सन्ध्यक्षरं परम् (वा० प्रा० १।४५) इति सूत्रेण वाजसनेयिप्रातिशाख्ये ए ऐ ओ औ इत्येतेषां वर्णानां सन्ध्यक्षरसंज्ञा विधीयते। प्लुतवर्णास्तु पूर्ववत् परिवर्जिताः। पाणिनिरेतेषां वर्णानां एच् इति संज्ञां[5] विधाय कार्याणि निर्दिशति। अन्यत्रापि प्रातिशाख्येष्वेषा संज्ञा दृश्यते[6]। कात्यायनीयवार्त्तिकेषु सन्ध्यक्षरसंज्ञा स्मर्यते। तथा हि—**सन्ध्यक्षरेषु तपरोपदेशश्चेत् तपरोच्चारणम्**[7]–इति। ऐन्द्रसम्प्रदाये एषा संज्ञा प्रसिद्धा बभूवेति बर्नेलः सूचयति[8]।

### ३. ४. ६. भावी—

अकण्ठ्यो भावी (वा० प्रा० १।४६) इति सूत्रेण कात्यायनो

---

१. ऋ० प्रा० १।१; तै० प्रा० १।२; अ० प्रा० ३।४३ ॥

२. दश समानाः। कात० १।१।३ ॥

३. कातन्त्र शार्टेन्स समानाक्षर टु समान, वाज० प्रा० गोज़ ए स्टेप फ़र्दर, ट्रेक्स दि स एण्ड म आफ़ समान एण्ड फ़ार्म्स दि टैक्निकल टर्म सिम् (के० सी० चटर्जी : टैक० टर्म्स, पृ० १७९)।

४. महा० प्रत्याहाराह्निके वा० ॥ ५. अ० १।१।७१ ॥

६. ऋ० प्रा० १।२; अ० प्रा० १।४० ॥

७. महा० प्रत्याहाराह्निके ॥

८. ओन दि ऐन्द्र स्कूल, पृ० १९–२० ॥

भाविसंज्ञां विदधाति। अकाराकारौ वर्जयित्वा सर्वे स्वराः संज्ञिनः। नैषा संज्ञा प्रातिशाख्यान्तरे व्याकरणान्तरे वा प्रयुज्यते। अस्याः समानार्थिका नामिसंज्ञा प्रातिशाख्येषूपलभ्यते[1]। ऐन्द्रसम्प्रदायेऽपि नामिसंज्ञैव संकीर्त्यते। पाणिनीयतन्त्रे भाविसंज्ञानिमित्तका विधयः क्वचिद् इकारोकारनिर्देशेन[2], क्वचिद् इण् प्रत्याहारेण[3], क्वचिच्च इक् प्रत्याहारेण[4] निर्दिश्यन्ते। भाविशब्दव्युत्पत्तिविषये व्याख्याकाराबुवटानन्तौ न किमपि व्याजह्रतुः। मोनियर विलियम्सस्तु-अन्तःस्था भवतीति भावी[5]-इत्याह। वेबरः पुनः—यो भावयति स भावी[6]-इत्यवोचत्।

### ३. ४. ७. व्यञ्जनम्—

व्यञ्जनं कादि (वा० प्रा० १।४७) इति व्यञ्जनसंज्ञाविधायकं वाजसनेयिप्रातिशाख्यसूत्रम्। अथ व्यञ्जनानि (वा० प्रा० ८।१४) इति सूत्रेणापि कात्यायनो व्यञ्जनसंज्ञां विदधाति। तत्र स्वराः प्रथमम् (वा० प्रा० ८।२) इति सूत्रेण स्वरसंज्ञाया विहितत्वाच् छास्त्रकृद् यथा पुनस्ताम् आख्याधिकारे न विदधौ, तथैव तेन व्यञ्जनसंज्ञापि पुनर्न विधातव्यासीत्। पुनर्विधानेन वेबरोद्भाविताष्टमाध्यायस्य प्रक्षिप्तत्व-कल्पनोपोद्वल्यते।[7] पाणिनिना स्वशास्त्रे व्यञ्जनसंज्ञा न व्यधायि, तत्स्थाने तु हल् इति प्रत्याहारेण कार्याणि क्रियन्ते। पाणिनीयतन्त्रस्य व्याख्यातारो वृत्ति-वार्त्तिक-भाष्यकारादयस्तु व्यञ्जनसंज्ञां यथेष्टं प्रयुञ्जते। पतञ्जलिः खलु-**अन्वग् भवति व्यञ्जनमिति**[8]-इत्यन्वर्थं निर्वचनं[9] प्रदर्श्य—**व्यञ्जनानि पुनर्नट-**

---

१. ऋ० प्रा० १।६५; अ० प्रा० २।२६; तै० प्रा० नास्ति।

२. वा० प्रा० ३।२२॥ ३. वा० प्रा० ३।५६॥

४. वा० प्रा० ४।३३, ४५॥

५. प्राबेब्ली एज् लायब्ल टु बिकम दि करेस्पाण्डिंग सेमिवावेल (के० सी० चटर्जी : टैक० टर्म्स, पृ० १९७ फुटनोट)॥

६. यो भावयति, अर्थाद् नमयति, दैट व्हिच काजेज़ भात्र आर नति, (तत्रैव)।

७. द्र० वर्णसमाम्नायविमर्शः।

८. महा० १।२।२९, ३०॥

९. तु०-परेण स्वरेण व्यज्यत इति व्यञ्जनम् (तै० प्रा० १।६ वैदिकाभरणे)।

**भार्यावद्** भवन्ति एवं **व्यञ्जनान्यपि यस्य यस्याचः कार्यम् उच्यते तं तं भजन्ते**[1]—इति स्वरूपमपि प्रकटीचकार। ऐन्द्रसम्प्रदायेऽपि व्यञ्जनसंज्ञा प्रसिद्धा[2], तथा च कातन्त्रसूत्रम्—**कादीनि व्यञ्जनानि**—[3] इति। प्रातिशाख्यान्तरेषु शिक्षासु चेयं संज्ञा समुपलभ्यते।[4] ऐतरेयारण्यकादिषु समुपलभ्यमानत्वाद् व्यञ्जनसंज्ञा ह्यतिप्राचीना।[5]

### ३. ४. ८. संयोगः—

अनन्तरं संयोगः (वा० प्रा० १।४८) इति कात्यायनीयं संयोगसंज्ञाविधायकं सूत्रम्। अत्र हि पूर्वसूत्राद् व्यञ्जनम् इति पदम् अनुवर्त्तते। पाणिनिस्तु—हलोऽनन्तराः संयोगः (अ० १।१।७) इति योगेन संयोगसंज्ञां विदधाति। प्रातिशाख्यान्तरेष्वपीयं संज्ञा समुपलभ्यते।[6] ऐन्द्रसम्प्रदायेऽपि प्रसिद्धत्वात्[7] प्राचीनेयं संज्ञा। जातावेकवचनवहुवचनविकल्पत्वात्[8] प्रातिशाख्यसूत्र एकवचनं, पाणिनीयसूत्रे तु वहुवचनं प्रयुज्यते।

पाणिनिना संयोगशब्दः शास्त्रीयसंज्ञातोऽन्येऽर्थेऽपि प्रयुक्तः। तद्यथा—तस्य निमित्तं संयोगोत्पातौ (अ० ५।१।३८) इति। तत्र—**उभयगतिरिह भवति**[9]—इति महाभाष्यकारस्य समाधिः। पावतेमहोदयस्य त्वत्र परिहारः—प्रोक्तोऽयं ग्रन्थोऽष्टाध्यायी नाम (का० ४।३।१००)। सर्ववेदपारिषदं हीदं शास्त्रम्। तत्र नैकः पन्थाः शक्य आस्थातुम् (महा० २।१।५८) न शक्यम् एकां संज्ञाम् आस्थातुम्। अनेकाचार्यवचनसंग्रहात् संज्ञापरिभाषासु नैकरूपता[10]—इति।

---

१. महा० ६।१।२॥
२. ओन दि ऐन्द्र स्कूल, पृ० १९–२०॥
३. कात० १।१।९॥
४. ऋ० प्रा० १।६; तै० प्रा० १।६; अ० प्रा० १।४३॥
५. ऐतरेयारण्यक २।२।४॥
६. ऋ० प्रा० १।३७; अ० प्रा० १।९८॥
७. ओन दि ऐन्द्र स्कूल, पृ० १९–२०॥
८. अ० १।२।५८॥
९. महा० १।१।२२॥
१०. स्ट्रक्चर आफ़ अष्टाध्यायी, पृ० १०९॥

### ३. ४. ९. जित्—

द्वौ द्वौ प्रथमौ जित् । ऊष्माणश्च ह्वर्जम् (वा० प्रा० १।५०,५१) इति सूत्रयुगलेन जित्संज्ञा विधीयते वाजसनेयिप्रातिशाख्ये । एवं च वर्गाणां प्रथम-द्वितीयौ वर्णौ शषसाश्च प्रत्येकं जित् संज्ञया व्यवह्रियन्ते कात्यायनेन । पाणिनीयतन्त्रे त्वेतेषां वर्णानां 'खर्' संज्ञा विधीयते ।[1] इयं संज्ञा वाजसनेयिप्रातिशाख्याद् अन्यत्र नोपलभ्यते । जित् पर्याय-वचनस्यैव[2]–इति वार्त्तिककारस्य शब्दसाम्यं स्मारयतीयं संज्ञा ।

### ३. ४. १०. मुद्—

मुच्च (वा० प्रा० १।५२) इति सूत्रेण शषसवर्णानां मुत्-संज्ञा विधीयते कात्यायनीयतन्त्रे । पाणिनिस्तु शषसवर्णानां शर् इति संज्ञां विदधाति । मुत्-संज्ञाप्यन्यत्र नोपलभ्यते ।

### ३. ४. ११. धि—

धि शेषाः (वा० प्रा० १।५३) इति सूत्रेण वाजसनेयिप्रातिशाख्ये शेषाणां वर्णानां धिसंज्ञा प्रोक्ता । अत्र—व्यञ्जनं कादि (वा० प्रा० १।४७) इत्यतो व्यञ्जनशब्दानुवर्त्तनाद्–रेफं स्वरधौ (वा० प्रा० ४।३६) इति निर्देशाद् वा 'शेषे' स्वराणां ग्रहणं न क्रियते । पाणिनीयैरेतेषां वर्गतृतीयचतुर्थपञ्चमवर्णानां यरलवहकाराणां च हश् इति संज्ञा विधीयते । वस्तुतस्तु धिसंज्ञाश्रिता विधयः पाणिनीयप्रक्रियायां न साक्षात् हश् संज्ञाम् आश्रयन्ति । इयमपि संज्ञा नान्यत्रोपलभ्यते ।

### ३. ४. १२. सोष्मा—

द्वितीयचतुर्थाः सोष्माणः (वा० प्रा० १।५४) इति सूत्रेण कात्यायनः सोष्मसंज्ञां विदधाति । संज्ञायां विहितायामपि शास्त्रेऽस्याः संज्ञाया उपयोगो न दृश्यते । अत एव व्याख्याकृद्भ्याम् एषा संज्ञा पूर्वाचार्यकृता मङ्गलार्था कल्प्यते[3] । वस्तुतस्तु नेदं संज्ञासूत्रम् । अत एव प्रावोचद् उवटः—यद् वा नैव संज्ञा । किन्तर्हि ? वर्णस्वरूपम्

---

१. अ० १।१।७१ ॥

२. महा० १।१।६८ वा० ७ ॥

३. वा० प्रा० १।५४ उ० भा०, अ० भा० ॥

**अनेन सूत्रेण कथ्यते-ऊष्मा वायुः, ऊष्मणा सह वर्त्तन्ते इति सोष्माणः। अतिशयार्थं वचनं, महाप्राणा इत्यर्थः**[1]—इति। प्रातिशाख्यान्तरेष्वपि गुणनिर्देशपरैषा संज्ञा द्वितीयचतुर्थवर्णानां विहिता दृश्यते[2]। आपिशल–पाणिनीयशिक्षयोरपि—**शादय ऊष्माणः**[3]—इत्युच्यते। ऐन्द्र-सम्प्रदायप्रसिद्धासु संज्ञास्वस्या उल्लेखो नोपलभ्यते। यद्यपि पाणिनिना सोष्मसंज्ञा स्वकीयाष्टाध्याय्यां नोदलेखि, तथापि पाणिनीय-तन्त्रम् अनुसरद्भिराचार्यैः सोष्मशब्दो महाप्राणशब्दार्थे प्रायुज्यतेति काशिका–महाभाष्याभ्याम् अवसीयते[4]।

### ३. ४. १३. ह्रस्वः—

अमात्रस्वरो ह्रस्वः (वा० प्रा० १।५५) इति सूत्रं कात्यायनीय-प्रातिशाख्ये ह्रस्वसंज्ञां विदधाति। पाणिनिस्तु–ऊकालोऽज्झ्रस्वदीर्घ-प्लुतः (अ० १।२।२७) इति सूत्रेण ह्रस्वसंज्ञां विदधौ। उभयत्रापि–ऊकाल–अमात्र–इति निर्देशेन कियत्कालपरिमाणं गृह्यत इति न स्पष्टम्। प्रातिशाख्यान्तरेषु सर्वत्रैषा संज्ञा समुपलभ्यते।[5] ऐन्द्रसम्प्र-दाये चाप्येषा प्रसिद्धा बभूव[6]। प्रातिशाख्यकारो लघुगुरुसंज्ञे न विदधौ, प्रयोजनाभावात्।

### ३. ४. १४. दीर्घः—

द्विस्तावान् दीर्घः (वा० प्रा० १।५७) इति सूत्रेण वाजसनेयि-प्रातिशाख्ये दीर्घसंज्ञाविधानम्,अष्टाध्याय्यां तु पूर्वोक्तेनैव। अन्यत्रापि प्रातिशाख्येष्वेषा संज्ञा पूर्ववद् उपलभ्यते।[7] यत्तु व्यञ्जनद्विरुक्ति-प्रसङ्गे–संयोगपूर्वव्यञ्जनान्तावसानगताः स्वरा द्विमात्राः (वा० प्रा० ४।१०७) इति संयोगात् पूर्वस्य, व्यञ्जनान्तस्य, अवसानगतस्य च

---

१. वा० प्रा० १।५४ उ० भा० ॥
२. ऋ० प्रा० १।१३; ऋ० त० १६; अ० प्रा० १।१० ॥
३. सू० पा० शि०, पृ० १४ ॥
४. का०, महा० १।१।५० ॥
५. ऋ० प्रा० १।१७; तै० प्रा० १।३३; अ० प्रा० १।५९ ॥
६. ओन दि ऐन्द्र स्कूल, पृ० १९-२० ॥
७. ऋ० प्रा० १।१८; तै० प्रा० १।३५; अ० प्रा० १।६१ ॥

स्वरस्य द्विमात्रत्वं प्रतिपाद्यते प्रातिशाख्यकारेण, तन्न दीर्घसंज्ञा-प्रयोजकम्, अन्यथा दीर्घत्वमेव विधीयेत। वस्तुतस्तु गुरुत्वस्य प्रतिपादकं सदपि तत् सूत्रं भ्रान्तिम् एव जनयति।[1]

३. ४. १९. प्लुतः—

प्लुतस्त्रिः (वा० प्रा० १।५८) इति सूत्रेण प्लुतसंज्ञा विधीयते वाजसनेयिप्रातिशाख्ये। अष्टाध्याय्यां तु पूर्वनिर्दिष्टेनैव सूत्रेण प्लुत-संज्ञा विहिता। संज्ञेयं प्रातिशाख्यान्तरेष्वपि समुपलभ्यते।[2] सामान्येन सर्वैरेव त्रिमात्रः प्लुतः स्वीक्रियते। परन्तु पतञ्जलिः खलु—**इष्यत एव चतुर्मात्रः प्लुतः**[3]—इति व्याहरन् चतुर्मात्रं प्लुतमप्यूरीकरोति।

३. ४. १६. मात्रा—

मात्रा च (वा० प्रा० १।५६) इति ह्रस्वपर्य्यायो मात्राशब्दः कात्यायनेन प्रतिपादितः। वर्णकालपरिमाणार्थे मात्राशब्दोऽति-प्राचीनः। ऐन्द्रसम्प्रदायेऽपीयं संज्ञा प्रथिता बभूव।[4] पाणिनिना नैषा संज्ञा समाश्रिता। यद्यपि प्रातिशाख्यशिक्षादिषु शास्त्रेष्वेषा संज्ञा समाश्रीयते,[5] तथापि तत्रास्या इयत्ता न निर्धारिता। ऋक्प्रातिशाख्य-कारः पक्षिरवेण मात्राकालेयत्तां निर्धारयितुं प्रयस्यति—

**चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत्।**
**शिखी त्रिमात्रो विज्ञेय एष मात्रा-परिग्रहः॥**[6] इति॥

पाणिनीयतन्त्रस्य प्रामाणिकाचार्यैर्मात्राशब्दो वर्णकालनिर्देशार्थः भृशं प्रयुज्यते। तद्यथा—**भूयसी मात्रेवर्णोवर्णयोः**[7]—इति, **इह व्याकरणे यत्राल्पीयान् स्वरव्यवहारः, स मात्रया भवति**[8]—इति च।

---

१. अ० प्रा० १।५१ द्र०—व्हिटनेमहोदयस्य टिप्पणी॥
२. ऋ० प्रा० १।३०; तै० प्रा० १।३६; अ० प्रा० १।६२॥
३. महा० ८।२।१०६॥
४. ओन दि ऐन्द्र स्कूल, पृ० १९-२०॥
५. ऋ० प्रा० १।१७; तै० प्रा० २४।६; अ० प्रा० १।५९॥
६. ऋ० प्रा० १३।५०॥
७. महा० १।१।४७॥
८. महा० ८।१।१॥

### ३. ४. १७. अणु—

तदर्धम् अणु (वा० प्रा० १।६०) इति सूत्रेण वाजसनेयिप्रातिशाख्येऽणुसंज्ञा विधीयते । तत्र—व्यञ्जनम् अर्धमात्रा (वा० प्रा० १।५९)इति सूत्राद् अर्धमात्रेत्यनुवर्त्तते । ततश्चार्द्धमात्रार्द्धम् अणुसंज्ञकं भवतीति सूत्रार्थः सम्पद्यते । प्रातिशाख्यान्तरेष्वपीयं संज्ञोपलभ्यते ।[1] ऋक्तन्त्रे त्वर्धमात्राणुसंज्ञयाभिधीयते ।[2] व्याकरणेऽस्याः प्रयोजनाभावाद् विधानं न दृश्यते ।

### ३. ४. १८. परमाणु—

परमाण्वर्धाणुमात्रा (वा० प्रा० १।६१) इति सूत्रेण कात्यायनोऽण्वर्धमात्रायाः परमाणुसंज्ञां शास्ति । व्याकरणे प्रयोजनाभावात् परमाणुसंज्ञा न विधीयते । ऋक्तन्त्रे त्वनन्तरोच्चरितवर्णद्वयमध्यवर्तिकालः परमाणुसंज्ञयाभिधीयते ।[3] कात्यायनः परमाणुसंज्ञां विधायापि स्वकीये प्रातिशाख्ये तां नोपयुयुजे । अस्या उपयोगः स्वरभक्तिपरिमाणनिरूपणे कृतः स्यात् प्राचार्यैः ।[4]

### ३. ४. १९. अनुनासिकः—

मुखनासिकाकरणोऽनुनासिकः (वा० प्रा० १।७५) इति योगेन कात्यायनोऽनुनासिकसंज्ञां विदधाति । पाणिनिस्तु—मुखनासिकावचनोऽनुनासिकः (अ० १।१।८) इति सूत्रेणेमां संज्ञां व्यधात् । अत्र वचनकरणशब्दौ समानार्थकौ, तथा च प्रावोचद् अनन्तः—**मुखसहितया नासिकया क्रियत उच्चार्यत इति मुखनासिकाकरणः**[5]—इति । पूर्वाचार्याणाम् इयं संज्ञा, अत एवास्या व्यवहारः सर्वप्रातिशाख्येष्वैन्द्रसम्प्रदाये चोपलभ्यते[6] । अनुनासिकाश्चोत्तमाः (वा० प्रा० १।८९)

---

१. तै० प्रा० २१।३; अ० प्रा० ३।६५ ॥

२. ऋ० त० १।४१ ॥

३. वर्णान्तरं परमाणु । ऋ० त० १।३४ ॥

४. तु०—मात्रातुर्यस्य पृथगभावात् । प्रदीप ८।४।१ ॥

५. वा० प्रा० १।७५ अ० भा० ॥

६. ऋ० प्रा० १।३६; तै० प्रा० २।३०; अ० प्रा० १।११; ऋ० त० १।२; ओन दि ऐन्द्र स्कूल, पृ० १९–२० ॥

इति सूत्रं तु वर्णस्वरूपबोधनपरं, न तु संज्ञाविधायकम् । महती चेयं संज्ञान्वर्था–अनु पश्चाद् मुखस्य नासिका व्याप्रियते यस्मिन्,नासिकाया वा पश्चाद् मुखं व्याप्रियते यस्मिन्,सोऽनुनासिकः[1] । नासिकाव्यापारस्य भागविषयत्वात् प्रासादवासिन्यायस्य[2] नात्रावतार इति पाणिनिना सूचितत्वाद् महाभाष्यकृतो मुखग्रहणप्रत्याख्यानं निराक्रियते[3] ।

### ३. ४. २०. प्रगृह्यम्—

प्रगृह्यम् (वा० प्रा० १।९२) इत्यधिकृत्य कात्यायनः प्रगृह्यसंज्ञां विदधाति । पाणिनिरन्ये च प्रातिशाख्यकारा एतां संज्ञां विदधति[4] । तैत्तिरीयप्रातिशाख्ये प्रगृह्यस्थाने प्रग्रहसंज्ञा विधीयते । निरुक्तकारस्तु प्रपूर्वकं ग्रहधातुं सन्धानार्थे प्रयुयुजे । तद्यथा—**प्रगृह्य पाणी देवान् पूजयन्ति**[5]–इति । ऐन्द्रसम्प्रदाये एषा संज्ञा न प्रसिद्धा, अत एव कातन्त्रादिषु प्रगृह्यसंज्ञाविधानं विनैव प्रकृतिभावः प्रदर्शितः । वाजसनेयिप्रातिशाख्यीयानां सूत्राणां पाणिनीयैः सह तुलना त्वत्र प्रदर्श्यंते—

(१) एकारेकारोकारा द्विवचनान्ताः (वा० प्रा० १।९३) इति कात्यायनः । ईदूदेद् द्विवचनं प्रगृह्यम् (अ० १।१।११) इति पाणिनिः । पाणिनिः स्पष्टाववोधार्थम् उच्चारणसौकर्यार्थं चेकारादीन् तपरान् करोति । प्रातिशाख्यकारः कात्यायनस्तु तदर्थमेव क्रमभङ्गेन निर्दिशति ।

(२) ओकारश्च पदान्तेऽनवग्रहः (वा० प्रा० १।९४) इति वाजसनेयिप्रातिशाख्ये । पाणिनीयाष्टके तु–ओत्, सम्बुद्धौ शाकल्यस्येतावनार्षे (अ० १।१।१५,१६) इति प्रगृह्यसंज्ञा विधीयते । प्रातिशाख्ये ओकारान्त–निपातस्य अथो (मा० सं० ३।४३) इत्यादेरुदाहरणं न प्रदर्श्यंते । पदपाठकारस्तु खल्वत्राप्येकपदत्वं मन्यमानः सन्ध्यभावं प्रदर्शयति ।

---

१. पद०, न्यास १।१।८ ॥ तु०–कात० १।१।३ त्रिविक्रमः; डि० सं० ग्रा०, पृ० २३ ॥

२. महा० १।१।८ ॥

३. पद०, न्यास १।१।८ ॥

४. ऋ० प्रा० १।६८–७५; अ० प्रा० १।७३–८१; अ० १।१।११–१८ ॥

५. निरु० २।२६ ॥

(३) उकारोऽपृक्तः (वा० प्रा० १।९५) इति कात्यायनः। उञ ऊँ (अ० १।१।१७) इति पाणिनिः।

(४) चमू अस्मे त्वे (वा० प्रा० १।९६) इति प्रातिशाख्ये। अष्टाध्यायीम् अनुसृत्य तु चमू (मा० सं० ८।३९) इत्यत्र–ईदूतौ च सप्तम्यर्थे (अ० १।१।१८) इति, अस्मे त्वे इत्यत्र–शे (अ० १।१।१३) इति प्रगृह्यसंज्ञा सिध्यति।

(५) मे उदात्तम् (वा० प्रा० १।९७) इति प्रातिशाख्यकारः। पाणिनीयमतेन तु–शे (अ० १।१।१३) इति सूत्रेण प्रगृह्यसंज्ञा। यस्तु–तेमयावेकवचनस्य (अ० ८।१।२२) इति मेपदादेशः, सोऽनुदात्तं सर्वमपादादौ (अ० ८।१।१८) इत्यनुदात्तः।

(६) अमी पदम् (वा० प्रा० १।९८) इति कात्यायनः। पाणिनिस्तु अदसो मात् (अ० १।१।१२) इति लक्षणेन प्रगृह्यसंज्ञां शास्ति।

### ३. ४. २१. अक्षरम्—

स्वरोऽक्षरम् (वा० प्रा० १।९९) इत्यादिभिः सूत्रैः कात्यायनोऽक्षरसंज्ञां शशास। पुनश्चाष्टमिके–तत्समुदायोऽक्षरम्, वर्णो वा (वा० प्रा० ८।५५,५६) इति वर्णसमुदायस्य वर्णमात्रस्य चाक्षरसंज्ञा विधीयते। पाणिनिना नैषा संज्ञा समाश्रीयते। प्रातिशाख्येषु व्याकरणग्रन्थेषु चास्याः संज्ञायाः प्रचुरः प्रयोगो दृश्यते[1]। ऐन्द्रसम्प्रदायेऽस्याः संज्ञायाः स्थाने वर्णसंज्ञा प्रयुज्यते स्मेति भट्टारहरिचन्द्रः[2]। अक्षरशब्दः पुरा ह्यक्षयार्थे प्रयुज्यमानः[3], कालक्रमेण वागर्थे[4], ततोऽज्झल्समुदाये (सिलेबल),[5] ततश्च वर्णार्थेऽपि[6] प्रसिद्धिमवाप्नोत्। पाणिनीयैर्वैयाकरणैरप्यक्षरशब्दो वर्णार्थे प्रयुज्यते। तथा च श्लोकवार्त्तिककारः प्राह—

**अक्षरं नक्षरं विद्याद् अश्नोतेर्वा सरोऽक्षरम्।**
**वर्णं वाहुः पूर्वसूत्रे किमर्थम् उपदिश्यते॥**[7] इति॥

---

१. ऋ० प्रा० १।१९; तै० प्रा० २४।२; अ० प्रा० १।९३॥

२. के० सी० चटर्जी : टैक० टर्म्स०, पृ० १७७॥

३. ऋ० १।१६४।३९॥

४. निघ० १।११॥

५. ऐतरेयारण्यक २।२।२॥

६. ऐतरेयारण्यक ३।२।३॥

७. महा० प्रत्याहाराह्निके॥

अक्षरविभागविषयिका विभावना वर्णसमाम्नायविमर्शे कृतेत्यत्र न प्रतायते ।

३. ४. २२. उदात्तः

३. ४. २३. अनुदात्तः

३. ४. २४. (०). स्वरितः—

स्वरसम्बन्धिन्य उदात्तानुदात्तस्वरितसंज्ञा निरुक्त-प्रातिशाख्य-शिक्षादिशास्त्रेषु प्रसिद्धाः, पाणिन्यादिवैयाकरणैरपि स्वस्वतन्त्रेषु पूर्ववद् एव प्रयुज्यन्ते । इमाः संज्ञाः स्वरविमर्शे विवेक्ष्यन्ते ।

३. ४. २४. (१). जात्यः

३. ४. २४. (२). अभिनिहितः

३. ४. २४. (३). क्षैप्रः

३. ४. २४. (४). प्रश्लिष्टः

३. ४. २४. (५). तैरोव्यञ्जनः

३. ४. २४. (६). तैरोविरामः

३. ४. २४. (७). पादवृत्त

३. ४. २४. (८). ताथाभाव्यः

इमेऽष्टौ स्वरितभेदाः स्वरविमर्शे विवेक्ष्यन्ते ।

३. ४. २५. लोपः—

वर्णस्यादर्शनं लोपः (वा० प्रा० १।१४१) इति सूत्रेण प्रातिशाख्यकारः कात्यायनो लोपसंज्ञाम् आरभते । पाणिनिस्तु—अदर्शनं लोपः (अ० १।१।६०) इति योगेन लोपसंज्ञां विदधौ । लोपसंज्ञा निरुक्ते बहुशः प्रयुज्यते । तथा हि—**अथाप्युपधालोपः**···**वर्णलोपः**··· **द्विवर्णलोपः**[1]—इति । प्रातिशाख्यान्तरेष्वपीयं संज्ञा श्रूयते ।[2] ऐन्द्र-

१. निरु० २।१ ॥

२. तै० प्रा० १।५८; ऋ० प्रा० ४।८०; अ० प्रा० १।६७ ॥

सम्प्रदायेऽप्येषा प्रसिद्धा बभूव ।[1] 'लुप्' धातोः प्रयोगः सामान्यतो वर्णाद्यदर्शनार्थे शास्त्रेषूपलभ्यते ।[2] अत एवार्थस्येयं संज्ञा, न शब्दस्येति पाणिनीयैर्व्याख्याकृद्भिर्निर्दिश्यते ।[3] वार्त्तिककारः कात्यायनः—**प्रसक्तस्यादर्शनं लोपः**[4]—इति न्यासं स्फुटतरकं मेने । पाणिनिः प्रत्ययादर्शनस्य लुक्श्लुलुपः संज्ञाः शास्ति । वाजसनेयिप्रातिशाख्यकारस्तु खल्वदर्शनसामान्ये लुक्शब्दं प्रयुङ्क्ते–एदोद्भ्यामकारो लुगभिनिहितः (वा० प्रा० १।११४; ३।१३) इति ।

### ३. ४. २६. आम्रेडितम्—

द्विरुक्तम् आम्रेडितं पदम् (वा० प्रा० १।१४६) इति सूत्रेण वाजसनेयिप्रातिशाख्य आम्रेडितसंज्ञा विधीयते । पाणिनिस्तु—तस्य परमाम्रेडितम् (अ० ८।१।२) इति सूत्रेणाम्रेडितसंज्ञाम् आरेभे । तत्र संज्ञासाम्येऽपि संज्ञिभेदो लक्ष्यते । पूर्वाचार्यकृता संज्ञेयम्, अत एवाह हरदत्तः—**नन्वाम्रेडितशब्दो निघण्टुषु प्रसिद्धः—आम्रेडितं द्विस्त्रिरुक्तम्**[5]–**इति । सत्यमर्थे प्रसिद्धः, इह तु शब्दे परिभाष्यते । महासंज्ञाकरणं पूर्वाचार्यानुरोधेन**[6]–इति । अथर्वप्रातिशाख्येऽपि[7] आम्रेडितशब्दः प्रयुज्यते, न तु परिभाष्यते । आम्रेडितसंज्ञाविधाने पाणिनिः पदग्रहणं न करोति, वार्त्तिककारस्तु—**न वा पदाधिकारात्**[8]–इति पदग्रहणं संकेतयति । पाणिनिर्द्विरुक्ते परांशस्याम्रेडितसंज्ञां विदधाति । वार्त्तिककारस्तु प्रातिशाख्यकारकात्यायन इवोभयांशस्याम्रेडितसंज्ञां मन्यमानः—आम्रेडितं भर्त्सने (अ० ८।२।९५) इत्यत्र—**भर्त्सने पर्यायेण**[9]–इति पर्यायेणोभयभागयोः प्लुतत्वं विधत्ते । तदेव विवृण्वन्नाह वृत्तिकारः—**आम्रेडितग्रहणं द्विरुक्तोपलक्षणार्थं वर्णयन्ति**[10]–इति । वृत्तिमपि हरदत्तः स्पष्टयति–**द्विरुक्तसमुदाये भागद्वयोपलक्षणार्थम् इत्यर्थः**[11]–

---

१. ओन दि ऐन्द्र स्कूल, पृ० १९–२० ॥
२. निरु० ६।२२; ऋ० प्रा० ४।२८; अ० प्रा० ४।३५ ॥
३. का० १।१।६० ॥
४. महा० १।१।६० वा० ॥
५. अ० को० १।६।१२ ॥
६. पद० ८।१।२ ॥
७. अ० प्रा० ४।४० ॥
८. महा० ८।१।१ वा० ॥
९. महा० ८।२।९५ वा० १ ॥
१०. का० ८।२।९५ ॥
११. पद० ८।२।९५ ॥

इति। प्रातिशाख्यकार आम्रेडितसंज्ञकम् एकमेव पदम् अभिमन्यते, अत एव तेनाम्रेडितस्यावग्रहः शिष्यते[1]।

### ३. ४. २७. स्थितोपस्थितम्—

संहितं स्थितोपस्थितम् (वा० प्रा० १।१४७) इति सूत्रेण कात्यायनोऽवग्रहादिकार्यप्रदर्शनाय द्विरुक्तस्येतिकरणव्यवहितस्य पदस्य स्थितोपस्थितसंज्ञां विधत्ते। अवग्रहस्य स्वविषयबाह्यत्वाद् व्याकरणग्रन्थेष्वस्याः प्रयोगो न दृश्यते। ऋक्प्रातिशाख्ये स्थित–उपस्थित—स्थितोपस्थित इत्येतासां संज्ञानां स्फुटं विवरणम् उपलभ्यते। तथा हि—

**उपस्थितं सेतिकारं केवलं तु पदं स्थितम्।**
**तत् स्थितोपस्थितं नाम यत्रोभे आह संहिते॥**[2] इति॥

पाणिनिराचार्यः—अप्लुतवद् उपस्थिते (अ० ६।१।१२९) इत्यत्रोपस्थितशब्दं प्रयुयुजे। तत्र—**उपस्थितम् अनार्ष इतिकरणः**[3]—इति पतञ्जलिः। **उपस्थितं नामानार्ष इतिकरणः, समुदायाद् अवच्छिद्य पदं येन स्वरूपेऽवस्थाप्यते**[4]—इति वृत्तिकारः।

### ३. ४. २८. अपृक्तम्—

एकवर्णः पदम् अपृक्तम् (वा० प्रा० १।१५१) इति सूत्रेण कात्यायनीयप्रातिशाख्येऽपृक्तसंज्ञा विधीयते। पाणिनिः खल्वपि—अपृक्त एकाल्प्रत्ययः (अ० १।२।४१) इति योगेनापृक्तसंज्ञाम् अनुशास्ति। इयं संज्ञा सर्वैः प्रातिशाख्यकारैः प्रयुक्ता।[5] तत्र तैत्तिरीयप्रातिशाख्ये—एकवर्णः पदम् अपृक्तः[6]—इति पुंलिङ्गोऽपृक्तशब्दः पाणिनीयतन्त्र इवोपलभ्यते। ऋक्प्रातिशाख्यादिषु प्रयुक्ताम् इमां संज्ञां पाणिनिः स्वप्रयोजनानुसारं संस्कृत्य स्वशास्त्रे प्रोक्तवान् इति प्रतिभाति। यत्तु

---

१. वा० प्रा० ५।१८॥
२. ऋ० प्रा० १०।१२–१४॥
३. महा० ६।१।१२९॥ ४. का० ६।१।१२९॥
५. ऋ० प्रा० ११।३; तै० प्रा० १।५४; अ० प्रा० १।७२॥
६. तै० प्रा० १।५४॥

पावते–महोदयः पाणिनीयसूत्रयोर्लिङ्गवैषम्यं [1]प्रदर्श्य, अन्यतरस्या आचार्यान्तरकृतित्वं प्रतिपिपादयिषति,[2] तन्न, प्रत्याहाराणां पुन्नपुंसकयोः प्रयोगदर्शनात् । तथा च—हलोऽनन्तराः संयोगः (अ० १।१।७) इत्यत्र पुंस्त्वम्, हलन्त्यम् (अ० १।३।३) इत्यत्र नपुंसकत्वम् । पाणिनीयतन्त्र इयं संज्ञा त्वसहायवर्णस्य प्रत्ययस्य विधीयते, प्रातिशाख्ये पुनः पदस्यैकवर्णस्येति संज्ञिभेदः ।

### ३. ४. २९. संहितः—

पूर्वेणोत्तरः संहितः (वा० प्रा० १।१५५) इति सूत्रेण कात्यायनीयप्रातिशाख्ये संहितसंज्ञा विहिता । क्रमसंहितायाम् अस्या उपयोगाद् एषा संज्ञा वैयाकरणैर्नाश्रिता । ऋक्प्रातिशाख्ये त्वेषा प्रयुज्यते[3] ।

### ३. ४. ३०. असंहितः—

पदविच्छेदोऽसंहितः (वा० प्रा० १।१५६) इति योगेन वाजसनेयिप्रातिशाख्येऽसंहितसंज्ञा विधीयते । एषापि क्रमविषयिकेति वैयाकरणैर्नाश्रीयते । ऋक्प्रातिशाख्ये तु प्रयुज्यते ।[4] **पदे पदे विच्छेदो विलम्बेनोच्चारणम् असंहितः । न संहिता यस्मिन् स पदपाठः**[5]—इति प्रातिशाख्यप्रदीपकारः ।

### ३. ४. ३१. संहिता—

वर्णानाम् एकप्राणयोगः संहिता (वा० प्रा० १।१५८) इति कात्यायनः संहितासंज्ञां व्यधित । पाणिनिः खल्वपि—परः सन्निकर्षः संहिता (अ० १।४।१०९) इति सूत्रेण संहितासंज्ञां विदधे । संहिताशब्दः प्राचीनवाङ्मये संहितपाठार्थे प्रसिद्ध आसीत् । तथा च—

---

१. अपृक्त एकाल्प्रत्ययः (अ० १।२।४१), हल्ङ्या···अपृक्तं हल् (अ० ६।१।६८) ।

२. स्ट्रक्चर आफ़ अष्टाध्यायी, पृ० ५८ ॥

३. ऋ० प्रा० १०।१४ ॥

४. ऋ० प्रा० १०।१७ ॥

५. प्रातिशाख्यप्रदीपशिक्षा, २३८; शि० सं० पृ० २७१ ॥

**संहिता पद-प्रकृतिः**[१]–इति शौनकस्य, **पदप्रकृतिः संहिता**[२]–इति यास्कस्य च वचने सङ्गच्छेते। कालव्यवधानरहिते पौर्वापर्ये पारिभाषिकार्थेऽयं शब्दः प्रथमतो यास्केन प्रयुक्तः—परः सन्निकर्षः संहिता[२]–इति। प्रातिशाख्येषु पाणिनितोऽर्वाचीनव्याकरणग्रन्थेषु च वर्णपौर्वापर्यनिमित्तकविकारार्थेऽयं शब्दः सन्धिशब्दपर्यायरूपेण प्रचलितो बभूव[३]। ऐन्द्रसम्प्रदाये तु सन्धिशब्दोऽपि प्रसिद्ध आसीत्।[४] ऐतरेयारण्यके संहिताशब्दस्त्रिधा परिभाष्यते—**येन सन्धिं विवर्त्तयति, येन स्वरास्वरं विजानाति, येन मात्रामात्रां विभजते स संहिता**[५]–इति। परः सन्निकर्ष इत्यस्यार्धमात्राकाल-व्यवधानम् इत्यर्थः[६]। प्रातिशाख्यसूत्रस्थेनैकप्राणयोगशब्देनापि नान्तरीयकेण कालव्यवधानेन वर्णानाम् उच्चारणम् अभिप्रेयते।

## ३. ४. ३२. रिफितः—

विसर्जनीयो रिफितः (वा० प्रा० १।१६०) इति नवसूत्र्या कात्यायनो रिफितसंज्ञां शास्ति। रिफितसंज्ञापर्यायो रित्–शब्दोऽपि कात्यायनेन स्वकीये तन्त्रे प्रयुक्तः। तद्यथा–भाव्युपधं च रिद्विसर्जनीयान्तानि रेफेण (वा० प्रा० ७।६) इति। रिफितसंज्ञाया विशिष्टं प्रयोजनं तु–चर्चायाम् इतिना व्यवधानम् (वा० प्रा० ४।१६), स्थितोपस्थितत्वम् (वा० प्रा० ४।१६४), यकारलोपयोरभावः (वा० प्रा० ४।३७, ३८) चेति। एषा संज्ञा तावद ऋक्प्रातिशाख्यवर्जम् अन्यत्र नोपलभ्यते। ऋक्प्रातिशाख्ये खल्वपि 'रेफी'–संज्ञा विधीयते[७], तत्पर्यायतया च रिफितशब्दोऽपि प्रयुज्यते।[८] आश्वलायनश्रौतसूत्रे रिफधातोस्तिङन्तरूपं रेफि–शब्दश्चास्मिन्नेव प्रसङ्गे प्रयुक्तो दृश्यते। तथा हि—**विसर्जनीयोऽनत्यक्षरोपधो रिफ्यते। इतरश्च रेफी**[९]–इति। इत्थं चैषा संज्ञा प्रातिशाख्यसम्प्रदायेषु पुराकालादेव प्रचलितासीद् इत्यनुमीयते।

१. ऋ० प्रा० २।१॥
२. निरु० १।१७॥
३. के० सी० चटर्जी : टैक० टर्म्स०, पृ० १४२॥
४. ओन दि ऐन्द्र स्कूल, पृ० १९–२०॥
५. ऐतरेयारण्यक, ३।१।५॥
६. का० १।४।१०९॥
७. ऋ० प्रा० १।७६-१०३॥
८. ऋ० प्रा० १०।२२॥
९. आ० श्रौ० सू० १।५।१०-११॥

पाणिनीया प्रक्रिया प्रातिशाख्यीयाया अपेक्षया प्रौढतरेति तत्र भवान् पाणिनिः प्रकारान्तरेण विसर्जनीयविकारान् प्रतिपादयामास। प्रातिशाख्यमते पदान्तीयो विसर्जनीयः प्राकृतः। स च रिफितारिफित-भेदाद् द्विविधः। पाणिनीयतन्त्रे तु विसर्जनीयस्य प्राकृतत्वं नोरीक्रियते, किन्तु पदान्ते घोषव्यञ्जनेषु च परतो रेफस्य विकारत्वम्[1]। पाणिनीय-प्रक्रियायां पदान्तीयो रेफो द्विविधः—प्राकृतो वैकृतश्च। वैकृतो रेफः सकारस्य विकारः पारिभाषिको 'रु' संज्ञकः[2]। उत्वं,[3] यत्वं[4] च वैकृत-रेफस्यैव, अन्ये विकारास्तु द्वयोरपि सामान्येन भवन्तीति विवेकः।

अथाग्रे कात्यायनीयान् रिफितविधायकान् योगान् उल्लिख्य पाणिनीयैर्योगैस्तत्तुलना विधीयते—

(१) करनुदात्तम् (वा० प्रा० १।१६१)—अनुदात्तं 'कः' इति पदं रिफितविसर्जनीयान्तम्। अतः—करिति कः (मा० प० २५।४३) इति पदपाठः। पाणिनीयप्रक्रियया त्वत्र–तिङ्ङतिङः (अ० ८।१।२८) इत्यनुदात्तत्वम्। करोतेर्लुङि, च्लेर्लुकि, गुणे, हल्ङ्यादिलोपे चैतद् रूपम्। रेफस्य प्राकृतत्वाद् नात्र यत्वादिविकारः।

(२) अन्तरनाद्युदात्तम् (वा० प्रा० १।१६२)–'अन्तर्' शब्दो-ऽन्तोदात्तः स्वरादिषु[5] पठ्यते। तस्य रेफान्तत्वाद् रुनिमित्तका विकारा न जायन्ते। यस्त्वकारान्त आद्युदात्तोऽन्तशब्दः (मा० सं० १७।२), तत्र सुविभक्ते रुत्वम्[6], ततश्च विसर्जनीयत्वम्।[7] तस्य रुरेफस्य विकारत्वाद् न रिफितसंज्ञा।

(३) अहरभकारपरम् (वा० प्रा० १।१६३)–अहन्–शब्दस्य—रोऽसुपि (अ० ८।२।६९) इति रेफादेशत्वाद् रिफितसंज्ञाश्रयाणि कार्याणि दृश्यन्ते। भकारादौ विभक्तौ तु–अहन् (अ० ८।२।६८) इति रुत्वविधानात् तेषामभावः।

(४) आवर्वरिति समानर्चि (वा० प्रा० १।१६४)–आवर्वरिति पदद्वयम् एकस्यामृचि (मा० सं० १३।३) वृणोतेर्व्युत्पाद्यते। तत्र

---

१. अ० ८।३।१५ ॥
२. अ० ८।३।६६ ॥ ३. अ० ६।१।११३,११४॥
४. अ० ८।३।१७॥
५. का० १।१।३७ ॥ ६. अ० ८।२।६६ ॥
७. अ० ८।३।१५ ॥

धातो रेफत्वाद् रिफिताश्रयो विधिः क्रियते । अन्यत्र (मा० सं० ४।५।। ६।२२) तु–बहुवचनस्य वस्नसौ (अ० ८।१।२१) इति वसादेशस्य रुत्वे विसर्जनीय इति न रिफिताश्रयो विधिस्तत्र भवति ।

(५) स्तोतर्वस्तः सनुतरभार्वार्द्धाः (वा० प्रा० १।१६५)–स्तोतः (मा० सं० २३।७), दोषावस्तः (मा० सं० ३।२२) इत्यत्र गुणकृतो रेफः।[1] सनुतरिति स्वरादिषु[2] रेफान्तः । अभारिति भृञो लुङि वृद्धौ रेफः । वार्द्वारावपि रेफान्तौ प्रातिपदिकौ । एवं च सर्वेषां रेफान्तत्वाद् रिफिताश्रिता विधयो भवन्ति ।

(६) स्वः पदमनरणे, पदादिश्चाजित्परः (वा० प्रा० १।१६६, १६७)–स्वरिति शब्दः स्वरादिषु रेफान्तः पठ्यते । 'अनरणे' इति प्रतिषेधः किमर्थं इति न ज्ञायते । यत्तु व्याख्याकृद्भ्याम्—**स्वाय चारणाय** (मा० सं० २६।२) इति प्रत्युदाह्रियते, तत्र क्व स्वः शब्दो विसर्जनीयान्तः क्व वारणशब्दस्तस्मात् परः ?

(७) ह्वाः सवितः पुनस्त्वष्टर्नेष्टरकर्होतर्मातः प्रातर्जामातरजीगः प्रणेतरिति च (वा० प्रा० १।१६८)—अत्र ह्वाः, अकः, अजीगः इत्येते शब्दास्तिङन्ताः, तत्र धातुरेफो विसर्जनीयम् आपद्यते । सवितः, त्वष्टः, नेष्टः, होतः, मातः, जामातः, प्रणेतः इतीमे शब्दा ऋकारान्ताः, सम्बुद्धौ गुणकृतो रेफो विसर्जनीयमापद्यते । पुनः प्रातः इति रेफान्तौ स्वरादिषु[2] पठ्येते । इत्थं च सर्वत्र रुरेफाभावाद् रिफितसंज्ञानिमित्तकं कार्यं भवति ।

## ३. ४. ३३. पदम्—

अर्थः पदम् (वा० प्रा०३।२) इति सूत्रेण कात्यायनः पदसंज्ञां विदधौ । पुनः वर्णसमाम्नायप्रसङ्गेऽष्टमेऽध्याये कात्यायनोऽवोचत्—अक्षरसमुदायः पदम्, अक्षरं वा (वा० प्रा० ८।५७, ५८) इति । इत्थं च सार्थको वर्णो वर्णसमुदायो वा पदसंज्ञको भवतीत्यर्थः । पाणिनिस्तु–सुप्तिङन्तं पदम्, नः क्ये, सिति च, स्वादिष्वसर्वनामस्थाने (अ० १।४।१४–१७) इति चतुःसूत्र्या पदसंज्ञां विधत्ते । पदशब्दो निरुक्ते, प्रातिशाख्यान्तरेषु च संज्ञात्वेन प्रयुज्यते,न च परिभाष्यते[3] । ऐन्द्रसम्प्र-

---

१. अ० ७।३।११० ।। २. का० १।१।३७।।
३. निरु० १।१७; ऋ० प्रा० १।६६; तै० प्रा० १।५०; अ० प्रा० १।१ ।।

दायेऽप्येषा संज्ञा प्रसिद्धा बभूव[1]। **पूर्वपरयोरर्थोपलब्धौ पदम्**[2]–इति कातन्त्रीयसूत्रं विवृण्वन् सुषेणो विभिन्नसम्प्रदायप्रसिद्धानि पदसंज्ञाविधायकसूत्राणि प्रदर्शयति –**अर्थः पदमाहुरैन्द्राः, विभक्त्यन्तं पदमाहुरापिशलाः, सुप्तिङन्तं पदं पाणिनीयाः, इहार्थोपलब्धौ पदमिति वररुचिः**[3] इति। पाणिनीयैरपि यथावसरं प्राचीनमतानि स्वशब्दैरनूद्यन्ते। तथा च जगाद महाभाष्यकारः—**वर्णसमुदायः पदम्**[4]–इति, **पदमर्थे प्रयुज्यते, विभक्त्यन्तं च पदम्**–[5]इति च। कैयटः खल्वपि प्राह–**पदशब्देनार्थ उच्यते**[6]–इति।

### ३. ४. ३४. स्वर.—

तत्र स्वराः प्रथमम् (वा० प्रा० ८।२–१३) इत्यादिभिः सूत्रैः कात्यायनोऽकारादीनां त्रयोविंशतिवर्णानां स्वरसंज्ञां विधत्ते। पाणिनिस्तु स्वकीये शास्त्रे स्वरसंज्ञां न व्यवजहार, तत्स्थाने खल्वच्-प्रत्याहारं प्रयुयुजे। अकारादिवर्णानां स्वरसंज्ञाया अतिप्राचीनत्वात् प्रातिशाख्यान्तरेषु,[7] ऐन्द्रसम्प्रदाये[1] चैषा समुपलभ्यते। पाणिनीयैः खल्वपि वैयाकरणैरियं संज्ञा प्रचुरतया प्रयुज्यते। अन्वर्थं खल्वप्यस्या निर्वचनं प्रावोचत् पतञ्जलिः–**स्वयं राजन्ते स्वराः**[8]–इति।

### ३.४. ३५. स्पर्शः—

कि.....इति स्पर्शाः (वा० प्रा० ८।१५–२०) इति कात्यायनः ककारादीनां पञ्चविंशतिवर्णानां स्पर्शसंज्ञां विदधौ। पाणिनिरष्टाध्याय्याम् एतां संज्ञां न व्यधित, न खल्वप्येतेषां वर्णानां सङ्ग्राहकं कञ्चन प्रत्याहारम् एव प्रायुक्त। वार्त्तिककारस्तु—**ह्लादाविरामे**

१. ओन दि ऐन्द्र स्कूल, पृ० १९-२०॥
२. कात० १।१।२०॥
३. के० सी० चटर्जी: टैक० टर्म्स, पृ० ४१॥
४. महा० १।१।२१॥
५. महा० १।२।६४॥
६. प्रदीप १।२।४२॥
७. ऋ० प्रा० १।३; तै० प्रा० १।५; अ० प्रा० १।४॥
८. महा० १।२।२९, ३०॥ तु०—स्वृ शब्दोपतापयोः, स्वर्यते शब्द्यतेऽनेन व्यञ्जनमिति करणेऽच् प्रत्ययः (श्लो० पा० शि० ४ पञ्जिकावृत्तिः)॥

**स्पर्शाघोषसंयोगोऽसन्निधानादसंहितम्**[1]–इति स्पर्शसंज्ञां प्रयुयुजे । महाभाष्यकारोऽपि–**स्पृष्टं स्पर्शानां करणम्**[2]—इति संज्ञाम् इमां प्रयुक्तवान् । एषा संज्ञा प्रातिशाख्यान्तरेषु[3], ऐन्द्रसम्प्रदाये च प्रसिद्धा बभूव ।[4]

### ३. ४. ३६. अन्तःस्था—

अथान्तःस्था···विति (वा० प्रा० ८।२१, २२) इति वाजसनेयिप्रातिशाख्ये यकारादिवर्णानाम् अन्तःस्थासंज्ञा विधीयते । पाणिनिना त्वेते वर्णा यण् इति प्रत्याहारेण संगृह्यन्ते । एषा संज्ञा निरुक्ते[5], ऐन्द्रसम्प्रदाये[4], प्रातिशाख्यान्तरेषु[6] चोपलभ्यते । महाभाष्यकृतैषा संज्ञा स्थलद्वये प्रयुज्यते—**अथ किमर्थम् अन्तःस्थानाम् अण्सूपदेशः क्रियते**[7]–इति, **ईषत्स्पृष्टम् अन्तःस्थानाम्**[8]—इति च । अन्वर्था खल्वेषा संज्ञा विधीयते । तथा चावोचद् उवटः—**स्पर्शोष्मणाम् अन्तर्मध्ये तिष्ठन्तीत्यन्तःस्थाः**[9]–इति । अपरे तु–**वाशर्प्रकरणे खर्परे लोपः**[10]—इति विसर्जनीयलोपविकल्पम् अनवदधाना अन्तस्थाशब्दम् अन्तपूर्वपदकं मन्यमानाः—**स्वस्य स्वस्य स्थानस्यान्ते तिष्ठन्तीत्यन्तस्थाः**[11]—इति व्युत्पादयन्ति । पदानामन्तः मध्ये तिष्ठन्ति, न तु पदान्ते[12]—इत्यपि केचित् । ह्विटनेमहोदयस्तु नैतत् सहते, लक्षणस्य स्पर्शेष्वपिव्याप्तेः, लकारेऽव्याप्तेः, यकारादीनां पदादावपि दर्शनाच्च । ह्विटनेमहाशयः स्वयं परिभाषयति—स्पर्शविवृतयोरन्तर्मध्ये तिष्ठन्तीत्यन्तःस्थाः[13]—इति ।

---

१. महा० १।४।१०९ वा० ७ ॥ २. महा० १।१।१० ॥
३. ऋ० प्रा० १।७; तै० प्रा० १।७; अ० प्रा० १।६ ॥
४. ओन दि ऐन्द्र स्कूल, पृ १९-२० ॥
५. निरु० २।२ ॥
६. ऋ० प्रा० १।९; तै० प्रा० १।७; अ० प्रा० १।६ ॥
७. महा० प्रत्याहाराह्निके ॥ ८. महा० १।१।१० ॥
९. ऋ० प्रा० १।९ उ० भा० ॥
१०. महा० ८।३।३६ वा० १ ॥
११. कात० १।१।१४ पञ्जी, कविराज० ॥
१२. ह्विटनेमहोदयेनोद्धृतम्; अ० प्रा० १।३० ॥
१३. अ० प्रा० १।३० ॥

### ३. ४. ३७. ऊष्मा—

अथोष्माणः…हिति (वा० प्रा० ८।२३,२४) इति कात्यायनेन शकारादीनां वर्णानाम् ऊष्मसंज्ञा विधीयते। पाणिनीयतन्त्रे त्विमे वर्णाः शल्संज्ञया व्यवह्रियन्ते। प्रातिशाख्यान्तरेषु[१], ऐन्द्रसम्प्रदाये [२]चोष्मसंज्ञा समुपलभ्यते। अतिप्राचीना खल्वेषा संज्ञा। अस्याः प्रथम उल्लेख ऐतरेयारण्यके **य ऊष्माणः स प्राणः**[३]—इत्यत्रोपलभ्यते। तत्र चान्तःस्था वर्णा अप्यूष्मान्तर्गता आसन्निति क्षितीशचन्द्रः[४]। शौनकमतेन श-ष-स-ह्-विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारा ऊष्मसंज्ञकाः[५]। तैत्तिरीयप्रातिशाख्यकारः श-ष-स-ह-जिह्वामूलीयोपध्मानीयान् षड् वर्णान् ऊष्मसंज्ञकान् निर्दिदेश[६]। अथर्वप्रातिशाख्ये श-ष-स-ह-विसर्जनीयजिह्वामूलीयोपध्मानीया ऊष्मसंज्ञका इति ह्विटनेमहाशयः प्राह[७]। वाजसनेयिप्रातिशाख्यं वैयाकरणाश्च श-ष-स-ह-वर्णान् महाप्राणापरपर्यायान् ऊष्मसंज्ञकान् आहुः[८]। पतञ्जलिः—**विवृतम् ऊष्मणाम्**[९]—इत्यूष्मणां प्रयत्नं निर्दिदेश। वायुसाहचर्याद् इमे वर्णा ऊष्मसंज्ञयाभिधीयन्ते। तथा चोवटः प्राह—**ऊष्मा वायुः, तत्प्रधाना वर्णा ऊष्माणः**[१०]—इति।

### ३. ४. ३८. अयोगवाहः—

अथायोगवाहाः ''यमाः (वा० प्रा० ८।२५–३१) इति कात्यायनो जिह्वामूलीयोपध्मानीयानुस्वारविसर्जनीयनासिक्ययमानां वर्णानाम् अयोगवाहसंज्ञां[११] विधत्ते। इयं संज्ञा प्रातिशाख्यान्तरेषु, पाणिनीया-

---

१. ऋ० प्रा० १।१०; तै० प्रा० १।९; अ० प्रा० १।३१॥

२. ओन दि ऐन्द्र स्कूल, पृ० १९-२०॥

३. ऐतरेयारण्यक २।२।४॥

४. के० सी० चटर्जी : टैक० टर्म्स पृ० १८४॥

५. ऋ० प्रा० १।१० उ० भा०॥ ६. तै० प्रा० १।९॥

७. अ० प्रा० १।३१॥ ८. पद० न्यास० १।१।९॥

९. महा० १।१।१०॥ १०. ऋ० प्रा० १।१० उ० भा०॥

११. योगवाह इत्यपि पाठभेदः। अनन्तस्तथैव पाठम् अङ्गीकृत्य व्युत्पत्तिं प्रदर्शयामास। कातन्त्रीयसम्प्रदायेऽपि योगवाहसंज्ञा प्रसिद्धा (के० सी० चटर्जी : टैक० टर्म्स पृ० २१७)॥

ष्टके, ऐन्द्रसम्प्रदाये च नोपलभ्यते । वार्त्तिककारस्तु—**अयोगवाहानाम् अट्सु णत्वम्**[1]–इत्यत्रेमां संज्ञां प्रयुयुजे । **अथ केऽयोगवाहाः ? विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारनासिक्ययमाः**[2]—इति पतञ्जलिः । ऋक्-तन्त्रे,[3] वाजसनेयिप्रातिशाख्ये (वा० प्रा० ८।२५-३१) चेम एव वर्णा अयोगवाहसंज्ञकाः स्वीक्रियन्ते ।

अयोगवाहशब्दोऽनेकधा व्युत्पाद्यते । महाभाष्यकारस्तावद् अब्रवीत्—**कथं पुनरयोगवाहाः ? यदयुक्ता वहन्ति, अनुपदिष्टाश्च श्रूयन्ते**[4]—इति । एतद् भाष्यं कैयटो विवृणुते—**अयुक्ताः प्रत्याहारलक्षणेन पाठाभावाद् असम्बद्धा इत्यर्थः । उपदेशो द्विविधः—पाठः, ग्रहणकशास्त्रेण प्रत्यायनं च । स द्विविधोऽप्येषां नास्तीत्यर्थः । चशब्दो हेतौ । यतोऽनुपदिष्टास्ततोऽयुक्ता इत्यर्थः**[5]—इति । **एवं चाक्षरसमाम्नायेऽयुक्ताः सन्तो वहन्ति प्रयोगं निर्वाहयन्तीत्ययोगवाहशब्दस्य व्युत्पत्तिर्दर्शिता**[6]–इति तत्रैव नागेशः । वाजसनेयिप्रातिशाख्यभाष्यकार उवटोऽयोगवाहशब्दं व्युत्पादयति—**अकारादिना वर्णसमाम्नायेन सहिताः सन्त एते वहन्त्यात्मलाभं प्राप्नुवन्त्ययोगवाहाः**[7]—इति । भट्टोजिदीक्षितः खल्वपि व्युत्पत्तिं प्रदर्शयति—**अविद्यमानो योगः प्रत्याहारेषु सम्बन्धो येषां तेऽयोगाः, अनुपदिष्टत्वाद् उपदिष्टैरगृहीतत्वाच्च प्रत्याहारसम्बन्धशून्या इत्यर्थः । वाहयन्ति निर्वाहयन्ति प्रयोगम् इति वाहाः । अयोगाश्च ते वाहाश्चेति कर्मधारयः । अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः**[8]–इति । **योगैः सूत्रैः (समाम्नायिकैः) न वाह्यन्ते संगृह्यन्त इत्ययोगवाहाः**[9]—इत्यपि केचिदाहुः ।

### ३. ४. ३९. नाम—

सत्त्वाभिधायकं नाम (वा० प्रा० ८।६२) इति कात्यायनश्चतुर्विधपदेष्वन्यतमं नामसंज्ञकं लक्षयति । पाणिनिः स्वशास्त्रे बहुषु स्थलेषु

---

१. महा० प्रत्याहाराह्निके ॥

२. महा० प्रत्याहाराह्निके ॥

३. ऋ० त० १।२ ॥

४. महा० प्रत्याहाराह्निके ॥

५. प्रदीपस्तत्रैव ॥

६. उद्योतस्तत्रैव ॥

७. वा० प्रा० ८।२५ उ० भा० ॥

८. शब्दकौस्तुभ–हयवरट् सूत्रे ॥

९. कै० सी० चटर्जी : टैक० टर्म्स पृ० २१६ ॥

नामशब्दं प्रयुयुजे, द्वयजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् (अ० ४।३।७२) इति सूत्रेण च संज्ञाभूतात् नामप्रातिपदिकात् प्रत्ययं विदधे। प्राचीनवाङ्मये नामशब्दः सुबन्तार्थे प्रातिपदिकार्थे च प्रसिद्ध आसीत्। तथा हि—गोपथब्राह्मणे—**को धातुः किं प्रातिपदिकं किं नामाख्यातम्**[1]—इति सन्दर्भे प्रातिपदिकाद् भिन्नं नामेति प्रतिभाति। महाभाष्यस्थे श्लोकवार्तिके तु—**नाम च धातुजमाह निरुक्ते**[2]—इत्यत्र प्रातिपदिकादभिन्नं नामेति प्रतीयते। अनन्तः खल्वप्याह—**सत्त्वं नाम लिङ्गसंख्याकारकनिर्मुक्तं प्रातिपदिकस्वरूपम्**[3]—इति। पदविभागत्वाद् अस्य सुबन्तत्वम् एव युज्यते, क्वचित्तु तदवयवत्वाद् प्रातिपदिकमपि नामशब्देनाभिधीयते। एवं दृष्टिद्वयमाश्रित्य निरुक्तादिषु नामशब्दो लक्ष्यते। तथा हि—**सत्त्वप्रधानानि नामानि**[4]—इति यास्कः। **तन्नाम येनाभिदधाति सत्त्वम्**[5]—इत्यृक्प्रातिशाख्यकारः। बृहद्देवताकारः शौनकः प्राह—

**शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते।**
**तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः॥**
**अष्टौ यत्र प्रयुज्यन्ते नामार्थेषु विभक्तयः।**
**तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः॥**[6] इति।

**द्रव्यप्रधानं नाम**[7]—इति पतञ्जलिः। इयं संज्ञैन्द्रसम्प्रदायेऽपि प्रसिद्धासीत्[8]। नाम्नो भार्गवगोत्रनिर्देशस्य[9] वायुदेवतानिर्देशस्य[10] च किं प्रयोजनम् इति प्रातिशाख्याध्ययनान्नावबुध्यते।

### ३. ४. ४०. आख्यातम्—

क्रियावाचकम् आख्यातम् (वा० प्रा० ८।६२) इति कात्यायनः

---

१. गो० ब्रा० पू० १।२४॥
२. महा० ३।३।१ वा०॥
३. वा० प्रा० ८।६२ अ० भा०॥
४. निरु० १।१॥
५. ऋ० प्रा० १२।१८॥
६. बृहद्देवता १।४२-४३॥
७. महा० ५।३।६६॥
८. ओन दि ऐन्द्र स्कूल, पृ० १९-२०॥
९. वा० प्रा० ८।६५॥
१०. वा० प्रा० ८।६७॥

पदजातेषु प्रधानम् आख्यातसंज्ञकं लक्षयति। पाणिनिः स्वशास्त्र इमां संज्ञां नारेभे, परम् अनया संज्ञया सह परिचितत्वात् स प्रत्ययं[1] समासं[2] च विदधे। प्राचीनवाङ्मयेऽयं शब्दो धात्वर्थे तिङन्तार्थे च प्रायुज्यत। तथा हि—**नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च**[3]–इति यास्कोऽत्राख्यातशब्दं धात्वर्थे प्रयुङ्क्ते। स एव पुनः—**उदात्तं त्वेवम् आख्यातम् अभविष्यत्**[4]—इत्यत्र तिङन्तार्थे आख्यातशब्दं प्रयुङ्क्ते। वार्त्तिककार आख्यातशब्दं संज्ञात्वेन प्रयुङ्क्ते—**आकार आख्याते परादिश्च**[5]–इति। ऐन्द्रसम्प्रदायेऽप्येषा संज्ञा प्रसिद्धासीत्[6]। यास्कः शौनकश्च समानाकारेणाख्यातशब्दं लक्षयतः–**भावप्रधानम् आख्यातम्**[7] –इति। ऋक्प्रातिशाख्यकारस्तु–**तदाख्यातं येन भावं सधातु**[8]–इति परिभाषयामासाख्यातम्। पूर्ववदत्रापि वाजसनेयिप्रातिशाख्ये प्रतिपादितम् आख्यातस्य भारद्वाजगोत्रत्वं[9] सोमदेवत्वं[10] च किमभिप्रायकम् इति न ज्ञायते।

### ३. ४. ४१. उपसर्गः—

उपसर्गो विशेषकृत् (वा० प्रा० ८।६२) इतिकात्यायन उपसर्गं लक्षयति, अन्यत्र[11] चोपसर्गाणां परिगणनं करोति। पाणिनिः–प्रादय उपसर्गाः क्रियायोगे (अ० १।४।५८) इति सूत्रेण परिगणितशब्दानां क्रियायोगे उपसर्गसंज्ञां शास्ति। शास्त्र-द्वयेऽपि विंशतिरुपसर्गाः परिगण्यन्ते। प्रातिशाख्ये निर् दुर् इत्येतौ रेफान्तौ, पाणिनीयगणे तु निस् दुस् इत्येतौ सकारान्तौ पठ्येते। पाणिनिरपि—निरः कुषः (अ० ७।२।४६) इति निर्देशेन रेफान्तं निर् इत्युपसर्गं स्वीचकार। प्रातिशाख्या-

---

१. अ० ४।३।७२ ॥
२. अ० २।१।७२ ॥ महा० १।२।४५ अपि द्रष्टव्यम् ॥
३. निरु० १।१२ ॥ ४. निरु० ६।२८ ॥
५. महा० १।२।३७ वा० २ ॥
६. ओन दि ऐन्द्र स्कूल, पृ० १९-२० ॥
७. निरु० १।१; बृहद्देवता २।१२१ ॥
८. ऋ० प्रा० १२।१९ ॥
९. वा० प्रा० ८।६५ ॥
१०. वा० प्रा० ८।६७ ॥ ११. वा० प्रा० ६।२४ ॥

न्तरेषु,[1] निरुक्ते[2], ऐन्द्रसम्प्रदाये चाप्येषा संज्ञा प्रादिशब्दानां प्रयुज्यते। निरुक्ताष्टाध्यायी-वाजसनेयिप्रातिशाख्यर्क्प्रातिशाख्येषु परिगणिता उपसर्गाः समाना एव दृश्यन्ते। वार्त्तिककारः-**क्रियाविशेषक उपसर्गः**[3]-इत्युपसर्गं लक्षयति।

उपसर्गा अर्थविशेषस्य द्योतका वाचका वेत्यत्राचार्याणां मतभेदो दृश्यते। यास्कः शाकटायनगार्ग्ययोर्मतं प्रदर्शयन्नाह-**न निबंद्धा उपसर्गा अर्थान् निराहुरिति शाकटायनः। नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति। उच्चावचाः पदार्था भवन्तीति गार्ग्यः। तद् य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणम्**[4]-इति। अतोऽग्रे च यास्क उपसर्गार्थान् निर्दिदेश। पाणिनेः स्पष्टनिर्देशाभावेऽपि वैयाकरणैर्द्योतकपक्ष एवोरीक्रियते, न तु वाचकपक्षः[5]। उपसर्गो वसिष्ठगोत्रीयोऽग्निदेवताकश्चेति कात्यायनः प्रतिपादयति[6], शास्त्रेऽस्य क उपयोग इति न ज्ञायते।

### ३. ४. ४२. निपातः—

निपातः पादपूरणः (वा० प्रा० ८।६२) इति कात्यायनो निपातं लक्षयति, निहतांश्च चतुर्दश निपातान् परिगणयति[7]। पाणिनिः प्राग् रीश्वरान्निपाताः (अ० १।४।५६) इत्यधिकृत्य चादीनाम् असत्त्ववचनानाम् उपसर्ग-गति-कर्मप्रवचनीयापरसंज्ञानां निपातानां संग्रहं करोति। **उच्चावचेष्वर्थेषु निपतन्ति**[8]-इति निपातानां सार्थक्यम् ऊरीकुर्वाणो यास्कः—**अप्युपमार्थे, अपि कर्मोपसङ्ग्रहार्थे, अपि पादपूरणाः**[8]-इति निपातत्रैविध्यं सोदाहरणं प्रतिपादयति। वाजसनेयिप्रातिशाख्यकारो निपातान् पादपूरणान् अभिमन्यमानस्तान् अनर्थकान् एवाङ्गीकरोति। तथा चावोचद् उवटः—**निपातस्त्वर्थासम्भवे पादपूरणो भवति**[9]-इति। अधिपरी अनर्थकौ (अ० १।४।९३) इत्यत्र

१. ऋ० प्रा० १२।२०; तै० प्रा० १।१५; अ० प्रा० १।१॥
२. निरु० १।३॥
३. महा० १।३।१ वा० ७॥
४. निरु० १।३॥
५. महा० १।३।१; तत्रैव प्रदीपोद्योतौ; महा० ५।२।२८॥ वा० प० १।१८८-१९०॥
६. वा० प्रा० ८।६५-६७॥
७. वा० प्रा० २।१६॥
८. निरु० १।४॥
९. वा० प्रा० ८।६२ उ० भा०॥

पाणिनिरपि क्वचिदर्थविशेषाबोधकत्वात् तेषाम् आनर्थक्यम् अपि स्वीचकार । वार्त्तिककारः—**निपातस्यानर्थकस्य प्रातिपदिकत्वम्**[1]—इति प्रतिपादयन् निपातानर्थक्यम् अपि स्वीकरोति । ऋक्प्रातिशाख्ये तु—**निपातानाम् अर्थवशान्निपातनाद् अनर्थकानाम् इतरे च सार्थकाः**[2]—इति सार्थक्यानर्थक्यं प्रतिपाद्यते । भर्तृहरिणा निपातानां द्योतकत्वम् आस्थीयते[3], यश्चाप्यर्थस्तैर्द्योत्यते सोऽपि सम्बन्धः, न तु द्रव्यम्, पाणिनेः 'असत्त्वे' (अ० १।४।५७) इति वचनत्वात् । भोजो निपातं लक्षयति—**जात्यादि-प्रवृत्तिनिमित्तानुपग्राहित्वेनासत्त्वभूतार्थाभिधायिन अलिङ्गसंख्याशक्तय उच्चावचेष्वर्थेषु निपतन्तीत्यव्ययविशेषा एव चादयो निपाताः**[4]—इति । ऐन्द्रसम्प्रदायेऽपि निपातसंज्ञा प्रसिद्धा बभूव[5] । अत्रापि कात्यायननिर्दिष्टं निपातस्य काश्यपगोत्रत्वं वरुणदेवत्वं च किमर्थम् इति नावगम्यते ।

अथातोऽग्रे ताः संज्ञा अनुक्रमिष्यन्ते याः पाणिनीयतन्त्रे परिभाष्यन्ते, वाजसनेयिप्रातिशाख्ये पुनः सिद्धवत् प्रयुज्यन्ते—

### ३. ४. ४३. तिङ्—

तिङ् इति प्रत्याहारः (अ० ३।४।७८) पाणिनिना विधीयते । प्रातिशाख्यादिषु तिङन्तस्थाने आख्यातशब्दः प्रयुज्यते । वाजसनेयिप्रातिशाख्ये किल—तिङ्कृत्तद्धितचतुष्टयसमासाः शब्दमयम् (वा० प्रा० १।२७) इत्यत्रैकस्मिन् स्थले तिङ्प्रत्याहारः प्रयुज्यते । प्रातिशाख्याध्येतृष्वप्रसिद्धत्वाद् उवटस्तिङ्पदं विवृणुते—**तिङः खलु आख्यातका भवन्ति**[6]—इति । अस्मिन्नेव प्रातिशाख्ये—कृदाख्यातयोश्चोदात्तयोः (वा० प्रा० ६।४)—इत्यत्र कात्यायनः कृत्साहचर्येऽपि तिङं विहायाख्यातं शब्दं प्रयुङ्क्ते । तिङ्शब्दप्रयोगे कात्यायनः पाणिनिना प्रभावित इति स्पष्टम् अत्र लक्ष्यते । एतच्च चरमेऽध्याये उपपादयिष्यते ।

---

१. महा० १।२।४५ वा० १२ ॥ २. ऋ० प्रा० १२।२६ ॥
३. वा० प० २।१९२-१९६ ॥
४. शृङ्गारप्रकाश, डि० सं० ग्रा० पृ० २०४,२०५ ॥
५. ग्रोन दि ऐन्द्र स्कूल, पृ० १९-२० ॥
६. वा० प्रा० १।२७ उ० भा० ॥

### ३. ४. ४४. कृत्—

कृदतिङ् (अ० ३।१।९३) इति सूत्रेण पाणिनिर्धातोर्विहितानां प्रत्ययविशेषाणां कृत्संज्ञां विधत्ते। औदाहरणिकी चेयं संज्ञा[१]। वाजसनेयिप्रातिशाख्यकारः कृत्संज्ञां स्वशास्त्रे पूर्वोक्तयोर्द्वयोः स्थलयोः सस्मार[२]। कृत्रिमसंज्ञारूपेण कृच्छब्दः प्रथमतो गोपथब्राह्मणे—**कृदन्तम् अर्थवत् प्रातिपदिकम्**[३]–इति सन्दर्भे प्रयुक्तः, ततो गोभिलगृह्यसूत्रे–**कृतं नाम दद्यात्**[४]–इति स्थल उल्लिख्यते। यास्कः—**सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिकाः**[५]–इति, **अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते**[६]–इति च कृत्संज्ञां प्रयुयुजे। ऋक्प्रातिशाख्ये, तैत्तिरीयप्रातिशाख्ये, ऐन्द्रसम्प्रदाये चेयं संज्ञा नोपलभ्यते।

### ३. ४. ४५. तद्धितः—

तद्धिताः (अ० ४।१।७६)इति सूत्रेण पाणिनिरस्मात् सूत्रात् प्रभृति पञ्चमाध्यायान्तं यावद् विहितानां प्रत्ययानां तद्धितसंज्ञां विदधौ। वाजसनेयिप्रातिशाख्यकारस्तद्धितसंज्ञां प्रयुयुजे[७] न च विदधे। बहुभिः प्राचीनाचार्यैः प्रयुज्यमानाप्येषा संज्ञा केनापि न परिभाष्यते। आधुनिकास्तु केचन कल्पयन्ति—तस्मै हितम् (अ० ५।१।५) इत्यर्थाभिधायकस्तद्धितशब्दनिर्देशः प्राचीनतन्त्रे प्रातिपदिकविहितप्रत्ययानाम् आदिभूत आसीद् इति सर्वे ते तद्धितनाम्ना प्रसिद्धिम् आपुः[८]–इति। अन्ये पुनराहुः–तस्मै हितम् (अ० ५।१।५) इत्यर्थे तद्धितम्-इति सूत्रं पूर्वतन्त्र आसीत्, तच्च माङ्गलिकत्वात् सर्वेषां प्रातिपदिकविहितप्रत्ययानां

---

१. एस० पी० चतुर्वेदी : टैक० टर्म्स आफ़ दि अष्टाध्यायी, प्रौसीडिंग्स आफ़ नाइन्थ ओरियण्टल कानफ्रेंस, त्रिवेन्द्रम, १९३७, पृ० ११११९-१२०८ ॥

२. वा० प्रा० १।२७ ॥ ६।४ ॥ ३. वा० प्रा० ८।६५–६७ ॥

३. गो० ब्रा० पू० १।२६ ॥

४. गो० गृ० २।८।१४ । तु०–महा० पस्पशा० ॥

५. निरु० १।१४ ॥

६. निरु० २।३ ॥

७. वा० प्रा० १।२७ ॥ ५।८ ॥

८. के० वी० अभ्यङ्कर : डि० सं० ग्रा०, पृ० १६९ ॥

प्रतिनिधिः समजायत[1]–इति । अस्याः संज्ञायाः प्राचीनतमः प्रयोगो गोपथब्राह्मण[2] उपलभ्यते । यास्कः खल्वपि–**अथ तद्धितसमासेष्वेकपर्वस्वनेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्**[3]–इति तद्धितसंज्ञां प्रयुयुजे । तस्यैवानुवदमान इवाह शौनकः—

**विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते ।**
**प्रविभज्यैव निर्ब्रूयाद् दण्डार्हो दण्ड्य इत्यपि ॥**[4] इति ॥

अन्योऽपि तद्धितशब्दप्रयोगः संज्ञाविशेषार्थे दृश्यते[5] । ऐन्द्रसम्प्रदाये, ऋक्तैत्तिरीयप्रातिशाख्ययोश्चेयं संज्ञा नोपलभ्यते ।

### ३. ४. ४६. समासः—

प्राक् कडारात् समासः (अ० २।१।३) इति सूत्रेण पाणिनिः समासम् अधिकरोति, किन्तु समाससंज्ञां न परिभाषयति । वाजसनेयिप्रातिशाख्यकारः समासशब्दं पारिभाषिकेऽर्थे प्रयुङ्क्ते,[6] समासस्य च मुख्यान् चतुरो भेदान् निर्दिशति[7] । समासशब्दः पारिभाषिकेऽर्थे निरुक्ते[8], ऋक्प्रातिशाख्ये[9], अथर्वप्रातिशाख्ये[10], ऐन्द्रसम्प्रदाये[11] च प्रयुज्यते । महाभाष्यकारः प्रधानतया चतुरः समासान् निर्दिशति—**पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः**[12]–इति । एतेन कातन्त्रवत् वाजसनेयिप्रातिशाख्यसूत्रस्थ चतुष्टयशब्दो नाम-कारक-सन्धि-स्त्री-प्रत्ययार्थकः[13]–इति क्षितीशचन्द्रकल्पना परास्ता ।

---

१. के० सी० चटर्जी : टैक० टर्म्स, पृ० ६१ ॥
२. गो० ब्रा० पु० १।२४ ॥
३. निरु० २।२ ॥
४. बृ० दे० २।१०६ ॥
५. अ० प्रा० २।८३; नाट्यशास्त्र १५।२९ ॥
६. वा० प्रा० १।२७ ।
७. वा० प्रा० १।२७ ; उ० भा०; अ० भा० ॥
८. निरु० २।२ ॥
९. ऋ० प्रा० १।६४ ॥
१०. अ० प्रा० २।६२ ॥
११. ओन दि ऐन्द्र स्कूल, पृ० १९-२० ॥
१२. महा० २।१।६ ॥
१३. के० सी० चटर्जी : टैक० टर्म्स, पृ०८ ५-८६ ॥

### ३. ४. ४७. धातुः—

भूवादयो धातवः (अ० १।३।१)इति सूत्रेण पाणिनिर्भ्वादिशब्दानां गणे पठितानां, सनाद्यन्ता धातवः (अ० ३।१।३२)इत्यनेन च सनादिप्रत्ययान्तानां शब्दानां धातुसंज्ञां विधत्ते। वाजसनेयिप्रातिशाख्यकारः–धात्वर्थे यकारे स्वरपूर्वे (वा० प्रा० ५।१०) इत्यत्र धातुशब्दं प्रयुङ्क्ते। धातुशब्दः पारिभाषिकेऽर्थे प्रथमतो गोपथब्राह्मणे—**ओङ्कारं पृच्छामः को धातुः**[1]—इति सन्दर्भे प्रयुक्तः। यास्कस्तु सनिर्वचनं पारिभाषिकधातुशब्दं प्रायुङ्क्त—**एतावन्तः समानकर्माणो धातवः। धातुर्दधातेः**[2]–इति। शौनकेनाप्येषा संज्ञा बहुशः प्रयुक्ता[3]। ऋगथर्वप्रातिशाख्ययोरैन्द्रसम्प्रदाये चैषा संज्ञा लब्धप्रयोगा दृश्यते[4]। प्राचीनाचार्यैः कृतं धातुलक्षणं निरुक्तादिषु न सङ्गृहीतम्। वार्त्तिककारस्तु—**क्रियावचनो धातुः, भाववचनो धातुः**[5]–इति लक्षणद्वयं प्रस्तौति। तत्र क्रियाभावयोर्विशेषं प्रदर्शयति नागेशः–**क्रियाशब्दः सपरिस्पन्दसाधनसाध्यार्थे रूढो भावशब्दश्च सपरिस्पन्दापरिस्पन्दान्यतरसाधनसाध्ये**[6]–इति। पतञ्जलिस्तु सूत्रस्थशब्दैरेव वार्त्तिकोक्तम् अर्थम् उपपादयामास।

### ३. ४. ४८. वृद्धिः—

वृद्धिरादैच् (अ० १।१।१) इति सूत्रेण पाणिनिः आ, ऐ, औ इत्येतेषां वर्णानां प्रत्येकं वृद्धिसंज्ञां विदधाति। वाजसनेयिप्रातिशाख्यकारः—तद्धिते चैकाक्षरवृद्धावनिहिते (वा० प्रा० ५।३०) इति वृद्धिशब्दस्य पाणिनीयसंज्ञार्थे प्रयोगं करोति। द्वावप्याचार्यौ स्वस्वशास्त्रयोः कृत्रिमाकृत्रिमयोर्वृद्धिसंज्ञयोर्ग्रहणं कुरुतः[7]। ऐन्द्रसम्प्रदाय एषा संज्ञा प्रसिद्धासीत्[8]। निरुक्ते, ऋक्प्रातिशाख्ये, तैत्तिरीयप्रातिशाख्ये चैषा संज्ञा नोपलभ्यते।

---

१. गो० ब्रा० पू० १।२४॥ २. निरु० १।२०॥
३. बृ० दे० २।१०१–१०३॥
४. ऋ० प्रा० ६।२१; अ० प्रा० २।६०॥ ओन दि ऐन्द्र स्कूल, पृ० १९-२०॥ ५. महा० १।३।१ वा०॥
६. उद्योत १।३।१॥
७. अ० ५।१।४७; वा० प्रा० अध्यायसमाप्तौ–वृद्धं वृद्धिः।
८. ओन दि ऐन्द्र स्कूल, पृ० १९-२०॥

### ३. ४. ४९. अवसानम्—

विरामोऽवसानम् (अ० १।४।११०) इति पाणिनिरवसानसंज्ञां लक्षयति । वार्त्तिककारस्तु—**अभावोऽवसानम्**—इत्यादीन् विकल्पान् प्रदर्श्य लोकविदितत्वाद् इमां संज्ञां प्रत्याचचक्षे । वाजसनेयिप्रातिशाख्यकारः सप्तमेऽध्याये—अथावसानानि (वा० प्रा० ७।१) इत्यधिकृत्य 'इति' शब्दे परतः पदान्तस्य सन्धिकार्याणि प्रदर्शयति । तथा च प्रोक्तम् उवटेन—**पदान्तस्येतिकरणस्यादेश्च यः सन्धिः स उच्यते**[1]—इति । प्रातिशाख्यकारः कात्यायनोऽवसितशब्दमपि प्रयुङ्क्ते ।[2] तस्य च—**निरर्थकं व्यञ्जनम् अवसानगतम् अवसितशब्देनोच्यते**[3]—इति व्याख्यानम् उवटेन क्रियते । प्रातिशाख्यान्तरेष्वप्यवसानसंज्ञा प्रयुक्ता दृश्यते[4], परं तस्या लक्षणम् अन्यत्र नोपलभ्यते ।

### ३. ४. ५०. वचनम्—

तान्येकवचनद्विवचनबहुवचनान्येकशः, सुपः, (अ० १।४।१०२, १०३) इति सूत्रयुगलेन पाणिनिस्तिङः सुपश्चैकवचनं, द्विवचनं, बहुवचनम् इति संज्ञाः शास्ति । वाजसनेयिप्रातिशाख्यकारः—एकारेकारोकारा द्विवचनान्ताः (वा० प्रा० १।९३) इति द्विवचनशब्दं पारिभाषिकेऽर्थे प्रयुक्तवान् । एकवचन-बहुवचनसंज्ञे प्रथमतः शतपथब्राह्मणे उपलभ्येते । तद्यथा—**नेद् एकवचनेन बहुवचनं व्यवायाम**[5]—इति । यास्कस्तु—**सप्तम्येकवचनानीति शाकपूणिः**[6]—इति, **अपि वा मेदसश्च पशोश्च सात्त्वं द्विवचनं स्याद् यत्र ह्येकवचनार्थः प्रसिद्धं तद् भवति**[7]—इति, **वयो वेर्बहुवचनम्**[8]—इति च स्थलेषु त्रीण्यपि वचनानि प्रयुयुजे । अथर्वऋक्प्रातिशाख्ये द्विवचनार्थे 'द्विवचः' इत्यपि शब्दः प्रयुज्यते[9] । अथर्व-

---

१. वा० प्रा० ७।१ उ० भा० ॥
२. वा० प्रा० १।१०६ ॥ ४।११६ ॥
३. वा० प्रा० ४।११६ उ० भा० ॥
४. ऋ० प्रा० १।१५; तै० प्रा० १४।१५; अ० प्रा० १।७० ॥
५. श० ब्रा० १३।५।१।८ ॥
६. निरु० ४।१५ ॥
७. निरु० ६।१६ ॥
८. निरु० ४।३ ॥
९. ऋ० प्रा० १।७१ ॥

प्रातिशाख्ये द्विवचनं[1] वहुवचनम्[2] इति द्वे संज्ञे उपलभ्येते । ऐन्द्रसम्प्रदाये तिस्रोऽप्येताः संज्ञाः प्रसिद्धा ग्रासन् ।[3]

### ३. ४. ५१. विभक्तिः—

विभक्तिश्च (अ० १।४।१०४) इति पाणिनिना सुपां तिङां च विभक्तिसंज्ञा विधीयते । विभक्तिविशेषान् प्रथमादि-सप्तम्यन्तान् प्रयुञ्जानोऽपि पाणिनिर्नं परिभाषयामास । अत एवाह वृत्तिकारः— **द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते,तैरेवात्र व्यवहारः**[4]– इति । वाजसनेयिप्रातिशाख्यकारो द्वितीयादिशब्दान् सुपां त्रिकेषु प्रयुयुजे[5] । पारिभाषिको विभक्तिशब्दो गोपथब्राह्मणे[6], निरुक्ते[7], बृहद्देवतायाम्,[8] ऐन्द्रसम्प्रदाये[3] च समुपलभ्यते । द्वितीयादयः शब्दा अपि सुपां त्रिकेषु दृश्यन्ते निरुक्तादिषु ।[9]

### ३. ४. ५२. आमन्त्रितम्—

सामन्त्रितम् (अ० २।३।४८) इति पाणिनिः सम्बोधने वर्त्तमानस्य प्रथमान्तस्य शब्दस्यामन्त्रितसंज्ञां विधत्ते । वाजसनेयिप्रातिशाख्यकारोऽपि–पदपूर्वम् आमन्त्रितम् अनानार्थेऽपादादौ (वा० प्रा० २।१७) इत्यादिषु योगेष्वामन्त्रितशब्दं तस्मिन्नेवार्थे स्मरति । ऋगथर्वप्रातिशाख्ययोः[10], ऐन्द्रसम्प्रदाये[3] चैषा संज्ञा व्यवह्रियते ।

### ३. ४. ५३. प्रत्ययः—

प्रत्ययः (अ० ३।१।१) इति सूत्रेण पाणिनिः प्रत्ययशब्दं संज्ञात्वेनाधिकरोति । वैयाकरणैः प्रत्ययशब्दः—**प्रत्याययतीति प्रत्ययः, प्रत्याय्यते इति वा प्रत्ययः**[11]–इति व्युत्पाद्यते । गोपथब्राह्मणे[12] प्रत्यय-

---

१. अ० प्रा० १।७५ ॥ २. अ० प्रा० १।७८ ॥
३. ओन दि ऐन्द्र स्कूल, पृ० १९–२० ॥
४. का० २।३।२ ॥ ५. वा० प्रा० १।१३६; ३।१३९ ॥
६. गो० ब्रा० पू० १।२४ ॥ ७. निरु० २।१; ७।१ ॥
८. बृ० दे० २।९४ ॥ ९. निरु० ४।१५ ॥
१०. ऋ० प्रा० १।६८; अ० प्रा० १।८१ ॥
११. महा० ३।१।१ ॥ १२. गो० ब्रा० पू० १।२६ ॥

शब्दो विभक्त्यर्थे प्रयुक्त इति प्रतीयते। यास्कस्तु प्रतीत्यर्थे[1] प्रत्यय-शब्दं प्रयुयुजे, पारिभाषिकप्रत्ययार्थे च 'अन्तकरणम्, उपबन्ध' इति द्वौ शब्दौ व्यवहरति। प्रातिशाख्येषु प्रायेण प्रत्ययशब्दः परार्थे प्रयुज्यते[2]। वाजसनेयिप्रातिशाख्ये प्रत्ययशब्दः परार्थेऽर्थप्रत्यायकार्थे च प्रयुज्यते। तथा हि–प्रत्ययसवर्णं मुदि शाकटायनः (वा० प्रा० ३।९)इत्यत्र परार्थे,ह्रस्वव्यञ्जनाभ्यां वकारादौ विभक्ति-प्रत्यये (वा० प्रा० ५।१३)इत्यत्र चार्थप्रत्यायकार्थे। अथर्वप्रातिशाख्ये त्वर्थप्रत्याय-कार्थ एवास्य प्रयोगः[3]। तैत्तिरीयप्रातिशाख्येऽप्यस्य प्रयोगो दृश्यते[4]। तत्र च—**प्रत्येति पश्चादागच्छतीति प्रत्ययः**[5]—इति टीकाकारः। ऐन्द्रस-म्प्रदायेऽपि प्रत्ययसंज्ञा प्रसिद्धा बभूव[6]।

## ३. ५. ०. परिभाषानुक्रमः—

अथातः परिभाषा–सूत्राणि विमृश्यन्ते। तत्र प्रातिशाख्यसूत्रक्रमेण कात्यायनीयसूत्राणां पाणिनीयसूत्रैः, तदभावे च तत्तन्त्र–प्रामाणिक-प्राचार्यवचनैः सह तुलना प्रस्तूयते। नैर्देशिक्यः परिभाषास्तावद् उपस्थाप्यन्ते—

## ३. ५. १. वर्णनिर्देशः—

(१) निर्देश इतिना (वा० प्रा० १।३६)–वाजसनेयिप्रातिशाख्ये वर्णनिर्देश इतिना क्रियते। तथा चाष्टमेऽध्याये—अ इति (वा० प्रा० ८।३) इति रीत्या वर्णा निर्दिश्यन्ते। आष्टमिकाद् अन्यत्र कात्यायनो वर्णान् क्वचिद् अपीतिना न निर्दिदेश। अपि च, चतुर्षु सूत्रेष्विति-शब्दोऽर्थनिर्देशार्थः (वा० प्रा० १।१३३–१३७), सप्तचत्वारिंशत्सु च स्वरूपप्रदर्शनार्थः (वा० प्रा० १।१६४ इत्यादिषु) प्रयुज्यते। पाणिनी-यतन्त्रे क्वचिदपि वर्णं इतिना न निर्दिश्यते। इतिशब्दस्तु तत्रार्थनिर्दे-शार्थः (अ० १।१।४४), विवक्षार्थः (अ० ४।२।२१), व्यवस्थार्थः (अ० ३।२।१४१), अन्योपसंग्रहार्थः (अ० ७।४।६५), स्वरूपप्रदर्शनार्थः

---

१. निरु० १।१५ ॥ २. ऋ० प्रा० १।८० ॥
३. अ० प्रा० २।८६ ॥ ३।३ ॥
४. तै० प्रा० ५।७ ॥ ५. वैदिकाभरण ५।७ ॥
६. ओन दि ऐन्द्र स्कूल, पृ० १९–२० ॥

(अ० ३।१।४२) चतुर्विंशतिस्थलेषु, प्रयुज्यते। इतिपदघटितसूत्रशैली प्रथमेऽध्याये विमृष्टा[1]।

(२) कारेण च (वा० प्रा० १।३७)—वाजसनेयिप्रातिशाख्ये वर्णाः कारशब्देनापि निर्दिश्यन्ते, यथा—सर्वोऽकार ओकारम् (वा० प्रा० ४।४३)। कारशब्देन वर्णनिर्देशः प्रायिक इति तेन विनापि वर्णा निर्दिश्यन्ते यथा—अलोपो मांस्पचन्याः (वा० प्रा० ४।४२)। क्वचिद् वर्णशब्देनापि निर्देशः क्रियते यथा—कण्ठ्याद् इवर्ण एकारम् (वा० प्रा० ४।५४), तपरेण (दपरेण वा) निर्देशोऽप्यत्र दृश्यते यथा—एदोद्भ्यां पूर्वमकारः (वा० प्रा० ४।६२)। पाणिनिः स्वशास्त्रे कारपरेण वर्णान् न निर्दिदेश। उच्चैस्तरां वा वषट्कारः (अ० १।२।३५) इत्यत्र वषट्-शब्दस्तु कारेण निर्दिश्यते पाणिनीयतन्त्रे। वार्त्तिककारः—**वर्णात् कारः**[2]—इति कारप्रत्ययं विधत्ते वर्णनिर्देशे। अत्र च ककारस्येत्संज्ञा न भवति प्रयोजनाभावात्।

(३) अव्यवहितेन व्यञ्जनस्य (वा० प्रा० १।३८)—व्यञ्जननिर्देशोऽकारव्यवहितेन कारप्रत्ययेन क्रियते। पाणिनीयाष्टके तथानिर्देशो नोपलभ्यते। वार्त्तिककारेण कारप्रत्ययं विदधताप्यकारव्यवधाननिर्देशो नाकारि।

(४) स्वरैरपि (वा० प्रा० १।४०)—प्रातिशाख्ये व्यञ्जननिर्देशः स्वरैरपि क्रियते। अकारेकारोकारैरेवायं निर्देश उपलभ्यते। यथा—चछयोः शम् (वा० प्रा० ३।१३५) इत्यत्राकारेण, शिलिसिवर्गमध्यमव्यवहितोऽपि (वा० प्रा० ३।९६) इत्यत्रेकारेण, नुः (वा० प्रा० ३।१३४) इत्यत्रोकारेण। स्वरूपतोऽपि वर्णाः क्वचिद् निर्दिश्यन्ते, यथा—ङ्नौ क्ताभ्यां सकारे (वा० प्रा० ४।१४)। पाणिनीयतन्त्रे व्यञ्जननिर्देशः स्वरूपतः, अकारेकारपरकश्चोपलभ्यते, यथा—नृन् पे, ढो ढे लोपः (अ० ८।३।१०,१३), कुतिहोः (अ० ७।२।१०४)।

(५) र एफेन च (वा० प्रा० १।३९)—प्रातिशाख्ये रेफस्य निर्देश एफेनापि क्रियते। पाणिनिस्तु क्वचिदपि रेफशब्दं न प्रयुयुजे, अपि तु स्वरूपतोऽकारपरकस्य च रेफस्य व्यवहारं चक्रे। यथा—रो रि (अ० ८।३।१४), राल्लोपः (अ० ६।४।२१)। वार्त्तिककारः-

१. द्र०—पृ० ५६॥ २. महा० ३।३।१०८ वा० ३॥

**राद् इफः**[1]—इत्यकारपरकरवर्णाद् इफ-प्रत्ययं विदधौ वर्णनिर्देशे।

(६) नानुस्वारयमविसर्जनीयजिह्वामूलीयोपध्मानीयाः (वा० प्रा० १।४१)—वाजसनेयिप्रातिशाख्येऽनुस्वारादयो वर्णाः स्वसंज्ञाभिरेव निर्दिश्यन्ते, न तु कारशब्देन। पाणिनीयतन्त्रे विसर्जनीयानुस्वारौ स्वसंज्ञया निर्दिश्येते। यथा—खरवसानयोर्विसर्जनीयः (अ० ८।३।१५), मोऽनुस्वारः (अ० ८।३।२३)। जिह्वामूलीयोपध्मानीयौ तु स्वरूपतो निर्दिश्येते। यथा—कुप्वोः कः पौ च (अ० ८।३।३७)।

(७) स्पर्शेष्वेव संख्या (वा० प्रा० १।४६)—वाजसनेयिप्रातिशाख्ये प्रयुज्यमानाः प्रथमद्वितीयतृतीयचतुर्थपञ्चमशब्दाः स्पर्शेषु प्रतिवर्गं तावतिथा वेदितव्याः। यथा—पञ्चमे पञ्चमम् (वा० प्रा० ४।१२२) इत्यत्र वर्गाणां पञ्चमा वर्णा गृह्यन्ते। पाणिनीयतन्त्रे तु प्रत्याहारैः कार्यसम्पादनाद् एवंविधो व्यवहारो न लक्ष्यते। वार्त्तिकेषु प्रातिशाख्यसमो व्यवहारो लक्ष्यते। तद्यथा—**चयो द्वितीयाः पौष्करसादेः**[2]—इति।

### ३. ५. २. ग्रहणनिर्देश—

(८) ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् (वा० प्रा० १।६३) ह्रस्वो वर्णो गृह्यमाणः स्वसवर्णौ दीर्घप्लुतावपि गृह्णाति। पाणिनिरपि—अणुदित् सवर्णस्य चाप्रत्ययः (अ० १।१।६९) इति सूत्रेण सवर्णान् ग्राहयति। प्रातिशाख्यसूत्रं प्रधानतः स्थानप्रतिपादकयोगेषु ह्युपयुज्यते। अतएव-कण्ठ्यादिवर्ण एकारम् (वा० प्रा० ४।५२) इत्यत्र कण्ठ्याद् इति निर्देशो, न त्ववर्णाद् इति।

(९) प्रथमग्रहणे वर्गम् (वा० प्रा० १।६४)—वर्गस्य प्रथमो वर्णो गृह्यमाणस्तद्वर्गस्यं सर्वान् वर्णान् ग्राहयति। इयमपि परिभाषा स्थानप्रकरणे एव प्रवर्त्तत इति—शं चे पकारादुकारोदयात् (वा० प्रा० ४।७), तकारवर्गश्चकारवर्गे चकारवर्गम् (वा० प्रा० ४।९५) इत्यादिषु व्यभिचारदर्शनाद् अनुमीयते। पाणिनिस्तु यत्र वर्ग्यान् ग्राहयितुं कामयते, तत्र वर्ग-प्रथमवर्णम् उदितं पठति, परिभाषयति च-अणुदित् सवर्णस्य चाप्रत्ययः (अ० १।१।६९), इति।

१. महा० ३।३।१०८ वा० ४ ॥
२. महा० ८।४।४८ वा० ३ ॥

### ३. ५. ३. विभक्तिनिर्देशः—

(१०) तमिति विकारः (वा प्रा० १।१३३)—प्रातिशाख्ये विकारो द्वितीयया विभक्त्या निर्दिश्यते। विकारिनिर्देशस्त्वत्र प्रथमया क्रियते। पाणिनिः स्वशास्त्रे स्थानिनिर्देशं षष्ठ्या, आदेशनिर्देशं च प्रथमया करोति, तत्र च स्थान्यादेशभावं प्रतिपादयितुं—षष्ठी स्थानेयोगा (अ० १।१।४६) इति परिभाषा समाश्रीयते।

(११) तस्मिन्निति निर्दिष्टे पूर्वस्य (वा० प्रा० १।१३४)—सप्तम्या निर्दिष्टे पूर्वस्य कार्यं भवति। पाणिनीयाष्टकेऽपि—तस्मिन्निति निर्दिष्टे पूर्वस्य (अ० १।१।६६) इति सूत्रं समानानुपूर्वीकम् उपलभ्यते। इयं परिभाषा न सार्वत्रिकीति ऋद्धनोः स्ये (अ० ७।२।७०) इति सूत्रन्यासेन ज्ञाप्यते। तथा चाह बालमनोरमाकारः—ऋत्हन् अनयोर्द्वन्द्वात् पञ्चम्यर्थे षष्ठी, स्ये इति षष्ठ्यर्थे सप्तमी[1]—इति।

(१२) तस्मादित्युत्तरस्यादेः (वा० प्रा० १।१३५)—पञ्चम्या निर्दिष्टे उत्तरस्यादेः कार्यं भवति। पाणिनीयशास्त्रे तु द्वाभ्यां परिभाषाभ्याम् एतत् कार्यं साध्यते। तथा हि—तस्मादित्युत्तरस्य (अ० १।१।६७), आदेः परस्य (अ० १।१।५४) इति। इयमपि परिभाषा न सार्वत्रिकी, व्यभिचारदर्शनात्, तथा हि—दीर्घात् पदान्ताद् वा (अ० ६।१।७५)। तथा च—षष्ठीस्थाने व्यत्ययेन पञ्चमी[2]—इति कैयटोक्तिः सङ्गच्छते।

(१३) षष्ठी स्थानेयोगा (वा० प्रा० १।१३६) अयं योगो वाजसनेयिप्रातिशाख्ये पाणिनीयाष्टके च समानानुपूर्व्या निर्दिश्यते। अनियतसम्बन्धा षष्ठी स्थानेन युज्यते इति वैयाकरणाः। अतोऽत्रोपप्रदर्शितम् उदाहरणम्—एकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्वोष्ठयोरुत्तरा (वा० प्रा० १।७३) इति न सङ्गच्छते, अवयवसम्बन्धस्य नियतत्वात्।

(१४) तेनेत्यागमः (वा० प्रा० १।१३७)—वाजसनेयिप्रातिशाख्ये तृतीयान्तेन पदेनागमो निर्दिश्यते। पाणिनिना त्वागमाः प्रथमया

---

१. बालमनोरमा ७।२।७० ॥

२. प्रदीप १, १।६७ ॥

विभक्त्या निर्दिष्टाः। तत्र च लिङ्गानुसञ्जनात् स्थानमपि नियम्यते। आगमानां पूर्वपरावयवत्वानवयवत्वविषये सूक्ष्मेक्षिका दृश्यते वैयाकरणानाम्।

### ३. ९. ४. स्थाननिर्देशः—

(१५) अन्तरेण पर्वणी, पर एकस्मात् (वा० प्रा० १।१३८, १३९)–पर्वशब्देन पदम् उच्यते।[1] प्रातिशाख्यमतेन ह्यागमः पदयोर्मध्ये भवति, एकपदे विधीयमानस्त्वागमः पदात् परो भवति। पाणिनिस्तु–आद्यन्तौ टकितौ (अ० १।१।४६), मिदचोऽन्त्यात् परः (अ० १।१।४७) इति द्वाभ्यां परिभाषाभ्याम् आगमान् नियमयति।

(१६) उभयोर्विकारः (वा० प्रा० १।१४०)—विकार उभयोर्भवत्यन्तरेण पर्वणी च पदान्तपदाद्योरित्यर्थः। **एकस्य वा वर्णस्य निर्दिश्यते**[2] इत्युवटः। अनन्तस्तु–**विकार उभयोर्भवति पूर्वपरयोः स्यादित्यर्थः। उभयोरिति सम्भवाभिप्रायेण, तेन कुत्रचिदेकस्यापि भवति**[3]–इति। पाणिनिः खलु–अलोऽन्त्यस्य, ङिच्च, आदेः परस्य, अनेकाल्शित् सर्वस्य (अ० १।१।५२–५५) इत्येतैः परिभाषासूत्रैरादेशानां स्थानानि निर्दिदेश।

### ३. ९. ५. कालनिर्देशः—

(१७) ह्यन्तराः कालाः (वा० प्रा० ३।५)–प्रातिशाख्यकारः कात्यायनः परकालसन्धिं पूर्वकाले निवारयति, तत्र पूर्वपरव्यवस्था 'हि' शब्देन क्रियते। तथा च–हि (वा० प्रा० ४।१०,१२४) इति सूत्रं द्विः क्रियते पूर्वपरव्यवस्थार्थम्। कालशब्दश्चात्र स्थानपर्याय इति व्याख्याकारौ। पाणिनीयतन्त्रे–पूर्वत्रासिद्धम् (अ० ८।२।१) इतिसूत्रेणैतत् प्रयोजनं साध्यते।

अथातोऽग्रे नियमकारिण्यः परिभाषा उल्लिख्यन्ते—

### ३. ९. ६. यथासन्ननियमः—

(१८) विकारी यथासन्नम् (वा० प्रा० १।१४२)–विकारी

---

१. वा० प्रा० १।१३८ उ० भा०, अ० भा०। तु०–एकपर्वसु चानेकपर्वसु च–निरु० २।२॥ २. वा० प्रा० १।१४० उ० भा०॥
३. वा० प्रा० १।१४० अ० भा०॥

(स्थानी) यथासन्नम् (सदृशतमम्) आपद्यते । पाणिनीयतन्त्रेऽपि-स्थानेऽन्तरतमः (अ० १।१।५०) इति स्थाने प्राप्यमाणानां मध्ये सदृशतम आदेशो नियम्यते । सादृश्यं च स्थानार्थगुणप्रमाणतः स्वीक्रियते वृत्त्यादिषु ।

### ३.५: ७. यथासंख्यनियम —

(१९) संख्यातानामनुदेशे यथासंख्यम् (वा० प्रा० १।१४३)-समानसंख्यानां यः पश्चाद् उद्देशः स यथासंख्यं भवति । पाणिनिरपि-यथासंख्यम् अनुदेशः समानाम् (अ० १।३।१०) इति परिभाषयति । **संख्याशब्देनात्र क्रमो लक्ष्यते**[1] इति वृत्तिः । नायं नियमः सार्वत्रिक इति वृत्तिभाष्यानुशीलनात् प्रकटीभवति ।

### ३. ५. ८. सन्निकृष्टनियमः—

(२०) सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टस्य (वा० प्रा० १।१४४) -सन्निकृष्टविप्रकृष्टयोरुदाहरणयोः सन्निकृष्टोदाहरणस्य कार्यं प्रत्येतव्यम्, न तु विप्रकृष्टस्य । उदाहरणविषयिकेयं परिभाषेत्युवटानन्तौ । पाणिनेः साक्षाद्वचनम् एतत्समानार्थकं नोपलभ्यते ।

### ३. ५. ९. उत्तरनियमः—

(२१) पूर्वोत्तरयोरुत्तरस्य (वा० प्रा० १।१४५)-पूर्वोत्तरयोर्युगपत् कार्ये प्राप्त उत्तरस्यैव भवति, न पूर्वस्य । स्वरविषयकमेतत् सूत्रम् इत्युवटः । मृग्यम् उदाहरणम् इति व्याहृतवानप्युवट उदाजहार । तदुदाहरणं तु न स्पष्टम् ।

### ३. ५. १०. बलवन्नियमः—

(२२) विप्रतिषेध उत्तरं बलवदलोपे (वा० प्रा० १।१५९)-तुल्यबलविरोधे उत्तरशास्त्रं बलवद्, लोपं वर्जयित्वा । अयं योगः पाणिनीयस्य-विप्रतिषेधे परं कार्यम् (अ० १।४।२) इति योगस्य संशोधितरूप इव प्रतीयते । प्रातिशाख्यपरिभाषाशरीरे लोपप्रतिषेधप्रवेशाद् न तत्रास्याः प्रवृत्तिः । पाणिनिना यद्यपि कण्ठतो लोपो न प्रतिषिध्यते, तथापि-प्रत्ययलोपे प्रत्ययलक्षणम् (अ० १।१।६२) इति सूत्रेण

१. का० १।३।१० ॥

ज्ञाप्यते—**सर्वविधिभ्यो लोपविधिर्बलीयान्**[1]—इति ये पूर्वविप्रतिषेधा अपि वार्त्तिककारेणोट्टङ्कितास्ते परशब्दस्येष्टवाचित्वात् समाधीयन्ते पतञ्जलिना ।

**३. ५. ११. सन्धिनियमः—**

(२३) पदान्तपदाद्योः सन्धिः (वा० प्रा० ३।३)—प्रातिशाख्ये पदादि-पदान्तयोः सन्धिः प्रतिपाद्यते । पाणिनीयतन्त्रे तु पदमध्येऽपि सन्धिः सामान्येन विधीयते । प्रातिशाख्यकृत् कात्यायनः पदमध्येऽपि क्वचित् सन्धि-कार्याणि विधाय[2] स्वपरिभाषायाः सापवादत्वं विज्ञापयति ।

**३. ५. १२. परकालनियमः—**

(२४) न परकालः पूर्वकाले पुनः (वा० प्रा० ३।४)—हिनिर्देशात् परैः सूत्रैर्निर्दिष्टेषु कार्येषु सम्पन्नेषु पुनः हिनिर्देशात् पूर्वसूत्रैः प्राप्तेषु, परनिर्दिष्टानि कार्याणि न सम्पन्नानीति मन्तव्यम् । अत्र-पूर्वत्रासिद्धम् (अ० ८।२।१) इति पाणिनीया परिभाषा प्रातिशाख्यकारेण स्वशब्दैरनूदितेति प्रतीयते ।

**३. ५. १३. स्वरविषयिका: परिभाषाः**—(२५) (वा० प्रा० १।१४८-१५०) स्वरविमर्शे विवेक्ष्यन्ते ।

**३. ५. १४. आद्यन्तवद्भावः—**

(२६) स एवादिरन्तश्च (वा० प्रा० १।५२)—असहायवर्णस्य पदस्यापृक्तसंज्ञां विधाय प्रातिशाख्यकारः कात्यायनोऽतिदिशति—स एवैको वर्णः पदसंज्ञकः सन् पदादिसम्बन्धीनि पदान्तसम्बन्धीनि च कार्याणि लभते । पाणिनिरपि—आद्यन्तवद् एकस्मिन् (अ० १।१।२१) इति सूत्रम् एकस्मिन्नाद्यन्तकार्यातिदेशार्थम् आरेभे ।

**३. ५. १५. पदान्तातिदेशः—**

(२७) अवग्रहः पदान्तवत्, न त्वितिकरणम् (वा० प्रा० १।१५३, १५४) अवग्रहे नाम समासपूर्वपदे पदान्तसम्बन्धीनि कार्याणि क्रियन्ते, इतिकरणं विहाय । पाणिनेरयमविषयः ॥

—:०:—

---

१. सीर० परि० १११ ॥ २. वा० प्रा० ३।४८, ५५ ॥

चतुर्थोऽध्यायः

# ४. स्वरविमर्शः

## ४. १. स्वरस्वरूपम्

स्वरशब्दः संस्कृतवाङ्मये वहुष्वर्थेषु[१] प्रयुज्यमानोऽपि वेदाङ्ग-शास्त्रेषु प्रधानतो द्वयोरर्थयोर्नियम्यते—वर्णविशेषे, वर्णधर्मे चेति। **स्वयं राजन्ते इति स्वराः**[२]—इति व्युत्पत्त्या ह्यकारादयो वर्णाः स्वर-शब्देन संज्ञायन्ते। **स्वर्यन्तेऽर्था एभिः**[३]—इति व्युत्पत्त्या च वर्णधर्मा उदात्तादयः स्वरशब्देनाभिधीयन्ते। स्वरसंज्ञा पूर्वस्मिन्नध्याये परा-मृष्टा, अत्र तु वर्णधर्मः स्वरः परामृश्यते। तद् अस्य स्वरूपं तावद् निरूप्यते।

**नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणो नाम वायुरूर्ध्वमाक्रामन्नुर-आदीनां स्थानानाम् अन्यतमस्मिन् स्थाने प्रयत्नेन विधार्यते**[४] -इति शिक्षावचनेन ध्वन्युत्पत्तिविषयकं प्राचीनमतम् उपस्थाप्यते। एतच्चा-र्वाचीनमतेन संवदते। तथा हि—श्वासाशयाद् वहिर्निर्गच्छन् प्राणः कण्ठप्रदेशस्थस्वरयन्त्रस्यावयवविशेषान् स्वरतन्त्रीसंज्ञकान् प्रेरयति, तत्कम्पवशात् तथैव ध्वनिर्जायते यथा वीणादिभिः। अयमेव ध्वनिः स्थानकरणादिभेदाद् अकारादिभेदान् आपद्यते। ध्वनेस्त्रयो धर्मा आधुनिकैर्ध्वनिविशेषज्ञैः स्वीक्रियन्ते—मात्रा, स्वरः, वलाघातश्च। तत्र ध्वनिविशेषस्योच्चारणे कालपरिमाणं मात्राशब्देनोच्यते, सा च ह्रस्व-दीर्घ-प्लुतभेदात् त्रिधा। वाक्ये पदे वा ध्वनिविशेषस्योच्चारणे प्राणाधिक्यनियोगो वलाघातः। स्वरतन्त्रीणां संकोचविकासाभ्यां यो ध्वनिगतो विशेषो जायते, स स्वर इत्यभिधीयते। स च स्वरो घोष-

---

१. वै० स्व० मी०, पृ० ५–८ ॥

२. महा० १।२।३० ॥

३. अ० को० भानुदीक्षितटीका १।६।४ ॥

४. सू० पा० शि०, पृ० १६। न्यास १।१।९ ॥

ध्वनिष्वेव सम्भवति, अघोषध्वनिषु स्वरतन्त्रीणां निष्क्रियत्वात्[१]।

वैयाकरणैर्यद्यपि स्वरोऽचां धर्म आस्थीयते[२], तथापि प्रातिशाख्यकारैरक्षरस्यायं धर्मः स्वीक्रियते। तथा च वाजसनेयिप्रातिशाख्यकारः प्रोवाच— व्यञ्जनं स्वरेण सस्वरम् (वा० प्रा० १।१०७) इति। अयमेव च युक्तः पक्षः, अनुस्वार–स्वरभक्तिङ्णनादिषु स्वरदर्शनात्[३]।

## ४. २. स्वरभेदाः—

व्याकरणस्योत्तरविद्यात्वात्[४] सर्ववेदपारिषदत्वाच्च[५] प्रधानत उदात्तानुदात्तस्वरितास्त्रय एव स्वरा वैयाकरणैः प्रतिपाद्यन्ते। प्रातिशाख्यकारैस्तु स्वरितभेदा अपि विस्तरेण प्रदर्श्यन्ते। तत्र–उच्चैरुदात्तः (अ० १।२।२९, वा० प्रा० १।१०८) इति व्याकरणप्रातिशाख्यसाधारणम् उदात्तलक्षणम्। उच्चैस्त्वं चाधिकरणप्रधानत्वात् समानस्थानावयवस्य गृह्यते वैयाकरणैः[६]। प्रातिशाख्येऽपि—**आयामशब्देनोर्ध्वगमनं गात्राणाम्**[७]–इत्युवटः। यद्यत्र गात्राणाम् इति शब्देन स्वरतन्त्रीणां ग्रहणम् उवटेनाभिप्रेयते, तर्हीदं व्याख्यानम् आधुनिकमतेन संवदतेतमाम्। नीचैरनुदात्तः—(अ० १।२।३०, वा० प्रा० १।१०९) इत्यनुदात्तलक्षणमपि साधारणमेवोभयत्र। अत्राप्यधिकरणशक्त्या समानस्थानाधमावयवे निष्पन्नो वर्णोऽनुदात्त इत्यभिधीयते। प्रातिशाख्ये च मार्दवेन[८] लक्षितः स्वरोऽनुदात्तः। मार्दवशब्देनाधोगमनं गात्राणामभिप्रेतम् इत्युवटः। अत्रापि यदि गात्रशब्दः स्वरतन्त्रीणाम् अभिधायकस्तर्हि महती सूक्ष्मेक्षिका प्रातिशाख्यकारस्य कात्यायनस्य प्रसिध्यति। समाहारः स्वरितः (अ० १।२।३१), उभयवान् स्वरितः (वा० प्रा० १।११०) इति स्वरितलक्षणमपि प्रायः समानमेव। एवं च उच्चैःश्रुतिरुदातः, नीचैः-श्रुतिरनुदात्तः, मध्यश्रुतिः स्वरित इति निष्कर्षः।

---

१. सामान्यभाषाविज्ञान, पृ० ५३ ॥
२. महा० १।२।३० ॥
३. स्व० सि च०, भूमिका पृ० २७ ॥
४. महा० १।२।३२ ॥
५. महा० ६।३।१४ ॥
६. महा० १।२।३० ॥
७. वा० प्रा० १।३१ उ० भा० ॥
८. वा० प्रा० १।३१ उ० भा० ॥

पाश्चात्त्यैर्विद्वद्भिर्व्हिटने-मैक्डानलप्रभृतिभिरप्ययमेव पक्षः सिद्धान्तरूपेण स्वीकृतः ।[1]

स्वरसिद्धान्तचन्द्रिकाया उपोद्घातलेखकेन शिवरामकृष्णशास्त्रिणा पूर्वोक्तं निष्कर्षं प्रत्याख्याय, ऋक्तैत्तिरीयप्रातिशाख्यप्रतिपादितं मतं स्थापितम्[2] । शास्त्रिमहोदयस्य मतमत्रानूद्य समीक्ष्यते—"व्याकरणं नामेयम् उत्तरा विद्या, सर्ववेदपारिषदं हीदं शास्त्रम् इत्यादिमहाभाष्यकारवचनैः, प्रातिशाख्यस्यैकशाखाविषयतया नियतार्थबोधकत्वाच्च पाणिनीय-व्याकरणापेक्षया प्रातिशाख्यप्रामाण्यं प्रकल्प्यते, तत्रापि प्रयोगाधीनो निर्णयः । प्रयोगावगतश्चोदात्तादीनां रूपभेद इत्थम्—उदात्तो मध्यमः स्वरः, तत उच्चः स्वरितः, नीचस्त्वनुदात्त इति । नैतद् एकस्यां शाखायाम् एकस्मिन् वा देशे, किन्तु सर्वस्यां सर्वत्र । नाप्येषान्धपरम्परा, शास्त्रानुगतत्वात् । यस्मिन् पदे यदक्षरम् उदात्तम् अनुदात्तं वा व्याकरणेनानुशिष्यते, तत्तथैव खल्वप्यध्ययनेऽधुनापि दृश्यते । उदात्तानुदात्तस्वरूपविषये विप्रतिषेधाभावेऽपि स्वरितस्वरूपविषये विप्रतिपत्तिः । स्वरितस्योच्चारणम् उदात्ताद् अप्युच्चैः सम्प्रदायानुगतम् उपलभ्यते । तच्च ऋक्तैत्तिरीयप्रातिशाख्याभ्यां तट्टीकाभ्याञ्चानुमोद्यते । तथा हि—

**तस्योदात्ततरोदात्तादर्धमात्रार्धमेव वा, अनुदात्तः परः शेषः स उदात्तश्रुतिः । (ऋ० प्रा० ३।४, ५)**

**उदात्तात् सकाशाद् उदात्ततरादावर्धमात्रा वेदितव्या । (ऋ० प्रा० ३।४ उ० भा०)**

**तस्यादिरुच्चैस्तराम् उदात्तादनन्तरे यावदर्धं ह्रस्वस्य । (तै० प्रा० १।४१)**

**तस्यादिरुच्चैस्तराम उदात्ततरम् उच्चार्यते । (तै० प्रा० १।४१ वैदिकाभरण)**

**उदात्तसमः शेषः (तै० प्रा० १।४२), अनन्तरो वा नीचैस्तराम् (तै० प्रा० १।४४), अनुदात्तसमो वा (तै० प्रा० १।४५), आदिरस्योदात्तसमः शेषोऽनुदात्तसम इत्याचार्याः (तै० प्रा० १।४६), सर्वः प्रवण इत्येके (तै० प्रा० १।४७) ।**

---

१. संस्कृत ग्रामर, पृ० २८; वैदिक ग्रामर, पृ० ७७ ।

२. स्व० सि० च०; उपोद्घात, पृ० १५–२१ ।।

एवमत्र सूत्रेषु पूर्वभाग उदात्ततरः, उदात्तसमः, उत्तरभागस्त्वनुदात्तसमः अनुदात्ततरः, उदात्तसमः, कृत्स्नोऽच् उच्च इति नानाविधाः स्वरितस्य दर्शिताः । पाणिनिसम्मतम् उदात्तरूपत्वं तु नैव प्रादर्शि । अपिच, पाणिनिः स्वरिते उदात्तात् श्रुतिप्रकर्षं सम्मनुते इत्येकस्मिन् पदे उदात्तद्वयसमावेशविधानेऽपि स्वरितद्वयसमावेशविधानाभावाज्ज्ञाप्यते । पाणिनीयं लक्षणं तु कूष्माण्डादिमन्त्राभिप्रायेण कम्पाभिप्रायेण वा प्रवृत्तम्[1]"–इति ।

व्याकरणापेक्षया स्वचरणविषये (न तु शाखाविषये)[2] प्रातिशाख्यस्य प्रामाण्यम् इति सत्यम्, अद्यत्वे सर्वशाखासु स्वरितस्योच्चत्वोपलब्धिरपि तथा स्याद्, परन्त्विदम् एवोच्चारणं पुरातनम् इत्यत्र किं मानम् ? सम्प्रदायाविच्छेद इति चेत्, न, सम्प्रदायविच्छेदस्य भवद्भिरपि स्वीकृतत्वात् ।[3] अतो यद्यपि नैवान्वपरम्परा, तथापि तैत्तिरीयप्रातिशाख्योक्तोच्चारणान्तरस्यानुपलम्भात् सम्प्रदायविच्छेदस्त्वनुमीयत एव । तत्र सिद्धान्तरूपेणाङ्गीकृतम् आचार्यमतं पाणिनीयमतेन तुल्यम् । तथा चाह श्रीनिवासः—

**आदिरस्योदात्तसमः शेषोऽनुदात्तसम इत्याचार्याः (तै० प्रा० १।४६) । तस्य स्वरितस्यादिर्ह्रस्वार्धकाल इति त्रिभाष्यरत्ने । इममेव सूत्रं तैत्तिरीयसम्मतम् इति च । उदात्तसम इति चापकृष्टोदात्तमिति विवक्षितम्, यथोच्चैस्तराम् इत्युत्कृष्टोदात्तत्वम्, न तूदात्तभिन्नत्वम्, समाहारः स्वरित इति लक्षणानुसारात्**[4]–इति । पाणिनीयतन्त्रस्य सर्ववेदपारिषदत्वे, कूष्माण्ड–कम्पादिषु च संकोचेऽपि, वाजसनेयिप्रातिशाख्यस्य (वा० प्रा० १।१२६), अथर्वप्रातिशाख्यस्य (अ० प्रा० १।१७) चान्यथाव्याख्यानं न युक्तं प्रतीयते । अतः पाश्चात्त्यविद्वद्भिर्व्हिटनेमैक्डानलप्रभृतिभिः कृतं यथाशास्त्रं विवेचनं न दोषावहम् । तेषां न युष्माकमिव वैदिकसम्प्रदायसिद्धोच्चारणश्रवणाहितः संस्कार इति स्वीकृतेऽपि, तेषु शास्त्रनिगूढरहस्यान्वेषणतत्पराया बुद्धेरभावो न शक्यते कल्पयितुम् ।

---

१. स्व० सि० च०, उपोद्घात पृ० १५-२१ ॥
२. प्रथमोऽध्यायो (पृ० ८–१०) द्रष्टव्यः ॥
३. स्व० सि० च०; उपोद्घात पृ० ३० ॥
४. स्व० सि० च०, पृ० १० ॥

पाश्चात्यविदुषां व्हिटने-मैक्डानलप्रभृतीनां वैदिकस्वरविषयिका धारणा तावद् उल्लिख्यते। वैकिस्वरस्त्रिविधः—उच्च उदात्तनामा, मध्यमः स्वरिताभिधः, नीचश्चानुदात्तसंज्ञकः । उदात्तो मूलतः सर्वोच्चः स्वर आसीद् इति तुलनात्मकभाषाशास्त्रेण सुव्यज्यते, विशेषतो यवनभाषास्वरो वैदिकोदात्तेन संवदते। अयं निष्कर्षः साम-मैत्रायणी-काठकसंहितासु प्रयुक्तेन उदात्तस्वराङ्कनप्रकारेणापि पुष्यते। ऋग्वेदे तूदात्तो मध्यमः स्वरः स्वरितापेक्षया नीच इति स्वराङ्कन-प्रकारेण प्रातिशाख्यविवरणेन च प्रकटीभवति । एतच्च पुरातनस्य संशोधनमेवं, यद्यप्यस्ति चिरकृतम्। स्वरितः क्षीयमाणः स्वरोऽस्ति पराधीनस्वभावक उदात्तानुदात्तसंक्रमण-परिचायकः। अयं चोदात्तानु-दात्तयोः समाहार इति पाणिनिः (अ० १।२।३१), अपि च, वा० प्रा० १।२६, अ० प्रा० १।१७) । ऋक्तैत्तिरीयप्रातिशाख्ययोर्मतेन स्वरितस्याद्यांश उदात्तापेक्षयोच्चः[1]-इति ।

अत्र पाश्चात्यानाम् उदात्तादिनिरूपणे शास्त्रविरोधः क्वचिद् अपि न दृश्यते । यत्तु तेषां भाषाविकासादिमतं, तदत्राप्रस्तुतमित्यास्तां तावत्।

## ४. ३. वैदिकस्वरस्य सङ्गीतात्मकता—

उदात्तादिस्वराणां संगीतप्रसिद्धैः षड्जादिस्वरैः कश्चन सम्बन्धो वर्त्तते न वेत्यत्र प्राचीनार्वाचीन-विदुषां वैमत्यं प्रतीयते । वैदिकः स्वरो मूलतः सङ्गीतात्मक आसीद्, एतच्च पद्यगतलये स्वरस्य प्रभा-वाद् अभिव्यक्तीभवति[2]-इति मैक्डानलः । भाषाविज्ञान-विशारदा गुणेप्रभृतयोऽपि संस्कृतभाषां सङ्गीतात्मकस्वरोपेतां मन्यन्ते[3]। तैत्ति-रीयप्रातिशाख्ये नारदीय-याज्ञवल्क्यादि-शिक्षाग्रन्थेषु चोदात्तादीनां षड्जादिभिः सङ्गीतस्वरैः सम्बन्धः प्रतिपादितो दृश्यते । दाक्षिणात्याः सङ्गीताभिज्ञा ईदृशं सम्बन्धं नाङ्गीकुर्वन्ति[4] । अस्मिन् विषये सिद्धेश्वरवर्मणा प्रभूतं विचारितम्[5], तत्सारमत्रोपस्थाप्यते ।

---

१, ए० ए० मैक्डानल : वैदिक ग्रामर, पृ० ७७; डब्यु० डी० व्हिट्ने: सस्कृत ग्रामर, पृ० २८ ॥ २. वैदिक ग्रामर, पृ० ७७ ॥

३. गुणे : तुलनात्मकभाषाविज्ञान, पृ० ६ ॥

४. स्व० सि० च०, उपोद्घात पृ० २७ ॥

५. क्रिटिकल स्टडीज़, पृ० १५६-१६९ ॥

पारिशिक्षा, याज्ञवल्क्यशिक्षा, नारदशिक्षा च सङ्गीतसप्तकस्योदात्तादिप्रभवत्वम् उद्घोषयन्ति। तथा हि—

**गान्धारको मध्यम उच्चजातः षड्जर्षभौ द्वौ निहतोद्भवौ स्तः।**
**सपञ्चमो धैवतको निषादस्त्रयः स्वराश्च स्वरितात्तु जाताः॥**
**पारि० ८३॥**

**तत्रापि नित्यो निहतश्च तेऽत्र क्षैप्रो निषादस्वरहेतवः स्युः॥**
**पारि० ८६॥**

**तथान्तिमस्वारकपादवृत्तौ स्यातां तथा धैवतहेतुभूतौ। पारि०८६॥**

**प्रश्लिष्टप्रातिहताभिधानौ स्यातां तथा पञ्चमकारणं तौ॥**
**पारि० ८५॥**

**अथानुदात्तौ यदि दीर्घह्रस्वौ हेतू च षड्जर्षभयोः क्रमेण॥**
**परि० ८८॥**

**उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ।**
**स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः॥ नारद०॥**

**गान्धर्ववेदे ये प्रोक्ताः सप्त षड्जादयः स्वराः।**
**त एव वेदे विज्ञेयास्त्रय उदात्तादयः स्वराः॥**

**उच्चौ निषादगान्धारौ नीचावृषभधैवतौ।**
**शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः॥ याज्ञ०॥**

एतेषाम् उद्धृतवचनानां व्याख्यात्रयं सम्भवति। तथा हि—

(१) शिक्षाकाराः सङ्गीतस्योदात्तादिस्वरप्रभवत्वम् आस्थितवन्त आधुनिका इव विद्वांसः। भाषासङ्गीतयोः कारणकार्यसम्बन्धस्य सङ्केता भरतनाट्यशास्त्रे (२८।६-१६), सङ्गीतरत्नाकरे (१।२।१), नारदीयशिक्षायां चोपलभ्यन्ते, परन्तु तत्रैवान्यथावर्णनोपलभ्भात् (कण्ठादुत्तिष्ठते षड्जः) कारणकार्यसम्बन्धो नासन्दिग्धः।

(२) सङ्गीतस्वरैरुदात्तादिस्वराणां सादृश्यस्थापनं भारतीयवाङ्मय उपलभ्यमानायाः कृत्रिमव्यवस्थायाः अन्यतमम् उदाहरणं वर्त्तत इति बर्नेलः (ऋक्तन्त्रव्याकरण पृ० ४७)। नारदीयशिक्षास्थप्रभवशब्देन कार्यकारणसम्बन्धः सम्भवति, न तु सादृश्यस्थापनम्। अपि च, प्रतीकात्मकस्थापनाभिप्रायेण शिक्षावचनं समञ्जसम्, अद्यत्वेऽपि तथा दर्शनात्।

(३) प्रतीकात्मकम् उपस्थापनम् एतत् स्यात् । भारतीयवैयाकरणैर्वैदिकस्वरे सङ्गीतात्मिकां घटनां निपुणं निरीक्ष्य सौवरी सत्यपि सा सङ्गीतविषयत्वेन वर्णिता ।

उवट-पतञ्जलि-कैयट-नागेशादयः स्वरं नादात्मकं (सङ्गीतात्मकं) श्वासात्मकं च मन्यन्ते[1] । तत्र प्राधान्यं नादात्मकस्यैव । तथा च—**आयामो दारुण्यम् अणुता खस्येत्युच्चैःकराणि शब्दस्य । अन्ववसर्गो मार्दवम् उरुता खस्येति नीचैःकराणि**[2]—इति । लक्षणयोः प्रोक्तायामान्ववसर्गौ दारुण्यमार्दवे च नादश्वासयोः समाने, कण्ठबिलस्याणुतोरुते तु नादस्वरेण विना न सम्भवत इति तस्यैव प्राधान्यम् । नादाख्यध्वनिजन्मनि वायुसंयोगस्य नान्तरीयकत्वाद् उवटादिग्रन्था उपपद्येरन् । **नादोऽनुप्रदानं स्वरघोषवत्सु**—इति तैत्तिरीयप्रातिशाख्यवचनमपि स्वरस्य नादात्मकताम् उपोद्बलयति[3] ।

## ४. ४. ०. स्वरप्रयोजनानि—

सोऽयमक्षरधर्मः स्वरः शिक्षाप्रातिशाख्यव्याकरणैः प्रयत्नेन प्रतिपादितः सुरक्षितश्च यान् प्रयोजनविशेषान् साधयति, ते सनिदर्शना अत्रोपन्यस्यन्ते । तथा हि—

**४. ४. १. भावविशेषबोधः**—स्वरविशेषैः प्रशंसा-निन्दा-क्रोध-प्रहासादिभावविशेषा अवबुध्यन्त इति प्रातिशाख्यव्याकरणाभ्याम् अवगम्यते । तद्यथा—राजा च प्रशंसायाम् (अ० ६।२।६३), चेलखेटकटुककाण्डं गर्हायाम् (अ० ६।२।१२६), आक्रोशे च (अ० ६।२।१५८), अनुदात्तं प्रश्नान्ताभिपूजितयोः (अ० ८।२।१००), स्वरितम् आम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु (अ० ८।२।१०३), एहि मन्ये प्रहासे लृट् (अ० ८।१।४६) ।

**४. ४. २. अर्थविशेष-बोधः**—वैयाकरणशिरोमणिभर्तृहरिः स्वरं शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतुं मन्यते । तथा चाह—

**सामर्थ्यमौचिती देशः कालो व्यक्तिस्वरादयः ।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥**[4] इति ॥

---

१. ऋ० प्रा० ३।१ उ० भा०; महा० १।२।२९-३०; तत्रैव प्रदीपोद्योतौ ॥
२. तै० प्रा० २२।९,१०; महा० १।२।२९-३० ॥
३. स्व० सि० च०; उपोद्घात पृ० ११ ॥ ४. वा० प० २।३१६ ॥

वेदविदां वरो वेङ्कटमाधवो वेदार्थस्य स्फुटीकरणे स्वरं तमसि दीपम् इव सम्मनुते, तथा चाभ्यधात् स्वरानुक्रमणिकायाम्—

**अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित् ।**
**एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्फुटा इति ॥**[1] इति ॥

मीमांसाभाष्यकारः शबरोऽपि मन्त्रार्थबोधे स्वरस्य महत्त्वमनुभवन्नाह—**अथ त्रैस्वर्यादीनां कथं समाम्नानम् इति । उच्यते, अर्थावबोधनार्थं भविष्यति**[2]-इति । महाभाष्यकारः पतञ्जलिस्तु शब्दानुशासनस्य मुख्यगौणप्रयोजनेषु —असन्देह—दुष्टः शब्द—इति निवेश्य स्वरमेवासन्देहदुष्टशब्दयोर्निवारणे निर्णायकम् उद्घोषयति[3] ।

व्याकरणे प्रातिशाख्ये चार्थमाश्रित्य प्रचुरं स्वरविधानम् उपलभ्यते । अष्टाध्यायी—वाजसनेयिप्रातिशाख्ययोः कानिचन वचनान्यत्र निदर्श्यन्ते—

क्षयो निवासे (अ० ६।१।२०१), जयः करणम् (अ० ६।१।२०२),
गाधलवणयोः प्रमाणे (अ० ६।२।४),पत्यावैश्वर्ये (अ० ६।२।१८) ।
अन्धो वीर्ये (वा० प्रा० २।३४), एता वर्णे (वा० प्रा० २।३५),
अह विनियोगे (वा० प्रा० ६।२१),एवावधारणे (वा० प्रा० ६।२२) ।

४. ४. ३. **पदवाक्यविभागः**—वेदानां संहितापाठो मौलिकः । तत्र पदविभागो वाक्यविभागश्च स्वरमाश्रित्य क्रियते । तथा चाह वेङ्कटमाधवः—**नामाख्यातविभागश्च स्वरादेवावगम्यते**[4]—इति । यदि स्वरम् अनादृत्य पदविभागः क्रियते, नासौ विद्वद्भिरनुमन्यते । तद्यथा—

**वने न वा यो न्यधायि चाकन् (ऋ० १०।२९।१)**

इत्यत्र शाकल्यस्य पदपाठः—

**वा यः—इति ।**

तत्राह निरुक्तकारो यास्कः—**वायो वेः पुत्रः । वेति च य इति च चकार शाकल्यः, उदात्तं त्वेवम् आख्यातम् अभविष्यद् असुसमाप्त-**

---

१. ऋग्वेदानु०स्वरानुक्रमणी ८।११ ॥
२. पू० मी० ६।२।३१ शा० भा० ॥ ३. महा० पस्पशा० ॥
४. ऋग्वेदानु०, उपोद्घातश्लोक ४ ॥

श्चार्थः[1]–इति । शाकल्यस्य पदपाठे स्वीकृते अधायि तिङन्तं–यद्वृत्तान्नित्यम् (अ० ८।१।६६) इति निघातप्रतिषेधाद् उदात्तं स्यात्, यत्तदोश्च नित्यसम्बन्धाद् अर्थोऽप्यपूर्णस्तिष्ठेत् ।

पदविभागवद् वाक्यविभागोऽपि स्वराधीनः । संहितापाठे पदविशेषः पूर्वस्मिन् वाक्येऽन्वयं प्राप्नुयात् परस्मिन् वेत्यत्र स्वरेण निर्णीयते । तद्यथा—

व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः
(मा० सं० १।२५)

इत्यत्र वर्षतुपदं पूर्वत्रान्वेति परत्र वेति सन्देहे, निघाताभावाद् न पूर्वान्वयीति निर्णयः । तथैव वधानपदस्यापि निघाताभावात् परवाक्यावयवत्वं निश्चीयते, अत एव देवपदनिघातः ।

### ४. ५. व्याकरणापेक्षया प्रातिशाख्यस्य प्रामाण्याधिक्यम्–

यद्यपि पाणिनीयतन्त्रे स्वरस्य साङ्गोपाङ्गनिरूपणं परिलक्ष्यते, स्वरप्रक्रिया च सुसंस्कृता, तथापि प्रातिशाख्यापेक्षया तस्य प्रामाण्यं हीनम् , सर्ववेदपारिषदत्वात् ।[2] सर्ववेदपारिषदं हीदं पाणिनीयतन्त्रम् इति न सर्वचरणगतस्वरादिविशेषाणां समावेशः शक्यतेऽत्र कर्तुम् । प्रातिशाख्यानां तु स्वस्वचरणोपलभ्यमानस्वरादिविशेषाणां सङ्ग्राहकत्वात् प्रामाण्याधिक्यम् अङ्गीक्रियते । वाजसनेयिप्रातिशाख्यतोऽत्र कतिपयान्युदाहरणानि निदर्श्यन्ते । तद्यथा—

(१) भूतिराद्युदात्तम् (वा० प्रा० २।२२) इति भूतिशब्द आद्युदात्तः । पाणिनीयमतेन—मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः (अ० ३।३।९६) इत्यन्तोदात्तः ।

(२) कदा न रिष्येम पूर्वम् (वा० प्रा० २।२३) इति कदाशब्द आद्युदात्तः । पाणिनीयमतेन तु प्रत्ययस्वरत्वाद् अन्तोदात्तः ।

(३) कृष्णो मृगसंयोगे (वा० प्रा० २।२४), नक्तोषासा, उषासानक्ता (वा० प्रा० २।४७) इत्यादीनां स्वरः पाणिनिना न साध्यते ।

---

१. निरु० ६।२८ ॥
२. महा० ६।३।१४

### ४. ६. स्वरप्रक्रिया—

पाणिनीया स्वरप्रक्रिया प्रातिशाख्यापेक्षया सूक्ष्मा। अस्ति च तत्र कारणम्। पाणिनीयं शास्त्रं सामान्येन लोकवेदयोः शब्दानां स्वरूप-निष्पादनाय प्रवृत्तम्, प्रातिशाख्यं पुनः स्वचरणे यथास्थितस्वरादिज्ञापनार्थम् आरब्धम्। तत्र पारिषदानां पदप्रकृतित्वात्[1] पदस्वराः परिनिष्ठिता एवान्वाख्यायन्ते प्रातिशाख्येन, न तु व्याकरणेनेव प्रकृतिप्रत्ययविभागं विधाय विशिष्टया प्रक्रियया स्वरूपत आक्रियन्ते। अत एव प्रातिशाख्यमपि स्वरस्वरूपबोधनार्थं व्याकरणमेव समाश्रयति। तथा चोक्तम् उवटेन-**प्रकृतिस्वरस्तु व्याकरणपठितोऽत्र गृह्यते**[2]-इति। द्वयुदात्त-त्र्युदात्त-प्रकृतिस्वराणां विधानं वाजसनेयिप्रातिशाख्ये क्रियते, परन्तु तत्र स्वरसञ्चारो व्याकरणानभिज्ञेन न शक्यते प्रवर्त्तयितुम्। अतो वेदकण्ठस्थीकरणमात्रतत्पराणां स्वल्पव्याकरणज्ञानवतां साक्षात् प्रयोगेणैव स्वरं जिज्ञासमानानां वैदिकपदभाजां कृतेऽयं प्रयासः व्यधायि प्राचार्यैरिति निष्कर्षः। अत्र च व्याख्याकृद्वचनम् उपोद्बलकम्। तथा हि—**आख्यातपदानभिज्ञस्यापि ज्ञानार्थम्**[3]-इति, **आमन्त्रितानभिज्ञस्यापि प्रत्ययार्थम्**[4]-इति चावोचद् उवटः।

### ४. ७. स्वरप्रकरणानि—

अष्टाध्यायी-वाजसनेयिप्रातिशाख्ययोः प्रतिपादितः स्वरोऽस्मिन्नध्याये परामर्क्ष्यते। अतः शास्त्रद्वयगतस्वरप्रकरणानि तावद् उल्लिख्यन्ते। तत्राष्टाध्याय्यां लाघव-प्रसङ्ग-पूर्वाचार्यानुरोधात् स्वरविषयो विभिन्नेषु स्थलेषु प्रकीर्णः। तथा हि—

संज्ञापरिभाषैकश्रुतिप्रकरणं प्रथमाध्यायस्य द्वितीये पादे (अ० १।२।२९-३८), अन्वादेशस्वरो द्वितीयाध्यायस्य चतुर्थे पादे (अ० २।४।३२-३४), प्रत्ययस्वरः प्रत्ययविधानसमकालं तृतीयाध्यायस्य प्रथमे पादे (अ० ३।१।३,४), प्रत्ययस्वरापवादाः षष्ठाध्यायस्य प्रथमे पादे (अ० ६।१।१५८-२२३), तत्रैव च प्रकृतिस्वरः समासोत्सर्गस्वर-

१. निरु० १।१७॥
२. वा० प्रा० ६।२४ उ० भा०॥
३. वा० प्रा० २।८ उ० भा०॥
४. वा० प्रा० २।१० उ० भा०॥

श्च। समासस्वरापवादाः षष्ठाध्यायस्य द्वितीये पादे, आम्रेडितस्वरः तद्विधानसमकालमेव (अ० ८।१।३), वाक्यस्वरोऽष्टमाध्यायस्य प्रथमे-पादे (अ० ८।१।१८-७४), यणेकादेशस्वरोऽष्टमाध्यायस्य द्वितीये पादे (अ० ८।२।४-६), प्लुतस्वरोऽपि तत्रैव (अ० ८।२।८२-१०७), सांहितिकस्वरोऽष्टमाध्यायस्य चतुर्थे पादे, प्रथमाध्यायस्य द्वितीये पादे च (अ० ८।४।६६-६७; १।२।३९-४०)। एतावान् स्वरस्य विषयः सप्ताशीत्यधिकत्रिशतसूत्रैः संगृहीतः पाणिनिना[1]।

वाजसनेयिप्रातिशाख्येऽपि स्वरविषयो विविधस्थलेषु प्रकीर्णः। तथा हि—संज्ञा-परिभाषा-कतिपयविधयः प्रथमेऽध्याये (वा० १।१०७-१३२), द्वितीयेऽध्याये यथाक्रमम् अनुदात्त-आद्युदात्त-द्व्युदात्त-त्र्युदात्त-सर्वोदात्त-सर्वानुदात्त-अन्तोदात्तस्वराः। षष्ठेऽध्याये सांहितिकस्वरः। तत्रापि प्रथमे सूत्रे आख्यातस्वरः, द्वितीयाद् दशमं यावत् चतुर्विंशतितमे चोपसर्गस्वरः, एकादशात् त्रयोविंशतितमं यावद् आख्यात-स्वरप्रकृतिभावः। तत्र त्रयाणां सूत्राणाम् (६।२०-२२) उदाहरणानि संहितायां नोपलभ्यन्ते।[2] एवं संकलय्य सर्वाणि स्वर-प्रतिपादकानि सूत्राणि पञ्चत्रिंशदुत्तरशतं वाजसनेयिप्रातिशाख्ये वर्त्तन्ते।

अथातो वाजसनेयिप्रातिशाख्ये प्रतिपादितं स्वरम् अवलम्ब्य स्वरो-ऽनुक्रमिष्यते। तत्र प्रतिप्रकरणं वाजसनेयिप्रातिशाख्य-सूत्रं प्रदर्श्य, तदनुगुणं पाणिनीयं वचनं तुलनारूपेणोपस्थापयिष्यते। अत्रोणादिकोष-शान्तनवफिट्सूत्र-महाभाष्यस्थवार्त्तिकादीन्यपि स्वरप्रक्रियासम्पूर्त्यर्थं यथावसरम् उपयोक्ष्यन्ते।

### ४. ८. ०. स्वरसंख्या—

वाजसनेयिप्रातिशाख्यकारः संज्ञाप्रकरणेऽतिसंक्षेपेण स्वरभेदान् संचख्यौ। तद्यथा—सप्त, त्रीन्, द्वौ, एकम् (वा० प्रा० १।२७-३०)। यद्यपि पाणिनिः स्वकीये तन्त्रे क्वचिद् अपि तादृशं निर्देशं न चकार, तथापि पाणिनीया आचार्याः क्वचित् स्वरसंख्यां निर्दिश्य नामग्राहं स्वरान् वर्णयन्ति। अतोऽग्रे वाजसनेयिप्रातिशाख्यसूत्राण्याधृत्य स्वरभेदा विविच्यन्ते।[3]

---

१. स्व० सि० च०, पृ० ३॥ २. वा० प्रा० ६।२० उ० भा०॥
३. प्रमाणांशोऽत्र वै० स्व० मी०, पृ० १२-१५ उद्धृतः॥

४. ८. १. सप्त (वा० प्रा० १।१२७)—

षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादा इति सप्तस्वराः सामसु प्रसिद्धा अत्रोल्लिख्यन्त इत्युवटः प्राह। ननु यजुर्वेदलक्षणप्रक्रमे उदात्तानुदातसंयोगे स्वरितोत्पत्तौ कः सामलक्षणप्रसङ्ग इति शङ्काम् उद्भाव्योवटः परिहरति—**अग्नौ यजुर्वेदेऽध्वर्योः सामगानं विहितम्—'नान्योऽध्वर्योर्गायेत्' (शत० ९।१।२।४३), अतोऽध्वर्युकर्तृकम् इति कृत्वा कश्चिल्लक्षणांशः कृतः सामसु**[1]—इति। भाषिकसूत्रे[2], नारदीयशिक्षायां[3] च सामगानोपयोगिन एते स्वराः प्रदर्श्यन्ते।

वाजसनेयिप्रातिशाख्यस्य व्याख्याकृद् उवटो परमतम् उल्लिखति—**अपरे त्वाहुर्जात्याभिनिहितक्षैप्रप्रश्लिष्टतैरोव्यञ्जनतैरोविरामपादवृत्ताः सप्तस्वरा अत्रावधार्यन्ते, ताथाभाव्यस्तु वाजसनेयिनां निवार्यते**[4]—इति।

महाभाष्यकारः पतञ्जलिरपि स्वरसप्तकं प्रकारान्तरेण प्रदर्शयामास। तथा हि—**सप्त स्वरा भवन्ति—उदात्तः, उदात्ततरः, अनुदात्तः, अनुदात्ततरः, स्वरितः, स्वरिते य उदात्तः सोऽन्येन विशिष्टः, एकश्रुतिः सप्तमः**[5]—इति। तत्रैव कैयटः प्राह—**स्वरितस्य भेदा जात्यस्वरादयोऽष्टौ, ते भाष्यकारेणाप्रकृतत्वाद् इह नोक्ताः**[6]—इति।

षट् स्वराः स्वरसिद्धान्तचन्द्रिकाकृतोऽभिमताः[7]। पञ्चस्वरव्यवहारो नारदीयशिक्षायां दृश्यते।[8] चातुःस्वर्यव्यवहारोऽपि लक्ष्यते। स चोदात्तानुदात्तस्वरितप्रचयान् आश्रित्य क्रियते[9]।

४. ८. २. त्रीन् (वा० प्रा० १।१२८)—

सुप्रसिद्धान् उदात्तानुदात्तस्वरितान् अभिलक्ष्यायं निर्देशःक्रियते। तथा चावोचद् उवटः—**उदात्तानुदात्तस्वरितान् यजुर्वेदे त्रीन् स्वरान्**

---

१. वा० प्रा० १।१२७ उ० भा०॥
२. भाषिकसूत्र ३।१६-१७॥
३. शि० सं०, पृ० ३९९॥
४. वा० प्रा० १।१२७ उ० भा०॥
५. महा० १।२।३३॥
६. प्रदीप १।२।३३॥
७. स्व० सि० च०, पृ० १४॥
८. शि० सं०, पृ० ४२२॥
९. शि० सं०, पृ० ३९७; तै० प्रा० २३।१८-२० वैदिकाभरणे॥

**आहुः**, तथा चोक्ता एव सन्तोऽनूद्यन्त एवेदानीम् **अपवादार्थम्**[1]-इति। वैयाकरणैर्बहुशस्त्रैस्वर्येण व्यवहारः क्रियते। तथा चाह महाभाष्यकारः—**यद्येवं त्रैस्वर्यं न प्रकल्पते। तत्र को दोषः? त्रैस्वर्येणाधीमहे इत्येतन्नोपपद्यते**[2]-इति। शाकल-माध्यन्दिन-काण्व-कौथुमसंहितासु त्रैस्वर्येणैवोच्चारणं लक्ष्यते। यद्यप्येतासु संहितास्वेकश्रुतिरपि समुपलभ्यते, तथापि तस्या उदात्तेऽनुदात्ते वान्तर्भावात् सा पृथङ् न परिगण्यते। नारदीयशिक्षायां[3], तैत्तिरीयप्रातिशाख्ये[4] चाह्वरकशाखायास्त्रैस्वर्यं वर्णितम्।

**४. ८. ३. द्वौ (वा० प्रा० १।१२९)—**

द्वौ स्वरावुदात्तानुदात्तौ भाषिकलक्षितौ शतपथब्राह्मण आहुः[5]-इत्यस्य सूत्रस्योवटकृतं व्याख्यानम्। प्रतिज्ञापरिशिष्टे[6]-**ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वरौ**-इति भाषिक-स्वरनाम्नैतौ प्रसिद्धौ। यद्यपि शतपथब्राह्मणे जात्यादिस्वरिता अपि लक्ष्यन्ते, तथापि ब्राह्मणग्रामन्यायेन[7] द्वावेव स्वरौ शतपथब्राह्मणे स्वीकृतौ। सम्प्रति स्वरविहीनरूपेणोपलभ्यमाने ताण्ड्यब्राह्मणे; चिरोत्सन्ने च भाल्लविब्राह्मणे शतपथवद् द्वौ स्वरावास्ताम् इति भाषिकसूत्रेण,नारदीयशिक्षया च सूच्यते। तथा हि—**शतपथवत् ताण्डिभाल्लविनां ब्राह्मणस्वरः**[8]-इति भाषिकसूत्रम्। नारदीयशिक्षायां खल्वपि—

**द्वितीयप्रथमावेतौ ताण्डिभाल्लविनां स्वरौ।**
**तथा शातपथावेतौ स्वरौ वाजसनेयिनाम्**॥[9] इति॥

**४. ८. ४. एकम् (वा० प्रा० १।१३०)—**

तानलक्षणमेकं स्वरमाहुर्यज्ञकर्मणि[10]-इत्युवटः। **अयं तानस्वर एक-**

---

१. वा० प्रा० १।१२८ उ० भा०॥

२. महा० १।२।३१॥

३. नारदीयशिक्षा १।१।११॥

४. तै० प्रा० २३।१६॥

५. वा० प्रा० १।१२९ उ० भा०॥

६. प्रति० परि० १।८॥ ७. महा० १।१।४७॥

८. भा० सू० ३।१५॥

९. शि० सं०, पृ० ३९८॥

१०. वा० प्रा० १।१३० उ० भा०॥

श्रुतिः[1]-इत्यनन्तः । तानोऽन्येषां ब्राह्मणस्वरः, तान एवाङ्गोपाङ्गानाम्[2] -इति वचनाभ्यां भाषिकसूत्रकारो ब्राह्मणान्तरेऽङ्गोपाङ्गेषु च तान-स्वरमेवाभिमेने । भाषायामप्येकश्रुतिविकल्प इति वृत्तिः[3] ।

## ४. ९. सौवर्यः संज्ञाः—

### ४. ९. १. उदात्तः, अनुदात्तः—

वाजसनेयिप्रातिशाख्ये पाणिनीयाष्टके चोदात्तानुदात्तसंज्ञाविधायके सूत्रे समानानुपूर्वीके उपलभ्येते । तद्यथा—उच्चैरुदात्तः (अ० १।२।२९; वा० प्रा० १।१०८), नीचैरनुदात्तः (अ० १।२।३०; वा० प्रा० १।१०९) । **उदात्तादिशब्दाः स्वरे वर्णधर्मे लोकवेदयोःप्रसिद्धाः**[4]—इति वृत्तिकारः । अत एवोवटो **वर्णधर्मस्य स्वरस्यैवोदात्तादिसंज्ञाः**[5]—इति व्याचष्टे । पाणिनीयतन्त्रे तु—**त इह तद्गुणेऽचि परिभाष्यन्ते**[6]—इति वृत्तिकारः संगिरते । महाभाष्यकारस्त्वज्ग्रहणं नानुवर्तयति, उदात्ता-दीनाम् अज्धर्मत्वाद्, व्यञ्जनानां च तदुपरागवशात् तथात्वप्रतीतेः । उदात्तादयो धर्मा अचामेवेति वैयाकरणाः, प्रातिशाख्ये तु क्वचिद् व्य-ञ्जनानाम् अपीति पुरस्तात् प्रदर्शितम् ।

अत्र श्रुतिगतप्रकर्षापकर्षाश्रयम् उच्चनीचत्वं नाभिप्रेयते, उपांशु-प्रयोगे लक्षणस्याव्याप्तेः, अनवस्थितत्वाच्चातिव्याप्तेः । अत एव महा-भाष्ये वृत्तौ च लक्षणान्तरं प्रोच्यते । तथा हि—**आयामो दारुण्यम् अणुता खस्येत्युच्चैःकराणि शब्दस्य ।**[7] **आयामो गात्राणां निग्रहः, दारुण्यं स्वरस्य दारुणता रूक्षता, अणुता खस्य कण्ठस्य संवृततोच्चैः-कराणि शब्दस्य । अन्ववसर्गो मार्दवम् उरुता खस्येति नीचैःकराणि शब्दस्य**[7] । **अन्ववसर्गो गात्राणां शिथिलता, मार्दवं स्वरस्य मृदुता स्नि-ग्धता, उरुता खस्य महत्ता कण्ठस्येति नीचैःकराणि शब्दस्य**[8]-इति एवमप्यायामादीनां श्रुतिप्रकर्षाद्यनुमेयत्वात्, तस्य चाव्यवस्थितत्वाद्

---

१. भा० सू० ३।२७ अ० भा० ॥
२. भा० सू० ३।२७-२८ ॥
३. का० १।२।३६ ॥ ४. का० १।२।२९ ॥
५. वा० प्रा० १।१०८,१०९ उ० भा० ॥
६. का० १।२।२९ ॥ ७. तै० प्रा० २२।९,१० ॥
८. महा० १।२।२९-३० ॥

अनैकान्तिकं लक्षणान्तरम् अपीति शङ्कां वार्त्तिककारः समादधाति- **सिद्धं तु समान-प्रक्रमवचनात्**[1]-इति । अस्यायमभिप्रायः-ताल्वादिषु हि भगवत्सु स्थानेषु वर्णा निष्पद्यन्ते । तत्र यः समाने स्थाने ऊर्ध्वभाग-निष्पन्नोऽच् स उदात्तसंज्ञो भवति, यश्च समाने स्थाने नीचभागनिष्प-न्नोऽच् सोऽनुदात्तसंज्ञ इति[2] । नागेशोऽप्यवोचत्—**वार्त्तिके प्रक्रमशब्देन स्थानं गृह्यते । ऊर्ध्वभागनिष्पन्न इत्यस्योर्ध्वभागावच्छिन्नवायुसंयोगेन निष्पन्न इत्यर्थः**[3]-इति ।

ऊर्ध्वाधरभागेषूच्चार्यमाणो हि स्वरो न श्रुतिसमकालमेव भेदेन गृह्यते, अपि त्वभ्यासेनैव । तथा च कैयटः प्राह—**अभ्याससमधिगम्य-श्चायं स्वरविशेषः षड्जादिवद् विज्ञेयः**[4]-इति ।

**४. ६. २. स्वरितः—**

वाजसनेयिप्रातिशाख्ये—उभयवान् स्वरितः (अ० १।११०) इति सूत्रेण, पाणिनीयतन्त्रे च—समाहारः स्वरितः (अ० १।२।३१) इति सूत्रेण स्वरितसंज्ञा विधीयते । प्रातिशाख्यकारो गुणस्योदात्तानु-दात्तसंज्ञे व्यधितेति-उभयगुणवान् स्वरितो गुण इत्यभिप्रेत्य स्वरितसंज्ञां विहितवान् । पाणिनिर्गुणिनोऽच उदात्तानुदात्तसंज्ञे विदधाविति तत्रा-स्ति सन्देहावसरः । अत एव तत्र शङ्काम् उद्भाव्य परिहरति वार्त्तिक-कारः—**सिद्धं त्वच्समुदायस्याभावात् तद्गुणसम्प्रत्ययः**[5]-इति । समा-हार इत्यत्र मत्वर्थीयोऽकार[6] इत्यचा सामानाधिकरण्यम् उपपद्यते । अयमेवार्थो वृत्तिकृता समासेनोपस्थापितः—**सामर्थ्याच्च लोकवेदयो-र्गुणावेव वर्णधर्मावुदात्तानुदात्तौ गृह्येते नाचौ । तौ समाह्रियेते यस्मि-न्नचि तस्य स्वरित इत्येषा संज्ञा विधीयते**[7]-इति ।

अत्र—उभयवान् स्वरितः (वा० प्रा० १।११०) इति कात्या-यनीयसूत्रं, समाहारः स्वरितः (अ० १।२।३१) इति पाणिनीयसूत्रा-पेक्षया ज्यायः, अचिरेणार्थबोधकत्वाद् इति विवेकः । पाणिनीयं सूत्रं संशोध्य प्रातिशाख्यकारेण स्वशास्त्रे निक्षिप्तम् इति प्रतिभाति । अन्तिमेऽध्याये एतद् विमर्क्ष्यते ।

---

१. महा० १।२।२९-३० वा० २ ॥ २. का०, प्रदीप १।२।२९-३० ॥
३. उद्योत १।२।२९-३० ॥ ४. प्रदीप १।२।२९-३० ॥
५. महा० १।२।३१ वा० ३ ॥
६. अ० ५।२,१२७ ॥ ७. का० १।२।३१ ॥

अस्मिन् गुणद्वयसमाहारे उदात्तानुदात्तयोर्विभाग उभयत्र प्रदर्श्यते। तद्यथा—तस्यादित उदात्तमर्द्धह्रस्वम् (अ० १।२।३२) इति पाणिनीयाष्टके, तस्यादित उदात्तं स्वरार्द्धमात्रम् (वा० प्रा० १।१२६) इति वाजसनेयिप्रातिशाख्ये । पाणिनीयतन्त्रेऽर्द्धह्रस्वपदेन ह्रस्वस्यार्द्धमात्रा द्योत्यते । तथा चाह महाभाष्यकारः—**मात्रचोऽत्र लोपो द्रष्टव्यः, अर्द्धह्रस्वम् इति**[1] । अर्द्धह्रस्वशब्दः प्रमाणवाची रूढिशब्द इति च तत्रैव कैयटोऽब्रवीत् । **अर्द्धह्रस्वम् इत्यर्द्धमात्रोपलक्ष्यते**[2]—इति वृत्तिकारः । हरदत्तजिनेन्द्रबुद्धी खल्वप्याहतुः—**ह्रस्वस्य हि मात्रा भवति, अतोऽर्द्धह्रस्वग्रहणेनार्द्धमात्रोपलक्ष्यते**[3]—इति । एवं महाभाष्य-प्रदीप-काशिका-पदमञ्जरीन्यासादिग्रन्थेषु सर्वस्य ह्रस्वदीर्घप्लुतस्वरितस्याद्यार्द्धमात्रोदात्तेति स्थितम्[4] । प्रातिशाख्यस्य स्वरार्द्धमात्रपदेन स्वरस्यार्द्धमात्रोदात्तेति द्योत्यते । तथा च ह्रस्वस्य स्वरितस्याद्यार्द्धमात्रोदात्ता, दीर्घस्य तु मात्रा, प्लुतस्य पुनरध्यर्द्धमात्रेति फलितम् । माध्यन्दिनसंहितायां स्वरिते उदात्तानुदात्तप्रविभागचिह्नविशेषयोः १ ३ इत्यनयोरभावोऽपि स्वरार्द्धोदात्तत्वे प्रमाणम् । अयं खलु मौलिको भेदोऽनयोः शास्त्रयोः । स्वरार्द्धमात्रापक्ष ऋक्प्रातिशाख्येऽपि विकल्पेन प्रदर्श्यते ।[5] उवटानन्तौ तु व्याकरणसंस्कार-प्रभावितत्वात् तदनुसारिणीं व्याख्याम् अकार्ष्टाम् ।

प्रातिशाख्यकारैः स्वरितस्य विभिन्नाः प्रभेदाः संकीर्त्तिताः । तत्राभिनिहितप्रश्लेषादीनां प्रतिशाखं भेदम् अभिसमीक्ष्य सर्वशाखानुग्राहकः पाणिनिः शाखाकृतभेदान् अनाश्रित्य—स्वरितो वानुदात्ते पदादौ (अ० ८।२।६) इत्यादिषु स्वरितपदेनैव सामान्यतो निर्दिदेश । वाजसनेयिप्रातिशाख्यम् अनुसृत्य स्वरितभेदा अत्र पाणिनीयवचनैः सह तुलनया सहिता उपस्थाप्यन्ते—

(१) **जात्यः**—एकपदे नीचपूर्वः सयवो जात्यः (वा० प्रा० १।१११) इति जात्यसंज्ञाविधायकं सूत्रम् । अयं स्वरितोऽन्यत्र[6] नित्य इति

---

१. महा० १।२।३२ ॥ २. का० १।२।३२ ॥
३. पद०, न्यास १।२।३२, पृ० ३१३ ॥
४. स्व० सि० च०, पृ० ६ ॥
५. ऋ० प्रा० ३।४ ॥
६. तै० प्रा० २०।२ ॥

स्मर्यते। वैयाकरणैर्यः स्वरितः–तित् स्वरितम् (अ० ६।१।१८५) इति सूत्रेण, न्यङ्स्वरौ स्वरितौ (फिट्० ७८) इत्यादि–फिट्सूत्रैश्च विहितः, स प्रातिशाख्यकारेण जात्यशब्देनाभिधीयते।

(२) **अभिनिहितः**—एदोद्भ्यामकारो लुगभिनिहितः (वा० १।११४) इत्यभिनिहित–संज्ञा विधीयते। एङः पदान्तादति (अ० ६।१।१०९) इति पाणिनीय एकादेशः प्रातिशाख्यकृता लोपेन साध्यते। एवंविध एकादेशे—स्वरितो वानुदात्ते पदादौ (अ० ८।२।६) इति सूत्रेण विहितः स्वरितः प्रातिशाख्येऽभिनिहितसंज्ञया व्यपदिश्यते।

(३) **क्षैप्रः**—युवर्णौ यवौ क्षैप्रः (वा० प्रा० १।११५) इति क्षैप्र–संज्ञा। इको यणचि (अ० ६।१।७७) इति यणि, उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (अ० ८।२।४) इत्यनेन उदात्तयणः परस्यानुदात्तस्य स्वरितः क्षैप्रसंज्ञाभाग् भवति प्रातिशाख्ये।

(४) **प्रश्लिष्टः**—इवर्ण उभयतोह्रस्वः प्रश्लिष्टः (वा० प्रा० १।११६) इति प्रश्लिष्टसंज्ञा। अकः सवर्णे दीर्घः (अ० ६।१।१०१) इत्युदात्तानुदात्तयोर्ह्रस्वेकारयोरेकादेशे, स्वरितो वानुदात्ते पदादौ (अ० ८।२।६) इति सूत्रेण विहितः स्वरितः प्रातिशाख्ये प्रश्लिष्टनाम्ना स्मर्यते।

(५) **तैरोव्यञ्जनः**—स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः (वा० प्रा० १।११७) इति सूत्रेण तैरोव्यञ्जनसंज्ञा विधीयते। एकस्मिन् पदे—उदात्तादनुदात्तस्य स्वरितः (अ० ८।४।६६) इति सूत्रेण विहितः स्वरितः प्रातिशाख्ये तैरोव्यञ्जनसंज्ञां लभते।

(६) **तैरोविरामः**—उदवग्रहस्तैरोविरामः (वा० प्रा० १।११८) इति तैरोविरामसंज्ञा। अवग्रहवचनात् समस्तपदेषु स्वरितोऽयं भवति, अवग्रहाभावे तु तैरोव्यञ्जन एव। उदात्तादनुदात्तस्य स्वरितः (अ० ८।४।६६) इति सूत्रेण विहितः स्वरितोऽवस्थाविशेषे तैरोविरामसंज्ञां भजते।

(७) **पादवृत्तः**—विवृत्तिलक्षणः पादवृत्तः (वा० प्रा० १।११९) इति योगेन पादवृत्तसंज्ञा विधीयते। पदयोर्विवृत्तिर्व्यक्तिः सन्ध्यभावः[1]।

**यथा—ध्रुवा असदन्नृतस्य मा० सं० २।६)।**

---

१. स्व० सि० च०, पृ० १७॥

उदात्तादनुदात्तस्य स्वरितः (अ० ८।४।६६) इति सूत्रेण विहितः स्वरितविशेषः प्रातिशाख्ये पादवृत्तसंज्ञां भजते ।

(८) **ताथाभाव्यः**—उदाद्यन्तो न्यवग्रहस्ताथाभाव्यः (वा० प्रा० १।१२०) इति सूत्रं ताथाभाव्यसंज्ञां विधत्ते । उदात्तादनुदात्तस्य स्वरितः (अ० ८।४।६६) इति प्राप्तस्य स्वरितस्य—नोदात्तस्वरितोदयम्० (अ० ८।४।६७) इति निषेधः । अयं स्वरितो माध्यन्दिनानां नोपलभ्यते, पदकाले तु ताथाभाव्यसंज्ञकः कम्पो भवति । तथा चोक्तम्—

**अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित् ।**
**ताथाभाव्यो भवेत् कम्पस्तनूनप्त्रे निदर्शनम् ॥**[1] इति ॥

**अन्येषामाचार्याणां मतेन त्वत्र पाठः**[1]—इत्युवटः प्राह । तथैव याज्ञवल्क्यशिक्षायाम् अप्युक्तम्—

**माध्यन्दिनविरोधी स्यात् ताथाभाव्यस्तु यः स्वरः ।**
**स्वरौ चैवात्र दृश्येते भिन्नोदात्तानुदात्तकौ ॥**[2] इति ॥

### ४. ९. ३. एकश्रुतिः—

यद्यपि पाणिनिकात्यायनौ स्वकीयाष्टाध्यायी–शुक्लयजुर्वेदप्रातिशाख्ययोरेकश्रुतिसंज्ञां न विदधाते, तथाप्युभयत्र तया व्यवहारः परिलक्ष्यते । तथा हि–एकश्रुति दूरात् सम्बुद्धौ (अ० १।२।३३)इति सूत्रेण पाणिनिः, स्वरितात् परमनुदात्तम् उदात्तमयम् (वा० प्रा० ४।१४०) इति सूत्रेण च प्रातिशाख्यकारः कात्यायन एकश्रुतिं विधत्तः । सेयम् एकश्रुतिर्वैयाकरणैः शिक्षाकारैः प्रातिशाख्यप्रवक्तृव्याख्यातृभिश्च नानारूपैः परिभाषिता । तत्र– **स्वराणाम् उदात्तादीनाम् अविभागो भेदतिरोधानम् एकश्रुतिः**[3]–इति वृत्तिकारो हरदत्तश्च । **उदात्तादिस्वरविशेषानुपलब्धिरकारादिवर्णमात्रावबोध एकश्रुतिः**[4]–इति जिनेन्द्रबुद्धिः । महाभाष्यकारस्त्वेकश्रुतेरुदात्तत्वानुदात्तत्वं ज्ञापकेन प्रतिषिध्य प्राह—**उदात्तानुदात्तयोर्मध्यम् एकश्रुतिरन्तरालं ह्रियते**[5]–इति । एक-

---

१. वा० प्रा० १।२० उ० भा० ॥
२. या० शि० पूर्वार्द्धं ८६ ॥
३. का०, पद०, १।२।३३ ॥
४. न्यास १।२।३३ ॥
५. महा० १।२।३३ ॥

**श्रुतिनिर्देशात् सिद्धम्**[1]-इति वार्त्तिकं व्याचक्षाणस्य भाष्यकारस्य, **एकश्रुतिः स्वरसर्वनाम, यथा नपुंसकं लिङ्गसर्वनाम**-इत्युक्तिरुदात्तादिभेदतिरोधानम् एकश्रुतिः[2] इति मतं पोषयति।

वाजसनेयिप्रातिशाख्यकारः खलु—स्वरितात् परम् अनुदात्तम् उदात्तमयम् (वा० प्रा० ४।१४०) उदात्तमयशब्दं प्रयुयुजे। प्रातिशाख्यप्रदीपशिक्षायां च तद्व्याख्याभूतः-**अनुदात्तम् एकमनेकं वाक्षरम् उदात्तवत्**[3]-इति ह्युदात्तवच्छब्दः प्रयुज्यते। तेनोदात्तमयशब्दः—तत्प्रकृतवचने मयट् (अ० ५।४।२१) इति प्राचुर्ये साधुरिति गम्यते। भाष्यकारोऽपि तन्त्रे तरब्निर्देश एकश्रुतेरुदात्तानुदात्तत्वम् अभ्युपगच्छति[4]।

एकश्रुतेरप्युदात्तानुदातत्वेऽभ्युपगत एकश्रुतिस्वरितयोः को विशेष इति चेत्, समाधीयते कैयटेन—**क्षीरोदकवद् उदात्तानुदात्तयोर्भेदतिरोधानम् एकश्रुतिः। स्वरिते तु विभागेनोपलब्धिः**[5]-इति। इत्थं च, उवटप्रदर्शितौ स्वरितस्य दृष्टान्तौ—**त्रपुताम्रयोः संयोगे धात्वन्तरस्य कांस्यस्योत्पत्तिः, गुडदध्नोरेकीभावे मार्जिकोत्पत्तिः**[6]—इत्येतौ विषमौ, महाभाष्यकृतोक्तश्च—**शुक्लगुणः शुक्लः, कृष्णगुणः कृष्णः, य इदानीम् उभयगुणः स तृतीयाम् आख्यां लभते कल्माष इति वा सारङ्ग इति वा**-इति दृष्टान्तः समीचीनः[7]।

## ४. १०. सौवर्यः परिभाषाः—

(१) स्वरितवर्जम् एकोदात्तं पदम् (वा प्रा० २।१)-सर्वस्मिन्नेव पदे एकमक्षरं स्वरितम् उदात्तं वा भवतीत्यभिप्रायः। परिभाषारूपेणेदं सूत्रम् उदात्तस्वरितविधायकेषु सूत्रेष्वन्वेति। पाणिनेस्तु-अनुदात्तं पदम् एकवर्जम् (अ० ६।१।१५८) इति सूत्रम् उपर्युक्तार्थप्रति-

१. महा० ६।४।१७४ वा० ४॥
२. प्रदीप १।२।३३॥
३ शि० सं०, पृ० २१६॥
४. महा० १।२।३३॥ ५. प्रदीप १।२।३३॥
६. वा० प्रा० १।१२६ उ० भा०॥
७. वै० स्व० मी०, पृ० २३,२४॥

पादकम्। अत्र चैकशब्दस्य संख्येयवाचकत्वाद् विशेषापेक्षायाम् अजेव संख्येयत्वेन सन्निधानात् सम्बध्यते। तत्रानुदात्तस्य वर्जनं व्यर्थम् इति तद्विरोधिना उदात्तस्वरितौ संख्येयाविति पर्यवस्यति।[1] अस्य योगस्य नियमविध्यधिकारत्वं निराकृत्य परिभाषात्वम् आतिष्ठन्ते आचार्याः[2]। सैषा परिभाषैकवर्जम् इति लिङ्गाद् उदात्तस्वरितविधिभिरेकवाक्यताम् आपद्यते, एक ग्रहणं च तत्र तत्र विधीयमानस्य स्वरस्योपलक्षणम्। तेन यस्मिन्नेकस्मिन् पदे सूत्रेण यावन्त उदात्ताः स्वरिता वा विधीयन्ते, तावतो वर्जयित्वा शिष्टास्तत्पदस्था अचोऽनुदात्ता भवन्तीति सूत्रार्थो निष्पन्नः[3]–इति श्रीनिवासः।

अत्र पदग्रहणाद् वाक्ये प्रतिपदं पृथक् स्वरो भवति। न चैवं पदसंज्ञानिर्वृत्तेः पूर्वं शेषनिघाताभावात् कुवल्या विकारः कौवलम्[4] इत्यत्र–अनुदात्तादेश्च (अ० ४।३।१४०) इत्यत्रोऽभाव इति वाच्यम्, पदग्रहणस्य परिमाणार्थत्वात्। एङः पदान्तादति (अ० ६।१।१०९) इत्यतः पदशब्देऽनुवर्त्तमाने पुनरत्र पदग्रहणाद् अस्य पदत्वं गौणम्–यस्य पदसंज्ञा भविष्यतीति–अभिप्रेतम्। तेन स्वरविधिसमकालम् एव शिष्टस्यानुदात्तत्वं भवति।

एषा सर्वा पर्यालोचना वाजसनेयिप्रातिशाख्यसूत्रस्यापि समाना, प्रायः समानानुपूर्वीकत्वात्। प्रातिशाख्यसूत्रम्, अष्टाध्यायीसूत्रापेक्षया स्फुटतरम् इति सुव्यक्तम्। अस्य हेतुश्चरमेऽध्याये उपस्थापयिष्यते।

(२) संहितावद् अवग्रहः स्वरविधौ परं च सर्वं चेदनुदात्तम् (वा० प्रा० १।१४८)।

(३) इतपरस्तिर्यङ्नीचोऽन्तोदात्ते मध्योदात्ते पर्वणि काण्वस्य-वा (वा० प्रा० १।१४९)।

(४) उदात्तमयोऽन्यत्र नीच एव (वा० प्रा० १।१५०)।

त्रयोऽपीमे परिभाषायोगा अवग्रहविषयम् अवलम्ब्य प्रोक्ताः। स

---

१. स्व० सि० च०, पृ० २०॥

२. महा०, का०, पद० ६।१।१५८॥

३. स्व० सि० च०, पृ० २०॥

४. ग्रामादित्वात् कुवलशब्द आद्युदात्तः, ततो गौरादित्वाद् ङीषि सत्यपि पदव्यपदेशाभावाद् आद्युदात्तत्वं न जह्यात्।

च पाणिनीयक्षेत्राद् बाह्य इति तत्समानवचनं पाणिनीयतन्त्रे नोपलभ्यते ।

## ४. ११. आद्युदात्तत्वम्—

(१) भूतिराद्युदात्तम् (वा० प्रा० २।२२)—माध्यन्दिनसंहितायां भूतिशब्दस्त्रिषु स्थलेषु (मा० सं० १२।६५; १८।१४; ३०।१७) उपलभ्यते । सर्वत्र चायम् आद्युदात्तः । पाणिनीयप्रक्रियया—स्त्रियां क्तिन् (अ० ३।३।९४) इति क्तिनि, ञ्नित्यादिर्नित्यम् (अ० ६।१।१९७) इत्याद्युदात्तत्वे प्राप्ते, मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः (अ० ३।३।९६) इत्यन्तोदात्तत्वम् । अथापि—क्तिच्क्तौ च संज्ञायाम् (अ० ३।३।१७४) इति क्तिच् कल्प्येत, ततोऽपि—चितः (अ० ६।१।१६५) इत्यन्तोदात्तत्वम् एव स्यात् । अत आद्युदात्तो भूतिशब्दो न संगृहीतः पाणिनिनेति स्पष्टम् ।

(२) कदा न रिष्येम पूर्वम् (वा० प्रा० २।२३)—पाणिनीयमतेन कदाशब्दः—सर्वैकान्यकियत्तदः काले दा (अ० ५।३।१५) इति दाप्रत्ययान्तः, प्रत्ययस्वरेणाऽन्तोदात्तः । माध्यन्दिनीयसंहितायाम् अन्तोदात्तोऽपि दृश्यते (मा० सं ३।३४; ८।२,३; ३३।२७) ।

(३) आमन्त्रितं च (वा० प्रा० २।२४) —अष्टाध्यायीमतेन—आमन्त्रितस्य च (अ० ६।१।१९८) इत्यामन्त्रितस्याद्युदात्तत्वं विधीयते ।

(४) तेनानन्तरा षष्ठ्येकपदवत् (वा० प्रा० २।१८)—यद्यप्ययं योगः प्रातिशाख्येऽनुदात्तप्रकरणे पठितः, तथाप्यस्य परिभाषारूपत्वाद् आमन्त्रितं च (वा० प्रा० २।२४) इत्यनेनान्वयः । तथा चावोचद् उवटः—**यदि षष्ठ्यन्तम् आमन्त्रितस्य विशेषणं भवति, अथैकपदवत् स्वरो भवतीति** । यथाप्रकरणम् अयं योगोऽग्रे विचारयिष्यते ।

(५) सुमङ्गल ··वसुदावन् (वा० प्रा० २।२०)—पदपूर्वम् आमन्त्रितम् अनानार्थे (वा० प्रा० २।१७) इत्यनुदात्तत्वे प्राप्तेऽयमारम्भस्तन्निषेधाय कल्पते, तत आमन्त्रिताद्युदात्तत्वं भवति । तत्र—सुमङ्गल सत्यराजन्, विकिरिद्र विलोहित, दरिद्र नीललोहित, श्रेयस्कर भूयस्कर, अम्बे अम्बिकेऽम्बालिके, शरव्ये ब्रह्मसंशिते, अग्ना३इ पत्नीवत्, मीढु-

ष्टम शिवतम, सहस्राक्ष शतेषुधे, वसुपते वसुदावन्-इत्येतेषु—आमन्त्रितं पूर्वमविद्यमानवत् (अ० ८।१।७२) इति पूर्वशब्दस्याविद्यमानवत्त्वाद् द्वयोरपि पदयोः षाष्ठिकम् आमन्त्रिताद्युदात्तत्वम् । न चात्र-नामन्त्रिते समानाधिकरणे० (अ० ८।१।७३) इत्यविद्यमानवद्भावप्रतिषेध इति वाच्यम्, सामान्यवचनाभावात् ।

मरुतो अश्विना, यव्ये गव्ये, द्यावापृथिवी उरो, लाजीन् शाचीन्-इत्यत्रामन्त्रिताद्युदात्तं छान्दसं प्रतीयते[1] ।

(६) इडोत्तराणि नव…इति च (वा० प्रा० २।२१)-पदसमुदाया अत्र न्यस्ताः । तत्राष्टमिकः (अ० ८।१।१९) निघातः प्राप्तः । पूर्वामन्त्रितस्याविद्यमानवत्त्वात् (अ० ८।१।७२)—आमन्त्रितस्य च (अ० ६।१।१९८) इत्याद्युदात्तत्वम् । नामन्त्रिते० (अ० ८।१।७३) इति प्रतिषेधस्तु सामान्यवचनविषयक इति पर्यायेषु न प्रवर्त्तते ।

सूत्रन्यस्तसमुदायेष्वन्त्यवर्जम् आद्यानि पदानि पादादौ वर्त्तमानत्वाद् आमन्त्रिताद्युदात्तानि (अ० ६।१।१९८), अपराण्यपि पूर्वस्यामन्त्रितपदस्याविद्यमानत्वात् तथैव । अन्तिमे तु पदसमुदाये ब्रह्मन्-शब्दस्य भिन्ने वाक्ये स्थितत्वात्—**समानवाक्ये निघातयुष्मदस्मदादेशाः**[2]—इति न्यायेन निघाताभावः, वाक्यादौ वर्त्तमानत्वाच्च षाष्ठिकम् (अ० ६।१।१९८) आमन्त्रिताद्युदात्तत्वम् ।

(७) कृष्णो मृगसंयोगे (वा० प्रा० २।२५)—कृष्णशब्दो नक्प्रत्ययान्तः[3] । प्रत्ययस्वरेणान्तोदात्तो माध्यन्दिनसंहितायां बहुषु स्थलेषु दृश्यते । आद्युदात्तस्तु त्रिषु स्थलेषु (मा० सं० २।१; २४।३०,३६) । **कृष्णस्यामृगाख्या चेत्**[4]-इति शान्तनवेन सूत्रेण छन्दसि मृगाख्यायां कृष्णशब्दस्यान्तोदात्तत्वं प्रतिषिध्यते, फलतस्तत्रायम् आद्युदात्त एव ।

(८) व्ययवांश्चान्तः (वा० प्रा० २।२६)-अन्तः-शब्दः स्वरादिषु (अ०, १।१।३७) पठ्यते । **स्वर् अन्तर् प्रातर् एतेऽन्तोदात्ताः पठ्यन्ते**[5]-इति तत्रैव वृत्तिः । अनव्ययम् अन्तशब्द औणादिकतन्प्रत्य-

---

१. महा० ३।१।८५ ॥
२. महा० ८।१।१८ वा० ५ ॥
३. उ० ३।४ ॥ ४. फिट् ११ ॥
५. का० १।१।३७॥

यान्तः,[1] नित्त्वाद् आद्युदात्तः (अ० ६।१।१९७) ।

(९) परः प्रधाने (वा० प्रा० २।२७)—स्वाङ्गशिटामदन्तानाम्[2]-इति फिट्सूत्रेणाद्युदात्तः परशब्दः। प्रत्युदाहरणस्य तु—घृतादीनां च[3]-इत्यन्तोदात्तत्वं स्यात् ।

(१०) मात्रा च परिमाणे (वा० प्रा० २।२८)—हुयामाश्रुभसिभ्यस्त्रन्[4]-इति त्रन्प्रत्ययान्तो मात्राशब्दः। नित्त्वाद् आद्युदात्तः (अ० ६।१।१९७)। प्रत्युदाहरणभूतस्तु मात्राशब्दस्तृजन्तस्य[5] मातृशब्दस्य तृतीयैकवचनान्तः। तत्र–उदात्तयणो हल्पूर्वात् (अ० ६।१।१७४) इति विभक्तेरुदात्तत्वम् ।

(११) दक्षिणा च (वा० प्रा० २।२९)—औणादिक[6] इनन्प्रत्ययान्तो दक्षिणशब्दः, नित्त्वाद् आद्युदात्तः (अ० ६।१।१९७) । यद्वा–छन्दसि च[7]-इति फिट्सूत्रेण विभाषाद्युदात्तः। यत्तु भट्टभास्करः–दक्षिणा दिगाख्यायाम्-इत्याद्युदात्तविधायकं सूत्रं स्वकीयवेदभाष्य[8] उल्लिलेख, तत् तस्यानुपलम्भात्, छन्दसि च-इत्यनेनैव गतार्थत्वाच्च न युज्यते ।[9]

(१२) न दशविश्वकर्मानिषद्येन्द्रस्यपातुसदःसद्भ्येषु (वा० प्रा० २।३०) दशविश्वकर्मशब्दयोः परतः–छन्दसि च[7]-इति विकल्पो व्यवस्थितः। निषद्य, इन्द्रस्य, पातु–इत्येतेषु परतो दक्षिणतः शब्द उपलभ्यते। स चातसुच्प्रत्ययान्तः (अ० ५।३।२८), सति शिष्टत्वाच् चित्स्वरेणान्तोदात्तः (अ० ६।१।१६३), सदः सद्भ्य इत्येतयोः परतो दक्षिणाशब्दः समासावयवभूतः–गतिकारकोपपदात् कृत् (अ० ६।२।१३९) इत्युत्तरपदप्रकृतिस्वरत्वे—धातोः (अ० ६।१।१६२) इत्यन्तोदात्तत्वे, विभक्तेश्चानुदात्तत्वे (अ० ३।१।४), धातुसकारस्योदात्तत्वे दक्षिणाशब्दो निहन्यते ।

---

१. उ० ३।८६ ॥
२. फिट् ३० ॥
३. फिट् २२ ॥
४. उ० ४।१६८ ॥
५. उ० २।९६ ॥
६. उ० २।५१ ॥
७. फिट् १० ॥
८. तै० सं० १।२।१३।२ भ० भा० ॥
९. स्व० सि० च०, पृ० २६३ ॥

(१३) कर्णः स्वाङ्गे (वा० प्रा० २।३१)–कर्णशब्द औणादिको न-प्रत्ययान्तः[1] । तत्र प्रत्ययस्य नित्त्वविधानाद् आद्युदात्तः (अ० ६।१।१९७) । अथवा—**स्वाङ्गशिटामदन्तानाम्**[2]—इति फिट्सूत्रेणाद्युदात्तः । कर्णो गर्दभः (मा० सं० २४।४०) इति प्रत्युदाहरणे तु कर्णशब्दो गर्दभविशेषणत्वाद्–अर्शआदिभ्योऽच् (अ० ५।२।१२७) इत्यच्प्रत्ययान्तः, चित्त्वाद् अन्तोदात्तः (अ० ६।१।१६३) ।

(१४) महो नपुंसके (वा० प्रा० २।३२)–सर्वधातुभ्योऽसुन्[3]–इत्यसुन्प्रत्ययान्तो महः शब्दः, नित्त्वादाद्युदात्तः । अथवा–**नब्विषयस्यानिसन्तस्य**[4]–इति शान्तनवसूत्रेणाद्युदात्तः । प्रत्युदाहरणभूतस्तु महशब्दः—**अजपि सर्वधातुभ्यः**[5]–इत्यच्प्रत्ययान्तः, घाजन्तश्च[6]–इति पुंस्त्वम्, चित्त्वाद् अन्तोदात्तः (अ० ६।१।१६३) ।

(१५) श्रवश्च (वा० प्रा० २।३३)—अयं शब्दोऽपि पूर्ववद् असुन्-प्रत्ययान्तः, नित्त्वाद आद्युदात्तः (अ० ६।१।१९७) । प्रत्युदाहरणं तु–पुंसि संज्ञायां घः प्रायेण (अ० ३।३।११८) इति घप्रत्ययान्तं, प्रत्ययस्वरेण (अ० ३।१।३) अन्तोदात्तम् ।

(१६) अन्धो वीर्ये (वा० प्रा० २।३४)–अन्धः शब्दः–अदेर्नुम् धौ च[7]—इत्यसुन्प्रत्ययान्तः, नित्त्वाद् आद्युदात्तः (अ० ६।१।१९७) । प्रत्युदाहरणं तु प्रातिपदिकस्वरेणान्तोदात्तः[8] ।

(१७) एता वर्णे (वा० प्रा० २।३५)–एतशब्दस्तन्प्रत्ययान्तः[9], नित्त्वाद् आद्युदात्तः(अ० ६।१।१९७) । अथवा **वर्णानां तणतिनितान्तानाम्**[10]–इत्याद्युदात्तः । प्रत्युदाहरणं तु (एतदः स्त्रियां) अदिप्रत्ययान्तः[11], प्रत्ययस्वरेणान्तोदात्तः ।

(१८) रोहितश्च केवलः (वा० प्रा० २।३६)–रोहितशब्दोऽपि

१. उ० ३।१० ॥ २. फिट् ३० ॥
३. उ० ४।१८९ ॥ ४. फिट्० २७ ॥
५. महा० ३।१।१३४ वा० १ ॥
६. लिङ्गानुशासनम् ३७ ॥ ७. उ० ४।२०६ ॥
८. फिट् १ ॥ ९. उ० ३।८६ ॥
१०. फिट् ३३ ॥ ११. उ० १।१३३ ॥

तन्प्रत्ययान्तः[1], नित्त्वाद् आद्युदात्तः पूर्ववत् । अथवा–**वर्णानाम्**–इति पूर्ववद् आद्युदात्तः । 'केवल' विशेषणं तु न समीचीनं प्रतिभाति, रोहिताञ्जि (मा० सं० २६।५६) इत्यत्र बहुव्रीहावप्याद्युदात्तदर्शनात्, धूम्ररोहितः (मा० सं० २४।२) इत्यादिषु प्रत्युदाहरणेषु समासस्वरस्य (अ० ६।१।२२३) सति शिष्टत्वाच्च ।

(१६) यन्त्री राट् (वा० प्रा० २।३७)—यन्त्री–शब्दएकस्यामेव कण्डिकायां **यन्त्री राड् यन्त्र्यसि यमनी** (मा० सं० १४।२२) इति द्विः प्रयुज्यते । तत्र प्रथम आद्युदात्तः, द्वितीयस्त्वन्तोदात्तः । आद्युदात्तो यन्त्रीशब्दो यच्छतेस्तृनि (अ० ३।२।१३५), ङीपि (अ० ४।१।५), नित्त्वाद् आद्युदात्तः (अ० ६।१।१९७) । अपरस्तु प्रत्युदाहरणभूतो यन्त्रीशब्दस्तृचि (अ० ३।१।१३३) ङीपि (अ० ४।१।५), उदात्तयणो हल्पूर्वात् (अ० ६।१।१७४) इत्यन्तोदात्तः ।

(२०) ओषधीरनामन्त्रिते (वा० प्रा० २।३८)—ओषो धीयतेऽस्याम् इति–कर्मण्यधिकरणे च (अ० ३।३।९३) इति किः प्रत्ययः । ओषशब्दो घञन्तः, ञित्त्वाद् आद्युदात्तः (अ० ६।१।१९७) । गतिकारकोपपदात् कृत् (अ० ६।२।१३९) इत्युत्तरपदप्रकृतिस्वरे प्राप्ते, दासीभारादिपाठात् (अ० ६।२।४२) पूर्वपदकृतिस्वरः, तेनाद्युदात्त ओषधिशब्दः । आमन्त्रितान्त ओषधिशब्दस्तु पदपूर्वत्वाद् (मा० सं० १२।८६) आष्टमिकेन निहन्यते (अ० ८।१।१९) ।

(२१) सर्वविश्वमानुषाशाः स्वाहा वाजः पयो नमः (वा० प्रा० २।३९)–सर्वशब्दः सर्वनिघृस्व०[2]–इत्युणादिसूत्रेणान्तोदात्तो निपातितः[3] । अत एव पाणिनिः—सर्वस्य सुपि (अ० ६।१।१९१) इत्याद्युदात्तत्वं विदधौ । अथवा–**स्वाङ्गशिटामदन्तानाम्**[4]–इति फिट्सूत्रेणाद्युदात्तत्वम् । विश्वशब्दः क्वन्प्रत्ययान्तः[5], नित्त्वाद् आद्युदात्तः (६।१।१९७)शिट्त्वाद् वा पूर्ववद् आद्युदात्तः । मानुषाशब्दः—मनोर्जातावञ्यतौ षुक् च (अ० ४।१।१६१) इत्यञ्प्रत्ययान्तः, ञित्त्वाद् आद्युदात्तः (अ० ६।१।१९७) शाङ्गरवाद्यञो ङीन् (अ० ४।१।७३)

---

१. उ० ३।९४ ॥
२. उ० १।१५३ ॥
३. प्रदीपोद्योतौ ६।१।१९१ ॥
४. फिट् ३० ॥
५. उ० १।१५१ ॥

इति ङीँस्तु छान्दसत्वान्न भवति। माध्यन्दिनसंहितायाम् आशाशब्दः सर्वत्र दिगभिधायी वर्त्तते। **आशाया अदिगाख्या चेत्**[1]–इत्यन्तोदात्त-विधानाद् दिगभिधायिनोऽस्याद्युदात्तत्वम् अर्थाद् आपद्यते। स्वाहा-शब्दः चादिषु (अ० १।४।५७) पठ्यते, तेन निपातसंज्ञकत्वाद्—**निपाता आद्युदात्ताः**[2]–इति फिट्सूत्रेणाद्युदात्तः। वाजशब्दो घञन्तः। कर्षात्वतो घञोऽन्त उदात्तः (अ० ६।१।१५९) इत्यन्तोदात्तत्वे प्राप्ते वृषादेः (अ० ६।१।२०३) आकृतिगणत्वाद् आद्युदात्तः। पयस्नमस्-शब्दा औणादिकासुन्प्रत्ययान्तौ[3], नित्त्वाद् आद्युदात्तौ (अ० ६।१।१९७)।

(२२) असि शिवा···इत्येतेषु (वा० प्रा० २।४०)—अत्राद्यम् उदाहरणत्रयम् एकस्यामेव कण्डिकायां (मा० सं० १।२७) दृश्यते। तथा हि—**सूक्ष्मा चासि शिवा चासि, स्योना चासि सुषदा चासि, ऊर्जस्वती चासि पयस्वती च।** सवत्रैव—तिङ्ङतिङः (अ० ८।१।२८) इति सूत्रेण प्राप्तस्य निघातस्य–चवायोगे प्रथमा (अ० ८।१।५९) इति प्रथमायास्तिङ्विभक्तेर्निघातस्य प्रतिषेधः। द्वितीया तिङ्विभक्तिस्तु निहन्यत एव। न चैकैकतिङन्तयुगलान्तर्गतद्वितीयतिङन्तमपि न निहन्येत, युगलान्तरवर्तितिङन्तापेक्षया तस्य प्राथम्याद् इति वाच्यम्, याभ्यां चवाशब्दाभ्यां समुच्चयादिर्विकल्पो वा द्योत्यः, तद्युक्ततिङन्तद्वयमध्ये प्रथमो न निहन्यते इति सन्निधिन्यायेन विज्ञानात्। एवं निघाते प्रतिषिद्धे, सिपः पित्त्वादनुदात्तत्वे (अ० ३।१।४), विकरणस्य चादादित्वाल्लुकि (अ० २।४।७२), धातुस्वरेण (अ० ६।१।१६२) आद्युदात्तोऽसि-शब्दः।

यत्ते इत्येतस्मिन् परतोऽसिशब्दस्त्रिः प्रयुज्यते (मा० सं० ५।९)। सर्वत्रैव च यद्वृत्तान्नित्यम् (अ० ८।१।६६) इति निघातप्रतिषेधः।

मधुमतीः (मा० सं० ७।२) इति शब्दे परतोऽप्यसिशब्दः–यद्वृत्तान्नित्यम् (अ० ८।१।६६) इति प्रतिषेधाद् न निहन्यते।

वर्चस्वान्–ओजिष्ठो–भ्राजिष्ठः (मा० सं० ८।३८, ३९, ४०) इत्येतेषु परतोऽसिशब्दः—चादिलोपे विभाषा (अ० ८।१।६३) इति प्रतिषेधाद् न निहन्यते।

---

१. फिट् १९॥ २. फिट् ८१॥ ३. उ० ४।१८९॥

शुष्मिणी (मा० सं० १९।७), भद्रवाच्याय (मा० सं० ३१।६१) इत्यनयोः परतोऽसिशब्दश्छान्दसत्वाद् न निहन्यते । पाणिनीयतन्त्रे नैतद्विषयकं साक्षाद् विधानं स्मर्यते ।

वन्द्यः, मेध्यः (मा० सं० २९।३) इत्येतयोः परतोऽसिशब्दः—चवायोगे प्रथमा (अ० ८।१।५९) इति प्रतिषेधान्न निहन्यते ।

यमः, आदित्यः, त्रितः, सोमेन (२९।१४) इत्येतेषु परतोऽसिशब्दो वाक्यादौ वर्त्तते । पदात् परत्वाभावान्निघाताभावः । न च **यमोऽसि, आदित्योऽर्वन्नसि**—इत्यत्र पदात् परस्य सत्त्वाद् निघातः स्यादेवेति वाच्यम्, **समानवाक्ये निघातयुष्मदस्मदादेशाः**[1]—इति वचनाद्, अत्र च वाक्यभेदस्य सत्त्वात् ।

स्वसाशब्दे परतोऽसिशब्दः—यद्वृत्तान्नित्यम् (अ० ८।१।६६) इति प्रतिषेधान्न निहन्यते ।

(२३) धनदारत्नधाभ्यां च (वा० प्रा० २।४१)—धनदा (मा० सं० ९।२८), रत्नधा (मा० सं० २६।२१) इत्येताभ्यां परोऽसिशब्दः—छन्दस्यनेकमपि साकाङ्क्षम् (अ० ८।१।३५) इति प्रतिषेधान्न निहन्यते ।

(२४) रायोऽपोषे, न भागमीशिषयोः(वा० प्रा० २।४२, ४३)—रै-शब्दः प्रातिपदिकस्वरेणान्तोदात्तः[2] । ऊडिदंपदाद्यप्पुम्रैद्युभ्यः (अ० ६।१।१७१) इत्यसर्वनामस्थानविभक्तिरुदात्ता । एवं शस्ङसिङस्विभक्तिपरको रायःशब्दोऽन्तोदात्तः । जसि पुनराद्युदात्त एव, विभक्तेरनुदात्तत्वात् (अ० ३।१।४) । पोषभागमीशिषेशब्देषु परतो रायः शब्दः षष्ठ्यन्तः, अतोऽन्तोदात्तः । तस्मात् पोषादिषु परत आद्युदात्तत्वस्य प्रतिषेधो युक्त एव ।

(२५) त्रिधा बद्धहितयोः (वा० प्रा० २।४४)–त्रिधाशब्दो माध्यन्दिनसंहितायां बद्धहितयोः परतो द्विः (मा० सं० १७।९१, ९२) प्रयुज्यते, तत्र चायम् आद्युदात्तः । यथापाणिनि तु—संख्याया विधार्थे धा (अ० ५।३।४२) इति प्रत्ययान्तत्वात् प्रत्ययस्वरेण (अ० ३।१।३)

१. महा० ८।१।१८ वा० ५ ॥
२. फिषोऽन्त उदात्तः । फिट् १ ॥

अन्तोदात्तः स्यात् । माध्यन्दिनसंहितायां पञ्चधा (मा० सं० ३४।११, सप्तधा (मा० सं० १७।७९) इत्यत्र न्याय्यस्वरस्योपलम्भाद् अत्र व्यत्ययः (अ० ३।१।८५) कल्प्यते ।

(२६) सुकृतं भूते (वा० प्रा० २।४५)–सुपूर्वात् करोतेः कर्मणि क्ते–गतिरनन्तरः (अ० ६।२।४९) इति पूर्वपदप्रकृतिस्वरे,—**उपसर्गाश्चाभिवर्जम्**[1]–इत्याद्युदात्तः सुकृतशब्दः । निष्ठा (अ० ३।२।१०२) इति भूते, तयोरेव कृत्यक्तखलर्थाः (अ० ३।४।७०) इति च कर्मणि विहितस्येदं ग्रहणम् । अन्यत्र–थाथघञ्क्ताजवित्रकाणाम् (अ० ६।२।१४४) इत्यन्तोदात्तः सुकृतशब्दः ।

(२७) पक्तीर्हंसयोरन्त उदात्त आदिर्वा (वा० प्रा० २।६४)–माध्यन्दिनकाण्वसंहितयोः पक्तिशब्दः सर्वत्राद्युदात्त एवोपलभ्यते । शाखान्तरदृष्ट्या प्रातिशाख्यकारेण व्यवस्थितो विकल्पो विहितः । पाणिनीयप्रक्रियया तु–मन्त्रे वृषेषपच० (अ० ३।३।९६) इत्यन्तोदात्तः पक्तिशब्दः । उत्सर्गविधिना तु क्तिनि (अ० ३।३।९४), नित्त्वाद् आद्युदात्तः (अ० ६।१।१९७) ।

हसशब्दः– स्वनहसोर्वा (अ० ३।३।६२) इत्यप्प्रत्ययान्तः । प्रत्ययस्य पित्त्वादनुदात्तत्वे (अ० ३।१।४) धातुस्वरेण (अ० ६।१।१६२) आद्युदात्तः । यद्वा हासशब्दो विकल्पेनाद्युदात्तः (अ० ६।१।२१६) तस्यैव छान्दसं ह्रस्वत्वम् ।

## ४. १२. ०. मध्योदात्तत्वम्—

प्रातिशाख्यकारेण द्व्युदात्तत्वं त्र्युदात्तत्वं च व्यधायि । तत्र स्वरूपतो न ज्ञायते—के द्वे उदात्ते, कानि वा त्रीण्युदात्तानि ? पाणिनिना तूभयपद–प्रकृति-स्वरत्वं युगपद् अनुशिष्टम् । तत्र द्वित्रोदात्तत्वस्य स्वरूपतो बोधो भवति ।

## ४. १२. १ द्व्युदात्तत्वम्—

(१) देवताद्वन्द्वानि चानामन्त्रितानि (वा० प्रा० २।४८)–पाणिनीयतन्त्रे–देवताद्वन्द्वे च (अ० ६।२।१४१) इति सूत्रं प्रातिशाख्यसूत्रेण

---

१. फिट् ८१ ॥

समानम् । तत्र प्रातिशाख्यसूत्र आमन्त्रितपर्युदासः सुखाववोधार्थः सन्नपि केषुचिद् अर्वाचीन-विद्वत्सु भ्रान्तिं जनयति । तथा हि— एतत् प्रावधानं परिपूरयति न्यूनतां पाणिनेरपि[1]-इत्यवोचद् विश्वबन्धुशास्त्री । पाणिनीयतन्त्रे-आमन्त्रितस्य च (अ० ६।१।१९८) इति विहितम् आद्युदात्तत्वं प्रकृतिप्रत्ययसमासादिस्वराणाम् अपवादः । तथा चाह श्रीनिवासः—**आमन्त्रितान्ते योऽन्यः स्वरः प्राप्तस्तस्य सर्वस्यायम् अपवादः**[2]-इति । **पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः**[3]-इति न्यायम् आश्रित्य, देवताद्वन्द्वे च—इत्येतावतैव पाणिनेः प्रयोजने सिद्धे, किमामन्त्रितपर्युदासेन ? प्रातिशाख्यकृता कात्यायनेनापि यदि स्पष्टाववोधार्थम् आमन्त्रितपर्युदासः कर्त्तव्य आसीत् तर्हि-द्विरुदात्तान्यनामन्त्रितानि-इत्याकारकम् अधिकारसूत्रं प्रणेयमासीत् । एवं च—**चशब्दाद् अधस्तन-सूत्रविहितान्यनामन्त्रितानि द्विरुदात्तानि भवन्ति, आमन्त्रितानि त्वामन्त्रितस्वरं लभन्ते**[4]-इति शब्दाधिक्याद् अर्थाधिक्यकल्पनां नाकरिष्यद् उवटः ।

देवताद्वन्द्वविषये पाणिनिकात्यायनयोः स्वल्पो भेदः प्रतीयते । तत्र प्रातिशाख्यकारः कात्यायनः-नक्तोषासा, उषासानक्ता, द्यावापृथिवी, द्यावाक्षामा, ऋतुदक्ष-इत्येतान् पाणिनिदृष्ट्या देवताद्वन्द्वान् बृहस्पत्यादिषु (वा० प्रा० २।४७) पपाठ । तत्रापि द्यावापृथिवीशब्दः पाणिनिना—द्यावापृथिवीशुनासीर० (अ० ४।२।३२) इति सूत्रे कण्ठतो देवताद्वन्द्वः प्रोक्तः । दिवो द्यावा (अ० ६।३।२९) इति संस्कारः, नोत्तरपदेऽनुदात्तादावपृथिवी० (अ० ६।२।१४२) इति स्वरश्चैनं देवताद्वन्द्वं घोषयतः । अपि च, प्रातिशाख्यकारो द्यावाभूमीशब्दं बृहस्पत्यादिषु न पपाठ, तत्स्वरो—देवताद्वन्द्वानि चानामन्त्रितानि (वा० प्रा० २।४८) इत्येव सिद्धः । पाणिनिः अग्नीन्द्रशब्दस्य (वा प्रा० २।५६) स्वरसंस्कारावुपेक्षते ।

दर्शनभेदाद् देवताभेद इति भगवतो यास्कस्य वचनाद् आक्षिप्यते । तथा हि—**यत्काम ऋषिर्यस्यां देवतायामार्थपत्यम् इच्छन् स्तुतिं प्रयुङ्क्ते,**

---

१. दिस प्राविज़न मेक्स अप फोर ए डेफ़िश्यंसि ईविन इन पाणिनि । अ० प्रा० भूमिका पृ० ३४ ॥

२. स्व० सि० च०, पृ० ३०३ ॥

३. महा० २।४।८५ ॥

४. वा० प्रा० २।४८ उ० भा० ॥

**तद्दैवतः स मन्त्रो भवति**[1]-इति। तथा च कामनाविशेषप्रेरितस्य कस्यचिद् ऋषेरार्थपत्यम् उद्दिश्य कस्याञ्चित् स्तुतिः, अपरस्यर्षेस्तु तत्रारुचिः—इति दर्शनभेदः स्पष्टः। ततोऽयं निष्कर्षः—अग्न्यादयः शब्दाः कदाचिद् देवताभिधायका भवन्ति, कदाचिन्न भवन्ति। यदा तावद् देवताभिधायकास्तदा देवतानिमित्तकान् स्वरसंस्कारान् लभन्ते। अत एवाचार्यः पाणिनिः स्वशास्त्रेऽग्नीषोमशब्दे[2] देवताप्राधान्यम् ऊरीकृत्य संस्कारम्[3] अनुशास्ति, तदप्राधान्यं चाङ्गीकृत्य स्वरम् (अ० ६।२।१४१) उपेक्षते।

(२) बृहस्पति' इति च (वा० प्रा० २।४७)-बृहस्पतिशब्दः—उभे वनस्पत्यादिषु युगपत् (अ० ६।२।१४०) इत्यत्र वनस्पत्यादिगणे पठितत्वाद् युगपत् पूर्वोत्तरपदयोः प्रकृतिस्वरत्वं भजते। तत्र बृहच्छब्दोऽन्तोदात्तो[4] निपात्यते। पतिशब्दो डतिप्रत्ययान्तः[5] प्रत्ययस्वरेणाद्यु-दात्तः। तस्य **केचिद् आद्युदात्तत्वं वर्णयन्ति**[6]-इति वृत्तिः। षष्ठीसमासे, सुट् तलोपश्च।[7]

वनस्पतिशब्दस्य वनस्पत्यादिषु (अ० ६।२।१४०) उभयपदप्रकृति-स्वरत्वम्। वनशब्दः-**नब्विषयस्यानिसन्तस्य**[8]-इत्याद्युदात्तः। पति-शब्दोऽप्याद्युदात्तः पूर्वं प्रदर्शितः। पारस्करादि-पाठात् (अ० ६।१।१५७) सुडागमः।

**नरा अस्मिन्नासीनाः शंसन्ति, नरा एनं शंसन्ति**[9]-इति नराशंस-शब्दो वृत्तौ व्युत्पादितः। वनस्पत्यादिपाठाद् उभयपदप्रकृतिस्वरः। नृधातोः—**कृतो बहुलम्**[10]-इति बाहुलकाद् अप्प्रत्ययः कर्तरि, धातु-स्वरेण (अ० ६।१।१६२) आद्युदात्तो नरशब्दः। शंसशब्दो घञन्तो ञित्त्वाद् आद्युदात्तः (अ० ६।१।१९७)। अन्येषामपि दृश्यते (अ० ६।१।१९७) इति दीर्घत्वम्।

---

१. निरु० ७।१॥
२. उभयपदप्रकृतिस्वरस्तु यथाशास्त्रम् अन्वाख्यायते॥
३. अ० ६।३।२७॥
४. उ० २।८५॥
५. उ० ४।५७॥
६. का० ६।२।१४०॥
७. महा० ६।१।१५७॥
८. फिट् २७॥
९. का० ६।२।१४०॥
१०. महा० ३।३।११३॥

तनूनप्तृशब्दः पाणिनीयतन्त्रे प्रकृतिस्वरप्रकरणे न निर्दिश्यते । वनस्पत्यादेराकृतिगणत्वाद् उभयपदप्रकृतिस्वरत्वं स्यात् । तत्र तनूशब्द आद्युदात्त इत्यनुपदं प्रदर्शयिष्यते । नप्तृशब्दस्तृन्नन्तः[1], नित्त्वाद् आद्युदात्तः (अ० ६।१।१९७) ।

तनूनपात्-शब्दस्य वनस्पत्यादिपाठाद् उभयपदप्रकृतिस्वरत्वम् । तनूशब्द ऊप्रत्ययान्तः[2] प्रत्ययस्वरेणान्तोदात्तः[3] । माध्यन्दिनसंहितायां केवलस्तनूशब्दोऽन्तोदात्तः, समासे तु सर्वत्राद्युदात्तः । अतएव **तस्याद्युदात्तत्वं निपातनात्**[4]–इत्यवोचत् श्रीनिवासः । हरदत्तोऽप्याह— **केचित्तु तस्याद्युदात्तत्वम् अत्र निपातयन्ति, तथा च तनूनपाद् उच्यते गर्भ आसुर इत्याद्युदात्तम् अधीयते**[5]–इति । नपाच्छब्दः—नभ्राणनपान्नवेदा० (अ० ६।३।७५) इत्यत्र पातेः क्विवन्त आद्युदात्तो निपात्यते[6] ।

नक्तोषासाशब्दः पाणिनिना न संगृह्यते । यद्वा-तन्मते देवताद्वन्द्वत्वाद् उभयपदप्रकृतिस्वरत्वम् । नोत्तरपदेऽनुदात्तादाव० (अ० ६।२।१४२) इति प्रतिषेधस्तु छान्दसत्वान्न प्रवर्त्तते । तत्र नक्तंशब्दो-**ग्रामादीनां च**[7]-इत्याद्युदात्तः, उषः-शब्दश्च-**उषः किच्च**[8]-इत्यसिप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तः ।

उषासानक्ताशब्दे द्वन्द्वत्वाद्—उषासोषसः (अ० ६।३।३१) इत्युषासादेशः । देवताद्वन्द्वत्वादत्रापि पूर्ववत् स्वरः ।

द्यावापृथिवीशब्दः पाणिनीयमतेन देवताद्वन्द्वः[9] । अतएव—देवताद्वन्द्वे च (अ० ६।२।१४१) इति प्रकृतिस्वरे प्राप्ते, नोत्तरपदेऽनुदात्तादावपृथिवी० (अ० ६।२।१४२) इति प्रतिषेधे पृथिव्यादावतिप्रसक्तिवारणाय पर्युदासः सङ्गच्छते । प्रातिशाख्यकारस्तु द्यावापृथिवीशब्दं देवताद्वन्द्वं नाभिमेने इति बृहस्पत्यादिष्विमं शब्दं पपाठ । अत्र दिवो द्यावा (अ० ६।३।२९) इति द्यावाशब्द आद्युदात्तो निपात्यते ।

---

१. उ० २।९२ ॥
२. उ० १।८० ॥ ३. का० ६।२।१४० ॥
४. स्व० सि० च०, पृ० २५२ ॥
५. पद० ६।२।१४० ॥ ६. का० ६।२।१४० ॥
७. फिट् ३८ ॥ ८. उ० ४।२३४ ॥
९. अ० ४।२।३२ ॥

पृथिवीशब्दः षिवन्प्रत्ययान्तः ।[1] षिद्गौरादिभ्यश्च (अ० ४।१।४१) इति ङीषि, प्रत्ययस्वरेणान्तोदात्तः ।

द्यावाक्षामशब्दोऽपि पाणिनीयैर्देवताद्वन्द्वोऽभिमत इति पूर्वपदस्य द्यावादेशाद् (अ० ६।२।२६) अनुमीयते । तथा च—देवताद्वन्द्वे च (अ० ६।२।१४१) इत्युभयपदप्रकृतिस्वरत्वम् । द्यावाशब्द आद्युदात्तः पूर्वं प्रदर्शितः । क्षामशब्दः क्षयतेः क्षमतेर्वा मनिन्प्रत्ययान्तो निपात्यते ।[2] नित्त्वाद् आद्युदात्तोऽयं शब्दः ।

क्रतूदक्षाभ्याम् इति देवताद्वन्द्वः । तथा च वैदिकपदानुक्रमकोश आहृतम्–द्व स० उभ० प्रकृतिस्वरः (पा० ६।२।१४१)[3]–इति । अन्येषामपि दृश्यते (अ० ६।३।१३७) इति दीर्घत्वम् । क्रतुशब्दः कतुप्रत्ययान्तः[4], प्रत्ययस्वरेणाद्युदात्तः । दक्षशब्दो घञन्तः, ञित्त्वाद् आद्युदात्तः ।

एतवैशब्द–कृत्यार्थे तवैकेन्केन्यत्वनः (अ० ३।४।१४) इति तवैप्रत्ययान्तः । अन्तश्च तवै युगपत् (अ० ६।१।२००) इति युगपद् आद्युदात्तोऽन्तोदात्तश्च भवति ।

अन्वेतवै-शब्दः पूर्ववत् तवैप्रत्ययान्तः । गतिकारकोपपदात् कृत् (अ० ६।२।१३९) इत्युत्तरपदस्य प्रकृतिस्वरे प्राप्ते–तवै चान्तश्च युगपत् (अ० ६।२।२१) इति पूर्वपदस्य पूर्वगतेः प्रकृतिस्वरत्वम् अन्तोदात्तत्वं च युगपद् भवति । अनुशब्दः—**उपसर्गाश्चाभिवर्जम्**[5]–इत्याद्युदात्तः ।

अस्मिन् सूत्रे प्रातिशाख्यकारेण—

**द्यावाभूमी (मा० सं० १७।१९),**

**द्यावापृथिवीयाः (मा० सं० २४।१४,३४)**

इति पदे अपि संग्रहीतव्ये आस्ताम् । यद्वा सूत्रे—इति च-शब्दप्रयोगाद् अन्येषामपि संग्रहः सूच्यते प्रातिशाख्यकारेण कात्यायनेन ।

---

१. उ० १।१५० ॥ २. उ० ४।१४५ ॥
३. व० पदा० को० द्वितीयखण्ड पृ० ११७७ ॥
४. उ० १।७६ ॥ ५. फिट् ८१ ॥

### ४. १२. २. त्र्युदात्तत्वम्—

(३) इन्द्राबृहस्पतिभ्याम् इन्द्राबृहस्पती इति त्रीणि (वा० प्रा० २।४९)—इन्द्राबृहस्पतिशब्दो देवताद्वन्द्व इति—देवताद्वन्द्वे च (अ० ६।२।१४१) इति युगपद् उभयपदप्रकृतिस्वरः। इन्द्रशब्दो रन्प्रत्ययान्तो[1] निपात्यते इति नित्त्वाद् आद्युदात्तः (अ० ६।१।१९७)। बृहस्पतिशब्दो वनस्पत्यादिगणे पठितत्वाद् उभयपदप्रकृतिस्वरः। स्वरस्तु पूर्वं प्रदर्शितः। काशिका-सिद्धान्तकौमुदी-स्वरसिद्धान्तचन्द्रिकासु सर्वत्रेन्द्राबृहस्पतिशब्दो देवताद्वन्द्वस्योदाहरण-रूपेण प्रदर्श्यते।

### ४. १३. अन्तोदात्तत्वम्—

(१) पूर्वम् अन्तोदात्तम् (वा० प्रा० २।५४)—आसीद् इत्येतत् पदं पूर्वं विचारे वर्त्तमानम् अन्तोदात्तं भवतीत्यर्थः। पाणिनीयप्रक्रियया तु—विचार्यमाणानाम् (अ० ८।२।९७) इत्यन्तोदात्तत्वम्। तथा चाह वृत्तिकारः—**अधःस्विदासीद्—इत्यत्र विचार्यमाणानाम् इत्युदात्तः प्लुतः**[2]—इति। अत्र हरदत्तः—

**कोटिद्वयस्य विज्ञानं विचार इति कथ्यते।**
**विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते॥**
**विचार्यमाणार्थविषयत्वाद् वाक्यानि विचार्यमाणानि**[3]—इति।

(२) द्वन्द्वं चेन्द्रसोमपूर्वं पूषाग्निवायुषु (वा० प्रा० २।५५)—देवताद्वन्द्वत्वाद् उभयपदप्रकृतिस्वरे प्राप्तेऽयमारम्भः। पाणिनीयतन्त्रे—नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु (अ० ६।२।१४२) इति प्रतिषेधः। पूषन्शब्दोऽन्तोदात्तो निपात्यते[4]। अग्निशब्दो निप्रत्ययान्तः[5], वायुशब्दश्च उण्—प्रत्ययान्तः[6], द्वावपि प्रत्ययस्वरेणान्तोदात्तौ। इत्थं च पूषाग्निवायुशब्दानाम् अनुदात्तादित्वाद् उभयपदप्रकृतिस्वरस्य प्रतिषेधः, समासस्य (अ० ६।१।२२३) इत्यन्तोदात्तत्वम्।

---

१. उ० २।२९॥
२. का० ७।२।१०२॥
३. पद० ८।२।९७॥
४. उ० १।१५९॥
५. उ० ४।५०॥
६. उ० १।१॥

नोत्तरपदे० (अ० ६।२।१४२) इत्यत्र पूषन्शब्दः पर्युदस्यते। काशिका-सिद्धान्तकौमुदी-स्वरसिद्धान्तचन्द्रिकादिषु—**इन्द्रापूषणौ** इति युगपद् उभयप्रकृतिस्वरत्वेनोदाह्रियते, उपलभ्यते खल्वप्ययं तथैवर्गादिसंहितासु। वाजसनेयिसंहितयोस्त्वयं शब्दोऽन्तोदात्त एवोपलभ्यते।

सोमपूर्वस्य पूषाग्नियवायूत्तरस्य द्वन्द्वस्य वाजसनेयिसंहितयोरुदाहरणं नोपलभ्यते। अतएव—**सोमपूर्वस्य यथासम्भवम् उदाहरणम्—बाह्वोः सौमापौष्णः** (मा० सं० २४।१)'[1]— इत्युवटः प्राह। सौमापौष्ण इत्यत्र—सास्य देवता (अ० ४।२।२४) इत्यणि, सति शिष्टत्वात्[2] समासस्वरं बाधित्वा प्रत्ययस्वरेणान्तोदात्तत्वे सिद्धे, उवटस्याशास्त्रीयकल्पनापेक्षया, लुप्तशाखासूदाहरणसत्ताकल्पनं ज्यायः प्रतीयते।

(३) अग्निश्चेन्द्रे (वा० प्रा० २।५६)—अग्नीन्द्रशब्दो वाजसनेयिसंहितयोरेवोपलभ्यते (मा० सं० ७।३२; का० सं० ७।१४।१)। अत्र—**घ्यन्तादजाद्यदन्तं विप्रतिषेधेन**[3]—इतीन्द्रशब्दस्य पूर्वनिपातः, देवताद्वन्द्वे च (अ० ६।३।२६) इत्यानङादेशः, देवताद्वन्द्वे च (अ० ६।२।१४१) इति युगपद् उभयपदप्रकृतिस्वरश्चेत्येते विधयो न प्रवर्त्तन्ते। अतो नायं शब्दः पाणिनिनाज्ञायीति कल्प्यते। अयं विषयश्चरमेऽध्याये विवेक्ष्यते।

(४) ऋक् साम्नि च (वा० प्रा० २।५७)—ऋक्सामशब्दः—अचतुरविचतुर० (अ० ५।४।७७) इति समासान्ताच्-प्रत्ययान्तो निपात्यते। चित्त्वात्—चितः (अ० ६।१।१६३) इत्यन्तोदात्तत्वम्।

(५) यतो गतौ (वा० प्रा० २।५८) इणः शतरि (अ० ३।२।१२४), इणो यण् (अ० ६।४।८१) इति यणि शस्प्रत्ययान्तो यतः (मा० सं० ११।३) इति शब्दः। शतुरनुमो नद्यजादी (अ० ६।१।१७३) इति विभक्तिरुदात्ता। प्रत्युदाहरणं तु तसिल्प्रत्ययान्तम्, लिति (अ० ६।१।१९३) इति प्रत्ययात् पूर्वम् उदात्तम्।

---

१. वा० प्रा० २।५५ उ० भा०॥
२. सति शिष्टस्वरबलीयस्त्वं च। महा० ६।१।१५८ वा० ९॥
३. महा० २।२।३६ वा० ५॥

(६) पायोर्विशः (वा० प्रा० २।५९)—पायोः परो विशः शब्दः षष्ठ्यन्तः, अन्यत्र तु प्रथमान्तो द्वितीयान्तो वा। तत्र षष्ठ्यन्तोऽन्तोदात्तः, अन्ये तु सर्वे आद्युदात्ता इति विवेकः। पाणिनीयतन्त्रेण विश्-शब्दः क्विबन्तः (अ० ३।२।७६), धातुस्वरेणान्तोदात्तः (अ० ६।१।१६२)। पायुशब्दाद् उत्तरो विशः शब्दः—सावेकाचस्तृतीयादिर्विभक्तिः (अ० ६।१।१६८) इति विभक्तेरुदात्तत्वाद् अन्तोदात्तः। अपरस्तु विशः शब्दः तृतीयादिविभक्तेरभावाद् धातुस्वरम् एव भजते।

(७) आयुरय्यर्यमौर्वश्यस्तिभ्यः (वा० प्रा० २।६०)—अर्यमादिभ्यः पर आयुशब्द उण्प्रत्ययान्तः[1]। प्रत्ययस्वरेणान्तोदात्तः। सकारान्त आयुः शब्द उसिप्रत्ययान्तः[2], निदनुवृत्तेश्चाद्युदात्तः (अ० ६।१।१९७)। उर्वशीशब्दाद् अव्यवहितोत्तर आयुशब्दो नास्तीति पदसंहितोदाह्रियते।[3]

(८) अस्य रोचना-ईशानेभ्यः, प्रत्नां···लोकेषु च (वा० प्रा० २।६१,६२)—रोचनादिभ्यः परः, प्रत्नामादिषु च परतोऽस्यशब्दः—ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः (अ० ६।१।१७१) इति विभक्तेरुदात्तत्वाद् अन्तोदात्तः। तत्र चान्तोदात्तात् (अ० ६।१।१६९) इत्यनुवर्त्तनाद् नायं स्वरोऽन्वादेशे प्रवर्त्तते। अत एवान्यत्रास्यशब्दस्यानुदात्तत्वम् अग्रिमे योगे प्रपञ्च्यते

(९) पक्तीर्हंसयोरन्त उदात्त आदिर्वा (वा० प्रा० २।६४)—माध्यन्दिनकाण्वसंहितयोः पक्तीर्हंसयोरन्तोदात्तत्वं नोपलभ्यते। पाणिनीयप्रक्रियया स्वरस्त्वाद्युदात्तप्रकरणे प्रदर्शित एव।

## ४. १४. सर्वोदात्तत्वम्—

(१) सर्वम् अग्ना३इ लाजी३ञ्छाची३न् इति त्रिमात्राणि च, प्रणवश्च (वा० प्रा० २।५०, ५१)—अग्ना३इ इत्यत्र—आमन्त्रितस्य च (अ० ६।१।१९८) इत्याद्युदात्तत्वम्। बहुलमन्यत्र[4]—इति बहुलग्रहणात् टेः प्लुतत्वम्। **आमन्त्रिते छन्दस्युपसंख्यानम्**[5]—इति वचनात्

---

१. उ० १।२॥ २. उ० २।११८॥
३. वा० प्रा० २।६० उ० भा०॥ ४. महा० ८।२।९२॥
५. महा० ८।२।१०७ वा० ३॥

प्लुतिविकारे सति त्रयोऽप्यच उदात्ताः। एचोऽप्रगृह्यस्या० (अ० ८।२।१०७) इति प्लुतविकार इत्युवटमहीधरौ प्रोचतुः[1]। ननु—अनुदात्तं पदमेकवर्जम् (अ० ६।१।१५८) इत्येकेनैवोदात्तेनाचा भाव्यम् इति चेत्, न, पूर्वत्राष्टमिकस्यासिद्धत्वात्। न चात्र-दूराद्धूते च (अ० ८।२।८४) इत्यनेनैव प्लुतसिद्धिः, वाक्यान्तस्यैव टेः तेन प्लुतप्रवृत्तेः,-इति श्रीनिवासः[2]। अत एव-**आमन्त्रिते छन्दस्युपसंख्यानम्**[3]-इत्यप्राप्त एव प्लुतवचनम् इति कैयटहरदत्तादयः। नागेशस्तु—**अप्राप्ते एव प्लुत इति प्लुतविकार इत्यर्थः। दूराद् आह्वानसत्त्वात परिगणनाच्चाप्राप्तिः। प्लुतस्तु एव प्लुतगुरोरनृत० इति प्राप्नोत्येव। तेन वाक्यान्तपदानन्त्यस्यैव प्लुत इत्यत्र न मानम्। केचित्तु गुरोरिति सूत्रं दूराद्धूत इत्यादिविहितप्लुतस्य स्थानिविशेषमात्रसमर्पकं न तु विधायकम् इति यथाश्रुतम् एव व्याचक्षते**[4]-इत्याह।

लाजी३न् शाची३न् इत्यत्र षाष्ठिकम् आमन्त्रिताद्युदात्तत्वम् (अ० ६।१।१९८), दूराद्धूते च (अ० ८।१।८४) इति टेः प्लुतोदात्तत्वम्[5]-इति भट्टभास्करः सायणश्च। छन्दसि व्यत्ययात्—एकश्रुति दूरात् सम्बुद्धौ (अ० १।२।३३) इति न प्रवर्त्तते प्लुतोदात्तस्यासिद्धत्वाद् उभयस्वरसमावेशः।

ओम् इति पदं चादिपाठात् (अ० १।४।५७) निपातः। **अवतेष्टिलोपश्च**[6]-इति मन्प्रत्ययान्त ओम्-शब्दः। नित्त्वाद्, निपातत्वाद् आद्युदात्तः। **बहुलमन्यत्र**[7]-इति वचनादस्य प्लुतत्वम्। ओमभ्यादाने (अ० ८।२।८७) इति प्लुतत्वम् इति केषाञ्चित् कथनं तु[8] न समीचीनम्, अभ्यादानाभावात्। अभ्यादानं नाम स्वाध्यायादेः प्रारम्भः[9]।

### ४. १९. अनुदात्तत्वम्—

(१) अनुदात्तम् (वा० प्रा० २।२)-स्वरिताद् उदात्ताद् वाक्षराद्

---

१. मा० सं० ८।१० उवट-महीधरभाष्ये ॥

२. स्व० सि० च०, पृ० ३६२ ॥ ३. महा० ८।२।१०७ वा० ३ ॥

४. उद्योत ८।२।१०७ ॥ ५. तै० सं० ७।४।२०।१ भाष्यम् ॥

६. उ० १।१४२ ॥ ७. महा० ८।२।९२ ॥

८. वै० पदा० को० प्रथमखण्ड पृ० ४४६ ॥ ९. न्यास ८।२।८७ ॥

यदवशिष्टं तदनुदात्तं भवतीत्युवटः । स्वरितवर्जम् एकोदात्तं पदम् (वा० प्रा० २।१) इति सूत्रस्य शेषोऽयं योगः । एतद्विषये परिभाषा-प्रकरणे पूर्वं विचारः कृतः ।

(२) नो नौ मे मदर्थे त्रिद्व्यकेषु, मा च, वो वान्ते त्वदर्थे, त्वा च (वा० प्रा० २।३-६)—पाणिनिनादेशविधानसमकालम् एव स्वरोऽपि व्यधायि । तथा हि—युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ, बहुवचनस्य वस्नसौ, तेमयावेकवचनस्य, त्वामौ द्वितीयायाः (अ० ८।१।२०-२३) इत्यत्र पदस्य, पदात्, अनुदात्तं सर्वमपादादौ (अ० ८।१।१६-१८) इत्यनुवर्त्तन्ते । अतः सर्वेऽनुदात्ताः । प्रातिशाख्य-सूत्र 'त्रिद्व्यकेषु' इति विशेषण नावश्यकं व्यभिचाराभावात्, मा च, त्वा चेत्यत्रानन्वयाच्च ।

उदात्तो मे शब्दोऽपि वाजसनेयिसंहितयोरुपलभ्यते (मा० सं० ४।२२), प्रातिशाख्यपदावल्या तत्रातिप्रसक्तिर्न शक्यते वारयितुम् । पाणिनीयप्रक्रियया तु-सुपां सुलुक्० (अ० ७।१।३९) इति विभक्तेः 'शे' आदेशे, उदात्तनिवृत्तिस्वरेण (अ० ६।१।१६१) विभक्तेरुदात्तत्वम् ।

(३) पूर्ववान् अनुदेशः (वा० प्रा० २।७) -पाणिनीयतन्त्रस्यान्वादेशार्थे प्रातिशाख्येऽनुदेशशब्दः प्रयुक्तः । अष्टाध्याय्याम् अन्वादेशे आदेशस्वरयोर्विधायकानि सूत्राणि—इदमोऽन्वादेशेऽश् अनुदात्तस्तृतीयादौ, एतदस्त्रतसोस्त्रतसौ चानुदात्तौ, द्वितीयाटौस्स्वेनः (अ० २।४।३२-३४) इति । तत्र आभ्याम् इत्यादि पदं सर्वानुदात्तं यथा स्याद् इत्यादेशानुदात्तत्वविधानम् । अथ 'अशनुदात्त' इत्युक्तेऽपि कथं सर्वानुदात्तत्वलाभः ? उच्यते—कैयटहरदत्तादयः-ऊडिदम्पदा० (अ० ६।१।१७१) इत्यत्र अन्तोदात्ताद् इति पदम् अनुवर्त्तयन्ति । अशोऽनुदात्तत्वे विहितेऽन्तोदात्तत्वाभावेन-ऊडिदं०-इति विभक्त्युदात्तत्वस्य आभ्याम् इत्यादावप्रवृत्तौ,-अनुदात्तौ सुप्पितौ (अ० ३।१।४) इति विभक्त्यनुदात्तत्व आभ्याम् इत्यादि पदं कृत्स्नम् अनुदात्तं भवति ।[1]

इदमेतद् इत्येतौ शब्दावेवान्वादेशेन समर्थौ, अतः प्रातिशाख्य-कारेण तयोरग्रहणाल्लाघवं प्रदर्शितम् । माध्यन्दिनसंहितायाम्-एतदस्त्रतसोः टौसोश्चोदाहरणानि नोपलभ्यन्ते ।

---

१. स्व० सि०, च०, पृ० २६० ॥

(४) असि (वा० प्रा० २।८)—असिशब्दस्य पृथक्सर्वानुदात्तत्व-निर्देशस्य किं प्रयोजनम् इति न ज्ञायते। उवटोऽप्याह—**आख्यातम् असिशब्दः, तस्य वक्ष्यमाणः (वा० प्रा० ६।१) अनुदात्तस्वरः प्राप्त एव, इह यद् ग्रहणं तद् आख्यातपदानभिज्ञस्यापि ज्ञानार्थम्**[1]—इति। पाणिनीयमतेनात्र—तिङ्ङतिङः (अ० ८।१।२८) इति निघातः।

(५) यथा गृभोभुवोऽग्निभ्यः (वा० प्रा० २।९)—यथाशब्दः थाल्प्रत्ययान्तः (अ० ५।३।२३), लित्स्वरेण (अ० ६।१।१९३) आद्युदात्तः। पादान्ते वर्तमानत्वात्—**यथेति पादान्ते**[2]—इति फिट् सूत्रेण निघातः।

(६) गिर्वणः (वा० प्रा० २।१०)—बहुव्रीहिः समासः। माध्यन्दिनसंहितायां (मा० सं० ५।२९) आमन्त्रितत्वाद्—आमन्त्रितस्य च (अ० ८।१।१९) इति निघातः। अन्यत्रामन्त्रितानुदात्तत्वविधानात् (वा० प्रा० २।१७) निष्फलोऽयं योगः। **आमन्त्रितानभिज्ञस्यापि प्रत्ययार्थम्**—इत्युवटः कथञ्चित् स्थापयामास।

(७) अग्ने घृतेनेति च (वा० प्रा० २।११)—अग्ने घृतेनाहुत (मा० सं० १७।५०) इत्येकमेवोदाहरणम्। अत्र-आहुत-इत्यामन्त्रितम्। सुबामन्त्रिते पराङ्गवत् स्वरे (अ० २।१।२) इति पराङ्गवद्भावः। पदात् परस्य—आमन्त्रितस्य च (अ० ८।१।१९) इति निघातः। तेन 'घृतेनाहुत' इति समुदायस्यानुदात्तत्वम्। यद्वा—**छन्दसि परमपि पूर्वस्याङ्गवद् इष्यते**[3]—इति घृतेनशब्दोऽग्नेशब्दस्याङ्गवद् भवति। तत्राग्नेशब्दस्य पादादित्वान्निघाताभावे, षाष्ठिकम् आद्युदात्तत्वम् (अ० ६।१।१९८) अवशिष्टस्यामन्त्रितसुप्समुदायस्य-अनुदात्तं पदमेकवर्जम् (अ० ६।१।१५८) इत्यनुदात्तत्वम्। अयमेव पक्षो वाजसनेयिप्रातिशाख्यकारस्याभिमतः स्याद् इत्यग्नेपदग्रहणेन ज्ञाप्यते, अन्यथा स 'घृतेनाहुत' इति ग्रहणम् अकरिष्यत्।

(८) प्रचिकितश्च (वा० प्रा० १।१२)—एतत्पदव्याख्याने भाष्यकाराणां मतभेदः। तत्र वेंकटमाधव-स्कन्दौ पदमेतत् तिङन्तत्वेन व्याचक्षाते, उवट-महीधर-सायण-भट्टभास्करादयस्तु निष्ठान्तत्वेन

---

१. वा० प्रा० २।८ उ० भा०॥
२. फिट् ८५॥
३. महा० २।१।२॥

व्याचख्युः इति विवेकः[1]। पदपाठेऽपि केचिद् अवगृह्णन्त्यपरे न।

तत्र तिङन्तत्वे ऊरीकृते—तिङ्ङतिङः (अ० ८।१।२८) इति निघातः। स च प्रातिशाख्येऽन्यत्र (वा० प्रा० ६।१) विहित एवेत्यत्र ग्रहणम् अनावश्यकम्। निष्ठान्ते व्युत्पत्तिविकल्पः। तथा हि—**निष्ठायां छन्दसि द्विर्वचनं यङ्लुकि वाभ्यासविकाराभावः, गतिरनन्तरः (अ० ६।२।४९) इति गतेः प्रकृतिस्वरत्वम्। चिक इति वा धात्वन्तरं द्रष्टव्यम्**[2]—इति भट्टभास्करः। कित ज्ञाने, अस्मात् कर्मणि निष्ठा, छान्दसं द्विर्वचनम्, यद्वा यङ्लुगन्ताद् निष्ठा, संज्ञापूर्वकस्य विधेरनित्यत्वात्—गुणो यङ्लुकोः (अ० ७।४।८२) इत्यभ्यासस्य गुणाभावः, यद्वा छन्दस्युभयथा (अ० ३।४।११७) इति निष्ठायाः सार्वधातुकसंज्ञायां शप्, जुहोत्यादित्वात् तस्य श्लुः, श्लौ (अ० ६।१।१०) इति द्विर्वचनम्, गतिरनन्तरः (अ० ६।२।४९) इति गतेः प्रकृतिस्वरत्वम्[3]—इति सायणः।

वाजसनेयिप्रातिशाख्यस्य भाष्यकार उवटस्त्वेतत् पदम् आमन्त्रितान्तं मेने। अत एव स एतत्सूत्रप्रयोजनं वर्णयन्नाह—**एतदप्यामन्त्रितत्वादेवानुदात्तं मन्दधीप्रतिपत्त्यर्थम् उच्यते**[4]—इति।

(९) एनोऽपापे (वा० प्रा० २।१३)—एन इत्यविशिष्टं प्रातिपदिकमात्रं सर्वलिङ्गं गृह्यत इत्युवटः। उदाहरणान्यपि सर्वलिङ्गेषु प्रदर्शितानि। एतत्पर्याय एनत्-शब्दोऽपि प्रयुज्यते, स चान्तोदात्तः (मा० सं० १५।३२)। पापाभिधायी त्वेनःशब्दोऽसुन्प्रत्ययान्तः[5] नित्त्वाद् आद्युदात्तः (अ० ६।१।१९७)। अन्वादेशे एनशब्दो—द्वितीयाटौस्स्वेनः (अ० २।४।३४) इतीदमेतदोरादेशः सर्वानुदात्तः पूर्वं प्रदर्शित एव।

(१०) इह पूर्वं श्रुतम् (वा० प्रा० २।१४)—इहपूर्वः श्रुतंशब्दो लोण्मध्यमद्विवचनान्तः, तिङ्ङतिङः (अ० ८।१।२८) इति निहन्यते। **आख्यातत्वादेवास्य निघाते सिद्धेऽत्र वचनं मन्दधीप्रतिपत्त्यर्थम्**[6]—

१. ऋ० १।६१।१ वेङ्कट-स्कन्द-सायणभाष्याणि, मा० सं० १६।५२ उवट-महीधरभाष्ये। २. तै० सं० २।६.१२।१ भट्टभास्करभाष्यम्॥
३. ऋ० १।६१।१ सायणभाष्यम्॥
४. वा० प्रा० २।१२। उ० भा०॥ ५. उ० ४।१९८॥
६. वा० प्रा० २।१४ उ० भा०॥

इत्युवटः। इहपूर्वाभावे तु श्रुतंशब्दः (मा० सं० २१।६) पादादित्वान्न निहन्यते। स च श्नुविकरणस्य-बहुलं छन्दसि (अ० २।४।७३) इति लुकि, प्रत्ययस्वरेणान्तोदात्तः। अपरस्तु श्रुतंशब्दो (मा० सं० १५।७) निष्ठान्तः प्रत्ययस्वरेणान्तोदात्तः।

(११) मन्ये पदपूर्वं सर्वत्र (वा० प्रा० २।१५)—मन्येशब्दो माध्यन्दिनसंहितायां द्विः (मा० सं० १५।४१, ४७) प्रयुज्यते। उभयत्रायं पदपूर्वः, सर्वानुदात्तश्च। तत्र द्वयोरपि स्थलयोः—तिङ्ङतिङः (अ० ८।१।२८) इति प्राप्तस्य निघातस्य—यद्वृत्तान्नित्यम् (अ० ८।१।६६) इति यो निषेधः प्राप्नोति स-चादिलोपे विभाषा (अ० ८।१।६३) इत्यनेन बाध्यते। प्रातिशाख्यसूत्रे सर्वत्रग्रहणं यद्योगादिकृतस्वरविकारप्रतिषेधार्थम् इति व्याचख्यौ भाष्यकार उवटः।[1]

(१२) वा च—निपाताश्चेत् (वा० प्रा० २।१६) निपाता आद्युदात्ताः[2]—इत्याद्युदात्ते प्राप्ते, चादयोऽनुदात्ताः[3]—इति निघातः। समस्मात्, मर्या इत्येतौ शब्दौ विभक्तिप्रतिरूपकौ निपातौ चाद्यन्तर्भूतौ। मर्या इति-आमन्त्रितस्य च (अ० ८।१।१९) इति सूत्रेणापि शक्यते निहन्तुम्।

(१३) पदपूर्वम् आमन्त्रितम् अनानार्थेऽपादादौ (वा० प्रा० २।१७)-पाणिनीयतन्त्रे—आमन्त्रितस्य च (अ० ८।१।१९) इति सूत्रेण प्रातिशाख्यसूत्रेणैव निघातो विधीयते, तत्र—पदस्य, पदात्, अनुदात्तं सर्वम् अपादादौ (अ० ८।१।१६-१८) इत्यनुवृत्तेः। प्रातिशाख्यविहितो नानार्थपर्युदासोऽष्टाध्याय्यां न दृश्यते। वस्तुतस्तु प्रातिशाख्येऽपि प्रत्युदाहरणानां वाक्यान्तरादौ स्थितत्वात्, ततश्च पदपूर्वत्वाभावात् तत्र प्रसङ्ग एव नास्तीति 'अनानार्थे' इति पर्युदासो न युज्यते।

(१४) तेनानन्तरा षष्ठ्येकपदवत् (वा० प्रा० २।१८)—प्रातिशाख्यकारोऽत्रैकपदत्वम् अतिदिशति। पाणिनिस्तु—सुबामन्त्रिते पराङ्गवत् स्वरे (अ० २।१।२) इति पराङ्गवद्भावं प्रतिपादयति। प्रातिशाख्येऽनन्तरायाः षष्ठ्या आमन्त्रितपदेन सहैकपदत्वानिर्देशात् पूर्वा

१. वा० प्रा० २।१५ उ० भा०॥
२. फिट्० ८०॥ ३. फिट्० ८४॥

परा वा षष्ठी: ह्यामन्त्रितपदेऽन्तर्भवति । पाणिनीयविधानेन तु पूर्वस्य सुबन्तस्य पराङ्गत्वातिदेशात् परः सुबन्तो नामन्त्रितेऽन्तर्भवति । वार्त्तिककार:[1]—**परमपि छन्दसि**–इति, वचनेन परस्यापि पूर्वाङ्गत्वं विदधाति । हरदत्तादयोऽपि तस्यैवानुवदन्ते[2]।

अत्र वार्त्तिककृता प्रोक्तम्—**आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यामन्त्रितकारकवचनम् । तन्निमित्त-ग्रहणं वा**[3]–इति । महाभाष्यकारश्च गोषु स्वामिन् इत्यत्र षष्ठ्या आमन्त्रितकारकस्य चासत्त्वात् तन्निमित्त-ग्रहणम् एव ज्याय इति निर्णिनाय । प्रातिशाख्यव्याख्याकार उवटोऽपि **आनन्तर्यम् एकार्थीभावः**[4]–इत्यवोचत् । कौस्तुभकारः समर्थानुवृत्त्या ह्यतिप्रसङ्गस्य निरस्तत्वाद् मास्तु तन्निमित्तग्रहणम् इति स्थापयामास[5]।

एकपदत्वे विहितेऽपि षष्ठ्या लुग् अत्र[6] न भवति, स्वरप्रकरणे विहितत्वात् । अनुदात्तप्रसङ्गेऽयमतिदेश इति षष्ठ्यन्तामन्त्रितयोः समुदायस्य निघातः ।

(१५) न पृथिवि—(वा० प्रा० २।१६)–पूर्वोक्त एकपदत्वातिदेशोऽनेन सूत्रेण प्रतिषिध्यते । सुबामन्त्रिते पराङ्गवत् स्वरे (अ० २।१।२) इत्यत्र समर्थानुवृत्तेः, तन्निमित्तग्रहणाद् वा न सर्वा षष्ठ्येक-पदवद् भवति । सामर्थ्यप्रत्युदाहरण-प्रदर्शनार्थोऽयं योगः । तथा च प्रावोचद् उवटः—**आमन्त्रितेन सह षष्ठ्या यत्रैकार्थीभावो न भवति, तत्प्रत्युदाहरणभूतं सूत्रं शिष्यभ्रान्तिव्युदासार्थं स्वयमेव सूत्रकारः पठति**[7]–इति । अस्मिन् सूत्रे खल्वपि सर्वाणि प्रत्युदाहरणानि न पठितानि । तथा चाहोवटः—**एवमादीन्यन्यान्यपि प्रत्युदाहरणानि द्रष्टव्यानि, यथा–यस्यौषधीः प्रसर्पथ (मा० सं० १२।८६)**[8]–इति ।

(१६) विवेशा३ इति चानुदात्तम् (वा० प्रा० २।५२)–आ विवेशा३ (मा० सं० २३।४९) इत्यत्र–तिङ्ङतिङः (अ० ८।१।२८) इति

---

१. महा० २।१।२ वा० ६ ।।
२. स्व० सि० च०, पृ० ३०८ ।।
३. महा० २।१।२ वा० १, २ ।।
४. वा० प्रा० २।१८ उ० भा० ।।
५. श० कौ० २।१।२ ।।
६. अ० २।४।७१ ।।
७. वा० प्रा० २।१६ उ० भा० ।।
८. तत्रैव ।

विवेशशब्दो निहन्यते। अनुदात्तं प्रश्नान्ताभिपूजितयोः (अ० ८।१।१००) इति प्लुतत्वम्। तथा चोचतुर्भाष्यकारौ-आ **विवेश उत नेति प्रश्ने प्लुतः**-इति। यदा विवेशपदं नानुदात्तं, तदा प्लुतत्वाभावः। यथा-आ विवेश (मा० सं० २३।५०) अत्र यद्वृत्तान्नित्यम् (अ० ८।१।६६) इति निघाताभावे, लिति (अ० ६।१।१९३) इति प्रत्ययात् पूर्वम् उदात्तम्। एवञ्च मध्योदात्तो विवेशशब्दः प्लुतविहीनः।

(१७) आसीद् इति चोत्तरं विचारे (वा० प्रा० २।५३)-उपरि-स्विदासीद् इति च (अ० ८।२।१०२) इति टेरनुदात्तत्वं प्लुतत्वं च। आसीद् इत्यत्र तिङ्ङतिङः (अ० ८।१।२८) इति निघातः।

(१८) अनुदात्तम् अन्यत् (वा० प्रा० २।६३)-पूर्वसूत्रयोः (वा० प्रा० २।६१, ६२) 'अस्य' पदस्यान्तोदात्तत्वं विधायाह सूत्रकारः-अनुदात्तमन्यद् इति। **पूर्ववान् अनुदेशः (वा० प्रा० २।७) इत्यस्यैवायं प्रपञ्चः**-इति जगादोवटः। पाणिनीयमतं तत्रैवोपन्यस्तम्।

(१९) ते चानुदात्तम् अनुदात्ते (वा० प्रा० ४।८२)-प्रकृतिभाव-प्रकरणेऽयं योगः। तेमयावेकवचनस्य (अ० ८।१।२२) इति युष्मदादेशस्तेशब्दः, स च-अनुदात्तं सर्वमपादादौ (अ० ८।१।१८) इत्यनुवर्त्तनादनुदात्तः। अनुदात्ते परतः-स्थानेऽन्तरतमः (अ० १।१।५०) इत्यान्तरतम्यनियमात् पूर्वपरयोरेकादेशोऽप्यनुदात्त एव।

## ४. १६. स्वरितत्वम्—

(१) उदात्तस्यान्तःस्थीभावे स्वरितं परमनुदात्तम् (वा० प्रा० ४।४७)-प्रातिशाख्यप्रसिद्धः क्षैप्रसन्धिः पाणिनिना-इको यणचि (अ० ६।१।७७) इति विधीयते। ततः-उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (अ० ८।२।४) इति योगेनोदात्तस्वरितयणः परस्यानुदात्तस्य स्वरितत्वम् आदिश्यते। प्रकृतप्रातिशाख्यसूत्रेण स्वरितयणः परस्यानुदात्तस्य स्वरितत्वं न विधीयते। वैयाकरणनिकायेऽपि स्वरितयणग्रहणम् अधिकृत्य वैमत्यं लक्ष्यते। वृत्तौ स्वरितयणः परस्यानुदात्तस्य स्वरितत्वे-खलप्व्याशा-इत्युदाहरणम् उपन्यस्यते। यणादेशे कर्तव्ये ङः स्वरितस्यासिद्धत्वात् स्वरितस्थानिकयणोऽभावात् प्रकृतोदाहरणं युज्यते। न च स्वरितयण इत्याश्रयात् सिद्धत्वं स्याद् इति वाच्यम्, तथा सति-

१. मा० सं० २३।४९ उवटमहीधरभाष्ये, पृ० ४४३॥

उदात्तादनुदात्तस्य स्वरितः (अ० ८।४।६६) इति विहितस्यापि स्वरितस्य सिद्धत्वापत्त्या तद्यणः परस्यापि स्वरितत्वप्रसङ्गात्। न चेष्टापत्तिः, **आश्रयात् सिद्धत्वम् इदि चेद् उदात्तात् स्वरिते दोषः**[1]—इति वार्त्तिकविरोधात्। तस्माद्—उदात्तस्वरितयोः० (अ० ८।२।४) इति विहितस्य स्वरितयणः परस्य स्वरितत्वम् इष्यते, तच्चासिद्धत्वाद् दुर्लभम्। वार्त्तिककारः समादधाति—**यण्स्वरो यणादेशे स्वरितग्रणः स्वरितार्थम्**[2]—इति। महाभाष्यकारस्त्वममतिप्रसङ्गं द्वेधा परिजहार—योगविभागेन, स्वरितप्रत्याख्यानेन चेति। योगविभागेन तावत्—उदात्तयणःस्वरितोऽनुदात्तस्य, ततः स्वरितयणः—इति। द्वितीये योगे 'उदात्तयणः' इत्यनुवर्त्तनाद् अयमर्थः सम्पद्यते—'उदात्तयणः' इत्यभिनिर्वृत्तस्य स्वरितस्य स्थाने यो यण् तस्माद् उत्तरस्यानुदात्तस्य स्वरित इति। एवञ्च—उदात्तादनुदात्तस्य स्वरितः (अ० ८।४।६६) इति विहितस्य स्वरितस्य नातिप्रसङ्गः। स्वरितप्रत्याख्यानेन खल्वपि—उदात्तयणः—इत्यनेनैव खलप्व्याशा इत्यत्रापि स्वरितत्व-सिद्धेः स्वरितग्रहणं न करिष्यते। न च ङ्‌र्यणादेशेन व्यवधानम्, स्वरविधौ व्यञ्जनानामविद्यमानवत्त्वात्।

उदात्तात् स्वरितयणोऽपि परस्यानुदात्तस्य स्वरितत्वमनेन विधीयते तैत्तिरीयके शाखान्तरे ब्राह्मणे च तथा दर्शनाद्-इति केषाञ्चन मतम् उपन्यस्य वृत्तिकृता भाष्यवार्त्तिकाभ्यां तद्विरोधः प्रदर्शितः, हरदत्तेन च तत्र व्यभिचार उद्भावितः।

वृत्तिकारः स्वरितग्रहणं स्थापयति[3]—**तत्तु क्रियते पूर्वस्माद् अपि विधौ स्थानिवद्भावाद् व्यवधानमस्ति, स्वरदीर्घयलोपेषु च लोपाजादेशस्य स्थानिवद्भावः प्रतिषिध्यते**[4]—इति। श्रीनिवासस्तु काशिकोपन्यस्तप्रयोजनं निराकृत्य मन्दबुद्ध्यनुग्रहाय सूत्रकृता स्वरितग्रहणं कृतमिति निर्णिनाय। तथा हि—"यत्तु वृत्तौ खलप्व्याशा इत्यादौ उदात्तयण इति स्वरितत्वं न सिद्ध्यति, पूर्वस्मादपि विधौ ङ्‌र्यणादेशस्य स्थानिवद्भावेन अचा व्यवधानात्। न च स्वरविधौ स्थानिवद्भावनिषेधः, स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवद् इति

१. महा० ८।२।४ वा० २।
२. महा० ८।२।४ वा० १॥
३. पद० ८।२।४ पृ० ३५८॥ ४. का० ८।२।४॥

वचनात्, तस्मात् स्वरितग्रहणं कर्तव्यम् इत्युक्तम्, तद् यद्यपि पूर्वत्रासिद्धे न स्थानिवद्[1]–इति निषेधात् स्थानिवद्भावाप्रसक्त्या न युक्तम्, तथापि पूर्वत्रासिद्धे न स्थानिवद् इत्यस्यानित्यत्वेन इष्टानिष्टविभागस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयतया च मन्दबुद्ध्यनुग्रहाय सूत्रकृता स्वरितग्रहण कृतमिति स्वरितग्रहणं कृतवतः सूत्रकृतस्तात्पर्यकथनमात्रपरम् इति न कश्चिद् दोषः[2]—इति ।

अनेन विवेचनेन, तावद् एतद् व्यज्यते यत् पाणिनीयसूत्रापेक्षया प्रातिशाख्यकार-कात्यायनीयसूत्रं लघीयश्च सुगमं च । पाणिनीयसूत्रं संस्कृत्य प्रातिशाख्यकृता स्वकीयं सूत्रं प्रणीतम् इति प्रतिभाति ।

(२) तौ चेद् उदात्तावनुदात्ते स्वरितौ (वा० प्रा० ४।६२)—प्रातिशाख्ये एदोद्भ्यां पूर्वमकारः (वा० प्रा० ४।६१) इत्यकारस्य पूर्वरूपं विहितम् । तत्रानेन सूत्रेण स्वरो विधीयते । पाणिनीये तन्त्रे तु–स्वरितो वानुदात्ते पदादौ (अ० ८।२।६) इति स्वरितविकल्पो विधीयते । पदान्तपदाद्योः सन्धिः (वा० प्रा० ३।३) इति प्रातिशाख्यमतेनाप्यनुदात्ते पदादावयं स्वरितो विधीयते । पाणिनेः स्वरितग्रहणं केवलं स्पष्टप्रतिपत्त्यर्थम्, आन्तरतम्यात् (अ० १।१।५०) स्वरितसिद्धेः । न चैवं गाङ्गेऽनूप इत्यादावान्तरतम्येन प्राप्तस्य स्वरितस्यासिद्धत्वात् तमाश्रित्य शेषनिघातः स्यादिति वाच्यम्, **असिद्धं बहिरङ्गम् अन्तरङ्गे**[3]—इत्यसिद्धत्वात् । कन्यानूप इत्यादौ स्वरितानुदात्तयोरेकादेशे, आन्तरतम्यात् स्वरिते शेषनिघाताय बहिरङ्गत्वेनासिद्धत्वस्यावश्यमाश्रयणीयत्वाच्च ।

अष्टाध्यायीसूत्रविहितो विकल्पो व्यवस्थितः । भाषायाम् ऐच्छिको विकल्पः, वेदे तु प्रयोगस्य व्यवस्थितत्वाद् व्यवस्थितो विकल्प इति श्रीनिवासः[4] । प्रातिशाख्यसूत्रे विकल्पविधेरभावः, अग्रेऽपवादनिर्देशात् ।

(३) न देशे भवति (वा० ४।६३)—पूर्वसूत्रेण विहितस्य स्वरितस्य प्रतिषेधः । देशशब्दः—पुंसि संज्ञायां घः प्रायेण (अ० ३।३।

१. महा० १।१।५६ वा० ३ ॥
२. स्व० सि० च०, पृ० ५८ ॥
३. परि० ५६ ॥
४. स्व० सि० च०, पृ० ३७ ॥

११८) इति घ-प्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः । अभवत्-शब्दः-तिङ्ङतिङः (अ० ८।१।२८) इति निहन्यते । पूर्वरूपे सति, स्वरित-निषेधे चैकारस्योदात्तत्वम् इति प्रातिशाख्यमतम् । पाणिनीयमतेन तु स्वरितो वानुदात्ते पदादौ (अ० ८।२।६) इति व्यवस्थितविकल्पाद् अत्रोदात्तत्वम् ।

(४) उदात्ताच्चानुदात्तं स्वरितम् (वा० प्रा० ४।१३५)-अत्र संहितायाम् (वा० प्रा० ३।१) इत्यनुवर्त्तनात संहिताकालेऽयं स्वरि-तविधिः । उदात्ताद् अनुदात्तस्य स्वरितः (अ० ८।४।६६) इति पाणिनीयं सूत्रं प्रकृतप्रातिशाख्यसूत्रार्थकम् । तत्रापि संहितायाम् (अ० ८।२।१०८) इत्यनुवर्त्तते । अनुदात्तं पदमेकवर्जम् (अ० ६।१।१५८) इति वर्ज्यमानता त्वस्यासिद्धत्वाद् निवर्त्तते । संहिताया एकपदे समासे च नित्यत्वाद्[1] अयं स्वरितः पदपाठेऽप्येकपदे समासे चोपलभ्यते । ऋग्वेदे शुक्लयजुर्वेदे चावग्रहेऽपि स्वरितोऽयं विधीयते । तथा च-संहितावद् अवग्रहः स्वरविधौ परं च सर्वं चेदनुदात्तम् (वा० प्रा० १।१४८) इत्यतिदेशः । कृष्णयजुर्वेदेऽवग्रहेऽसंहितावद् व्यवहारो दृश्यत इति पदपाठविमर्शे प्रदर्शयिष्यते ।

(५) निहितम् उदात्तस्वरितपरम्(वा० प्रा० ४।१३६)-पूर्वसूत्रा-पवादोऽयम् । अस्य स्वतन्त्रविधित्वे स्वीकृते तु सर्वस्योदात्तस्वरित-परस्य स्वरितस्यानुदात्तत्वं स्यात् ।

**तत्र—सुप्त्वा काम् (मा० सं० १।३)**

इत्यत्र दोषः स्यात् । पाणिनीयो योगः—नोदात्तस्वरितोदयम् अगार्ग्यकाश्यपगालवानाम् (अ० ८।४।६७)इति निषेधपरत्वाद् गमक-तरः । एकश्रुति-स्वरितयोर्विधिनिषेधयोगास्तुलनार्थम् अत्रोपस्था-प्यन्ते—

| अष्टाध्यायीस्था योगाः | वाजसनेयिप्रातिशाख्यस्था योगाः |
|---|---|
| १. स्वरितात् संहितायामनुदात्तानाम् | १. स्वरितात् परमनुदात्तम् उदात्तमयम् । |

---

१. संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ शब्दकौस्तुभे हयवरट्सूत्र उद्धृतम् ॥

| | |
|---|---|
| २. उदात्तस्वरितपरस्य सन्नतरः । | २. नोदात्तस्वरितोदयम् । |
| ३. उदात्ताद् अनुदात्तस्य स्वरितः । | ३. उदात्ताच्चानुदात्तं स्वरितम् । |
| ४. नोदात्तस्वरितोदयम् अगार्ग्य० । | ४. निहितम् उदात्तस्वरितपरम् । |

रचनायास्तुलनयात्रैतत् कल्प्यते यत् प्रातिशाख्यस्य—निहितम् उदात्तस्वरितपरम् इति योगः—नोदात्तस्वरितोदयम्-इत्यनेन विनिर्मायेत चेत् तर्हि पाणिनेः संवादी स्यात् । ततश्च पाणिनेः सन्नतर-शब्दवत् प्रातिशाख्यकारस्य निहितशब्दोऽपि सङ्गच्छेत ।

### ४. १७. एकश्रुतित्वम्—

(१) स्वरितात् परमनुदात्तम् उदात्तमयम्, अनेकमपि (वा० प्रा० ४।१३९, १४०)—उदात्तमयं, प्रचितम्, एकश्रुतिरित्यनर्थान्तरम् । पाणिनेस्तु-स्वरितात् संहितायाम् अनुदात्तानाम् (अ० १।२।३९) इति योग एकश्रुतिविधायकः । तत्र वार्त्तिककारः—**बहुवचननिर्देशाद् द्व्येकयोरैकश्रुत्याभावः**[1]—इत्याक्षिप्य समादधौ—**अनेकमपीति वचनात् सिद्धम्**[2]—इति । अत्र पाणिनीयवचनं वार्त्तिककारदिशा संशोध्य वाजसनेयिप्रातिशाख्ये विन्यस्तम् इति स्पष्टं परिलक्ष्यते । अनेन कात्यायनद्वयस्यैक्यं पाणिन्युपजीवित्वं चेङ्गच्यते । अन्तिमेऽध्याये एतद् उपपादयिष्यत इति प्रकृतम् अनुसरामः ।

ननु पाणिनीयप्रक्रियायां स्वरितस्यासिद्धत्वात् स्वरितात् परत्वाभावः, न चाश्रयात् सिद्धत्वं स्याद् इति वाच्यम्, सिद्धस्वरित-स्थलेषु—**स्वरभिविख्येषम्** (मा० सं० १।११) इत्यादिषु तस्य चरितार्थत्वाद् इति चेत्, सत्यम्, तस्यादि० (अ० १।२।३२) इति नवसूत्री-उदात्तादनुदात्तस्य स्वरितः (अ० ८।४।६६) इत्यतः परेति महाभाष्ये ज्ञापितत्वाद् असिद्धत्वाभावः ।

प्रातिशाख्यसूत्रे संहितानुवृत्तिः (वा० प्रा० ३।१), अष्टाध्यायीसूत्रे च साक्षात् संहिताग्रहणम् । वृत्तिकारः संहिताप्रयोजनमाह—**अवग्रहे मा भूत्**[3]—इति । ननु स्वरिताद् इति पञ्चमीनिर्देशात् स्वरि-

१. महा० १।२।३९ वा० १ ॥ २. महा० १।२।३९ वा० ३ ॥
३. का० १।२।३९ ॥

तांव्यवहितानुदात्तस्यैवैकश्रुत्या भाव्यम्, अवग्रहे च कालव्यवधानम् इत्येकश्रुतिप्रसङ्ग एव नास्तीति चेत्, अन्यत्र पञ्चमीनिर्देशे कालो न व्यवधायक इति ज्ञापनार्थम् अत्र संहिताग्रहणम् । तेन-तिङ्ङतिङः (अ० ८।१।२८) इत्यवग्रहेऽपि भवतीति हरदत्तादयः[1] ।

(२) नोदात्तस्वरितोदयम् (वा० प्रा० ४।१४१)–पाणिनीयतन्त्रे–स्वरितात्० (अ० १।२।३९) इति सूत्रस्यापवादः—उदात्तस्वरितपरस्य सन्नतरः (अ० १।२।४०) इति सूत्रं पठ्यते। वृत्तिकारव्याख्यया सन्नतरत्वस्य स्वतन्त्रविधित्वमेव ध्वन्यते, हरदत्तप्रदर्शितेन 'अग्नि' इत्यवकाशेन त्वस्य स्वातन्त्र्यं स्पष्टं व्यज्यते[2] । यथाप्रातिशाख्यं पुनः स्पष्टमेवात्रैकश्रुतिप्रतिषेधः । तस्यां च प्रतिषिद्धायां यथाप्राप्तम् अनुदात्तमेव भवति । प्रातिशाख्यपक्ष एवात्र युक्त इति प्रातिशाख्यान्तरतुलनया माध्यन्दिनसंहितापर्यालोचनया च सिद्ध्यति ।

पाणिनीयसूत्रे यद्यपि तरवर्थातिशये न विवक्षित इति पक्षोऽपि भाष्ये प्रदर्शितः, तथाप्यध्ययनानुसारात्, हरदत्तादिग्रन्थानुसाराच्च विवक्षापक्ष एव प्रबल इति श्रीनिवासः[3] ।

(३) एकर्म्, सामजपन्यूङ्खवर्जम् (वा० प्रा० १।१३०,१३१)–एतत् सूत्रयुगलम् उवटो व्याचख्यौ–**प्रगीतं मन्त्रवाक्यं सामशब्देनोच्यते, विश्वे देवाः शृणुतेति जपः, न्यूङ्खो बह्व्चि प्रसिद्धः । एतानि वर्जयित्वा यज्ञकर्मण्येकस्वरो भवति तानलक्षणः** । तानशब्द एकश्रुतिशब्दाभिधायीति कात्यायनश्रौतसूत्रैः पाणिनीयाष्टकसूत्रैश्च सह प्रातिशाख्यसूत्राणां तुलनया निश्चीयते ।[4]

| का० श्रौ० सूत्राणि (१।८।१७–१९) | अष्टाध्यायी (अ० १।२।३३,३४) |
| --- | --- |
| (१) तानो वा नित्यत्वात् । | |
| (२) एकश्रुतिं दूरात् सम्बुद्धौ । | (१) एकश्रुति दूरात् सम्बुद्धौ |
| (३) यज्ञकर्मणि सुब्रह्मण्यसामजपन्यूङ्खयाजमानवर्जम् । | (२) यज्ञकर्मण्यजपन्यूङ्खसामसु |

१. पद०, न्यास १।२।३९, स्व० सि० च०, पृ० ५० ॥

२. पद० १।२।४०, पृ० ३२८ ॥

३. स्व० सि० च० पृ० ५४ ॥ ४. वै० स्व० मी०, पृ० १५, १६ ॥

पाणिनिना—विभाषा छन्दसि (अ० १।२।३६) इति सूत्रेण यज्ञकर्मणोऽन्यत्रापि छन्दसि पाक्षिक्येकश्रुतिः प्रदर्शितेति वृत्तिपदमञ्जर्यादिकृतव्याख्यानेन व्यज्यते। केषाञ्चिद् एतन्मतं न रोचते इति व्यवस्थितविकल्पोऽङ्गीक्रियते। तथा चोक्तं वृत्तिकृता—**व्यवस्था च वेदे मन्त्रदले नित्यं त्रैस्वर्यं, ब्राह्मणदले नित्यम् ऐकश्रुत्यम्**[1]—इति। वाजसनेयिनाम् इयं व्यवस्था न दृश्यते इति प्रातिशाख्यकारस्तथा न सूत्रयाञ्चकार।

(४) प्रावचनो वा यजुषि (वा० प्रा० १।१३२)—अयं योग उवटेनेत्थं व्याख्यायते—**प्रवचनशब्देनार्षपाठ उच्यते। तत्र भवः स्वरः प्रावचनः। स च यजुषि भवति वा। तान इति विकल्पः। स च त्रैस्वर्यलक्षण एव भवति। प्रगृह्यं चर्चायाम् इतिना पदेषु (वा प्रा० ४।१७) इत्यनेनैकस्मात् पर आर्ष इति।**

प्रवचनशब्देन ब्राह्मणम् अभिप्रेयत इति पुष्पसूत्रोद्धरणेन प्रदर्श्यास्य प्रातिशाख्यसूत्रस्याभिप्राय आचार्यमीमांसकैरित्थं प्रकटीकृतः—वाजसनेयिनां मन्त्राणां द्विविधः स्वरः—संहितादलगतानां मन्त्राणां त्रैस्वर्येण पाठः, ब्राह्मणदलगतानां पुनः द्वैस्वर्येण। तत्र ब्राह्मणदले ये याजुषमन्त्रा ब्राह्मणस्वरेण (द्वैस्वर्येण) पठितास्तेषां पाठस्त्रैस्वर्येण स्याद् आहोस्विद् द्वैस्वर्येणेति शङ्काम् अपाकर्तुं प्रातिशाख्यकार आह—प्रावचनो वा यजुषि (वा० प्रा० १।१३२) इति। याजुषमन्त्राणां पाठो द्विधा भवति-संहितावद् ब्राह्मणवच्चेत्यभिप्रायः[2]।

## ४. १८. एकादेशस्वरः—

(१) स्वरितवान् स्वरितः (वा० प्रा० ४।१३१)—एकादेशे सतिस्थानेऽन्तरतमः (अ० १।१।५०) इत्यान्तरतम्यात् स्वरित एव भवति। स्वरितोदात्तयोरेकीभावे-विप्रतिषेध उत्तरं बलवद् (वा० प्रा० १।१५६) इत्युदात्तत्वमेव भवति। पारिशेष्यात् स्वरितानुदात्तयोरेकीभावेऽयं स्वरितो विधीयते।

(२) उदात्तवान् उदात्तः (वा० प्रा० ४।१३२)—उदात्तवान् एकीभाव उदात्तः। स चोदात्तः पुरस्तात् पश्चाद् वा भवति, इतरत्रोदात्ता-

---

१. का० १।२।३६॥ २. वै० स्व० मी०, पृ० १७॥

नुदात्तस्वरितप्रचिता इत्युवटः[1] । पाणिनीयतन्त्रे-एकादेश उदात्तेनोदात्तः, स्वरितो वानुदात्ते पदादौ (अ० ८।२।५,६) इति योगौ एकादेशस्वरविधायकौ वर्त्तेते। तत्र—स्वरितो वा० (अ० ८।२।६) इति स्वरितप्रसङ्गे विचारितम् ।

एकादेश उदात्तेनोदात्तः (अ० ८।२।५) इत्यत्रानुदात्तस्येति पदस्यानुवर्त्तनाद् उदात्तानुदात्तयोरेवैकादेश उदात्तः पाणिनिसम्मतः प्रतीयते । यस्तूदात्तस्य स्वरितप्रचिताभ्याम् एकादेशः, सोऽनुदात्तपदानुवृत्तौ न संगृह्येत-इति शब्दकौस्तुभसिद्धान्तकौमुदीमनोरमादिभिरनुदात्तानुवृत्तिर्नाश्रिता[2] । श्रीनिवासस्त्वेतद् न सहते, तथा चाब्रवीत् सः—**चिन्त्यम्, वृत्तिहरदत्तग्रन्थभाष्यकैयटविरोधात् । तथा हि—प्रकृतसूत्रे वृत्तिहरदत्तग्रन्थयोरनुदात्तानुवृत्तिः स्पष्टम् अभिहिता । न सुब्रह्मण्यायाम् इति सूत्रभाष्यवार्त्तिकपर्यालोचनयाप्यनुदात्तानुवृत्तिः प्रतीयते**[3]—इति । कथं तर्हि अनुदात्तानुवृत्तौ सत्यां स्वरितप्रचिताभ्यां ्होदात्तस्यैकादेश उदात्तः पाणिनीयैरनुगृह्यत इति चेत्, उच्यते—**सर्ववेदपारिषदं हीदं शास्त्रम्**[4]—इति पातञ्जलवचनाद् अस्य शास्त्रस्य सर्ववेदसामान्यात् प्रधानविधीनामेवात्र प्रतिपादनम् । अत एव वा, अन्यतरस्याम्, बहुलम्, व्यत्यय इत्यादिशब्दाः सङ्गच्छन्ते ।

(३) इवर्णम् उभयतो ह्रस्वम् उदात्तपूर्वम् अनुदात्तपरं स्वरितम् (वा० प्रा० ४।१३३)—पूर्वसूत्रस्यापवादोऽयम् । पाणिनिना ह्रस्वानुदात्तेकार-ह्रस्वानुदात्तैकारयोरेकादेशस्वरार्थं पृथग् व्यवस्था न कृता । तेन-स्वरितो वानुदात्ते पदादौ (अ० ८।२।६) इत्यनेनैव स्वरितत्वं विज्ञायते ।

(४) वीक्षितायेति च (वा० प्रा० ४।१३४)—वीक्षितायेत्यत्रोत्तरपदे दीर्घेकारत्वात् पूर्वसूत्रेणाप्राप्तिरिति स्वरितत्वम् अनेन निपात्यते । पाणिनीयप्रक्रिययात्र—गतिरनन्तरः (अ० ६।२।४९) इति पूर्वपदप्रकृतिस्वरत्वम् । अनुदात्तं पदमेकवर्जम् (अ० ६।१।१५८) इति शेष-

---

१. वा० प्रा० ४।१३२ उ० भा० ॥
२. श० कौ० १।२।३७; सि० कौ०, बालमनोरमा ८।२।६ ॥
३. स्व० सि० च०, पृ० ३२ ॥
४. महा० २।१।५८ ॥

निघातः। **पूर्वोत्तरपदयोस्तावत् कार्यं भवति नैकादेशः**[1]–इति न्यायेन पूर्वोत्तरपदयोः स्वरे कृत एकादेशः। ततः—स्वरितो वानुदात्ते पदादौ (अ० ८।२।६) इत्येकादेशस्य स्वरितत्वम्।

### ४. १९. आख्यातोपसर्गस्वरः—

(१) अनुदात्तम् आख्यातम् आमन्त्रितवत् (वा० प्रा० ६।१)–पदपूर्वम् आमन्त्रितम् अनानार्थेऽपादादौ (वा० प्रा० २।१७) इत्यामन्त्रितस्यानुदात्तत्वं विहितम्। तथैवाख्यातस्यापि पदपूर्वस्यानानार्थेऽपादादौ वर्तमानस्यानुदात्तत्वं प्रकृतसूत्रेण विधीयते। अष्टाध्याय्यां तु–तिङ्ङतिङः (अ० ८।१।२८) इति निघातोऽनुशिष्यते। तत्रापि पदात्, अपादादौ (अ० ८।१।१७-१८) इत्यनुवर्त्तनाद् उभयसाम्यम्। अनानार्थे इत्यंशस्तु पाणिनिना न निर्दिश्यते। पाणिनीयानुशासनस्य सर्ववेदपारिषदत्वात् तेनैतद् उपेक्षितं स्यात्। यत्तु, अनानार्थे प्रत्युदाहरणम्–**पाहि यज्ञं पाहि यज्ञपतिम्** (मा० सं० २।६) इति प्रदर्शयामासोवटः, तन्न युक्तं प्रतिभाति, 'पाहि' इत्यस्य वाक्यादित्वाद् नानार्थेऽसत्त्वाच्च।

वार्त्तिककृता पाणिनीययोगस्थम् अतिङ्ग्रहणम्–**अतिङ्वचनमनर्थकं समानवाक्याधिकारात्**[2]–इति वार्त्तिकेन प्रत्याख्यातम्। **आख्यातं साव्ययकारकविशेषणं वाक्यम्**[3]–इति वाक्यं परिभाषितं वार्त्तिककारेण। अत एव–पाहि यज्ञं पाहि यज्ञपतिम्—इत्यादौ वाक्यभेदाद् अनिघातः[4]—इति श्रीनिवासः।

(२) उपसर्गं उपसर्गे (वा० प्रा० ६।२)–उपसर्गं उपसर्गे निहन्यते। एतच्च समासपद एव द्रष्टव्यम् इत्युवटः। पाणिनिना तु—गतिर्गतौ (अ० ८।१।७०) इति सूत्रेण तथैव विधीयते। अत्र द्वितीयगतिग्रहणं विनापि न क्षतिरिति हरदत्तादयः। तथा च वार्त्तिकम्—**गतेरनुदात्तत्वे गतिग्रहणानर्थक्यम्, तिङ्यवधारणात्। छन्दोऽर्थमिति चेद्, नागतित्वात्**[5]–इति।

समासेऽयं विधिरित्युक्तम्। समासस्तु–कुगतिप्रादयः (अ० २।२।१८) इति सुबन्तैः, **उदात्तवता गतिमता च तिङा**[6]–इति तिङन्तैश्च भवति।

---

१. महा० १।४।२॥ २. महा० ८।१।२८ वा० १॥
३. महा० २।१।१ वा० ९॥ ४. स्व० सि० च०, पृ० ३२०॥
५. महा० ८।१।७० वा० १, २॥ ६. महा० २।२।१८ वा० ८॥

(३) आम्रेडिते चोत्तरः (वा० प्रा० ६।३)—पूर्वस्यापवादोऽयं योगः—इत्युवटानन्तौ। अनुवर्त्तमानम् अप्युपसर्गपदम् अत्र नाभिसम्बध्यते। ततश्च—**अङ्गे अङ्गे** (मा० सं० ६।२०) इत्यादिष्वप्युत्तरस्य निघातः संगृहीतो भवति। पाणिनिना ह्याम्रेडितसंज्ञकस्य—अनुदात्तं च (अ० ८।१।३) इत्यनुदात्तत्वं विधीयते। उपसर्गस्य द्विर्वचनम्—प्रसमुपोदः पादपूरणे (अ० ८।१।६) इति, अन्येषां च द्विर्वचनं, नित्यवीप्सयोः (अ० ८।१।४) इति विधीयते।

(४) कृदाख्यातयोश्चोदात्तयोः (वा० प्रा० ६।४)—उदात्तवतोः कृदाख्यातयोः परतोऽनेनोपसर्गस्यानुदात्तत्वं विधीयते। पाणिनीयप्रक्रियया तु—गतिकारकोपपदात् कृत् (अ० ६।२।१३९) इति गतेः परस्य कृदन्तस्योत्तरपदस्य प्रकृतिस्वरत्वे, कृदन्तस्य च यथाप्राप्तं प्रकृतेः प्रत्ययस्य वोदात्तत्वे, अनुदात्तं पदम् एकवर्जम् (अ० ६।१।१५८) इति गतेरनुदात्तत्वं साध्यते। आख्याते खल्वपि-तिङि चोदात्तवति (अ० (८।१।७१) इति गतेर्निघातः। निघातप्रतिषेधप्रकरणे (अ० ८।१।२९-६६) सन्निविष्टेषु सूत्रेष्वन्यतमेन निघाते प्रतिषिद्धे गतेरुत्तर उदात्तवान् तिङन्तशब्दः सुलभः। **उदात्तवता गतिमता च तिङा**[1]—इति समासः। तदाहोवटः—**यत्र चानुदात्तत्वम् उपसर्गस्य न भवति, तत्र पृथक्पदत्वमपि भवति**[2]—इति।

(५) नाम्येकाक्षरश्च स्वरसन्धयेऽकृति (वा० प्रा० ६।५)—पूर्वस्यायम् अपवादः। अभिरेकाक्षरश्चोपसर्गः स्वरे स्वरादौ चाकृति नानुदात्त इति सूत्रार्थः। पाणिनीयतन्त्रे तु गतिसंज्ञकस्यैवानुदात्तत्वविधानाद् ईदृशेषु स्थलेषूपसर्गसंज्ञाभ्युपगमाद् निर्वाहः। दृश्यते खल्वपि क्वचिद् उपसर्गकृत्यम्। तथा हि—**अभ्यषिञ्चन्** (मा० सं० १०।१) इत्यत्रोपसर्गत्वाद् निघाताभावः षत्वञ्च (अ० ८।३।६५)।

(६) आ पूतजातयोः (वा० प्रा० ६।६)—**गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रति**[3]—इति न्यायम् आश्रित्यात्रानुदात्तत्व-प्रतिषेधः। तथा हि—आ इत्येतस्य न पूतजातशब्दौ प्रति गतिसंज्ञा, किन्तु—**एमि** (मा० सं० ४।२), **अप्राः** (मा० सं० १२।१३) इति शब्दौ

१. महा० २।२।१८ ॥ २. वा० प्रा० ६।४ उ० भा० ॥
३. महा० १।४।६० वा० ३ ॥

प्रति । अत एवावग्रहाभावः । व्यवहिताश्च (अ० १।४।८२) इति व्यवहितप्रयोगः । **उपसर्गाश्चाभिवर्जम्**[1]–इत्युदात्तत्वम् ।

(७) अधिनिप्रप्रति श्रितात्रिणमानवपचतेषु (वा० प्रा० ६।७)–**अधि श्रिताः** (मा० सं० २०।३२) इत्यसमस्ते पदे । तत्राधिरित्युपसर्गत्वाद् आद्युदात्तः[1] । श्रिता इत्यत्र प्रत्ययस्वरः । **नि अत्रिणम्** (मा० सं० १७।१६) इत्यत्र निशब्दो **यासत्** इत्येनेन क्रियावाचिपदेन, सम्वध्यते, न ह्यत्रिणम्-पदेन । सामर्थ्याभावात् समासेऽसति निशब्द उपसर्गत्वाद् उदात्तः । यणादेशे-उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (अ० ८।२।४) इति स्वरितत्वम् । **प्र मानव** (मा० सं० १५।२४) इत्यत्र प्रशब्दस्य **सिस्रते** इति क्रियाभिधायिपदेन सम्वन्धः, न तु मानव इत्यनेन । असमर्थत्वात् समासाभावे, प्रशब्द उपसर्गत्वाद उदात्तः । **प्रति पचता** (मा० सं० २१।६०) इत्यत्र प्रतिशब्दोऽगृ**भीषत** इत्यनेन पदेन सम्वध्यते । सामर्थ्याभावात् समासाभावः । उपसर्गत्वात् प्रतेरुदात्तत्वम् । पचता इति शब्दोऽतच्-प्रत्ययान्तः[2], चित्त्वादन्तोदात्तः (अ० ६।१।१६३) ।

(८) उज्जेषम्'''इत्येतेष्वनु (वा० प्रा० ६।८)—**उज्जितम् अनु उज्जेषम्** (मा० सं० २।१५) इत्यत्रानुशब्दः—लक्षणेत्थंभूता० (अ० १।४।९०) इति कर्मप्रवचनीयः । अत एव—कर्मप्रवचनीययुक्ते द्वितीया (अ० २।३।८) इत्युज्जितमित्यत्र द्वितीया । एकसंज्ञाधिकाराद् (अ० १।४।१) न गतिसंज्ञेति निघाताभावः । निपातत्वाद्[3] आद्युदात्तोऽनुशब्दः । **सूर्यस्य आवृतम् अनु आवर्त्ते** (मा० सं० २।२६)इत्यत्रापि अनुः कर्मप्रवचनीयः, तद्योगेन आवृतम् इत्यत्र द्वितीया । अवशिष्टं पूर्ववत् । **अनु आपनीफणत्, अनु संसनिष्यदत्** (मा० सं० ९।१४); **अनु संवतम्** (मा० सं० ११।१२),**अनु प्रयाणम्**(मा० सं० १२।३),**अनु सञ्चरन्तम्** (मा० १३।५) इत्येतेष्वनुः कर्मप्रवचनीयः, क्रियान्तरेण वा युज्यत इति निघाताभावः । **अनु संरभध्वम्** (मा० सं० १७।३८) इत्यत्रानुशब्दस्य क्रियान्तरेण गमिना सामर्थ्यात् कर्मप्रवचनीयत्वम् । **अनु सितिम्** (मा० सं० १३।९) इत्यत्रानुशब्दस्य **द्रूणानः** इत्यनेन सामर्थ्याद् न समासः, तेनानुदात्तत्वाभावः । **अनु विक्रमस्व** (मा० सं० १२।५) इत्यत्राप्यनुशब्दः कर्मप्रवचनीयः ।

---

१. फिट् ८१ ॥ २. उ० ३।१०९ ॥ ३. फिट् ८० ॥

(९) ओप प्रोदात्ते (वा० प्रा० ६।९)–उदात्ते प्रशब्दे परत आ उप इत्येतयोरनुदात्तत्वं प्रतिषिध्यते । क्रियायोगाभावादत्र गतित्वाभाव इति निघातो न प्रवर्त्तते ।

(१०) अभिप्रेह्य ुपसम्प्रयात—(वा० प्रा० ६।१०)—ईदृशेषु प्रयोगेषु पाणिनीयमतेन छान्दसत्वान्निघाताभावः कल्प्यते ।

(११) प्रकृत्याख्यातम् आख्यातपूर्वम् (वा० प्रा० ६।११)—पाणिनिना त्वयम् अर्थः—तिङ्ङतिङः (अ० ८।१।२८) इत्यत्र अतिङ्ग्रहणेन प्रतिपाद्यते । प्रातिशाख्यकारः स्पष्टप्रतिपत्त्यर्थं लाघवमपि परित्यजति । तथा च–अनुदात्तमाख्यातमामन्त्रितवद् (वा० प्रा० ६।१) इत्यत्र आमन्त्रितवद् इत्यस्य स्थाने अनाख्यातपूर्वम् इति चेत् प्रातिशाख्यकारोऽकरिष्यद्,तर्हि लघुतरकम् अभविष्यत् ।

(१२) उदाताच्चामन्त्रिताद् अनन्तरम् (वा० प्रा० ६।१२)–उदात्तम् आमन्त्रितं वाक्यादौ पादादौ वा सम्भवति, **समानवाक्ये निघातयुष्मदस्मदादेशाः**—इति वचनात्, अनुदात्तं सर्वम् अपादादौ (अ० ८।१।१८) इति वचनाच्च । तत्र–आमन्त्रितं पूर्वमविद्यमानवद् (अ० ८।१।७२) इति निघाताभावः ।

(१३) एकान्तरादपि (वा० प्रा० ६।१३)–एतत्समानार्थप्रतिपादकः कश्चन नियमः पाणिनीयाष्टके न विद्यते । व्यवस्थितविषयत्वाद् एवं स्यात् । तथा चोवटोऽब्रवीत्—**अपिशब्देन विकल्पो ज्ञेयः । क्वचित् क्वचिद् न भवति, यथा–इडे आ इहि (मा० सं० ३।२८) इति**[1] ।

(१४) यद्वृत्तोपपदाच्च (वा० प्रा० ६।१४)–पाणिनीयतन्त्रेऽयमर्थः—यद्वृत्तान्नित्यम् (अ० ८।१।६६) इति सूत्रेण प्रतिपाद्यते । द्वयोरपि शास्त्रयोः सर्वविभक्त्यन्तः सर्वप्रत्ययान्तश्च यच्छब्दो गृह्यते इति व्याख्यातारः । यद्वृत्तेन यस्याख्यातस्य सामर्थ्यं भवति, तदेवाख्यातं प्रकृत्या भवति, अन्यत्तु सन्निधौ स्थितम् अपि न तथा । एतच्च व्याख्यातुरुवटस्य सम्मतम् । तथा च—**यदेकस्य** (मा० सं० २०।१७) इत्युदाहरणं प्रदर्श्यान्यमतेन तद् उपोद्वलयति सः—

---

१. वा० प्रा० ६।१३ उ० भा० ॥

**यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य तत् ।**
**अर्थतो ह्यसमर्थानाम् आनन्तर्यम् अकारणम् ॥**[1] इति ॥

एतत् सर्वं पाणिनेरपि समर्थपरिभाषया (अ० २।१।१) सिद्धम् ।

ननु पञ्चमीनिर्देशाद् अत्र व्यवहितेषु नास्य प्रवृत्तिरिति चेत्, न, पूजनात् पूजितम् अनुदात्तम् (अ० ८।१।६७) इत्यत्र पूजनशब्दस्य सम्बन्धिशब्दत्वाद् एव पूजितग्रहणे सिद्धे पुनस्तदनन्तरपूजितप्रतिपत्त्यर्थं यत् पूजितग्रहणं क्रियते, तेनात्र प्रकरणे पञ्चमीनिर्देशेऽपि व्यवहिते कार्यप्रवृत्तिज्ञापनात् ।[2]

(१५) हेश्च (वा० प्रा० ६।१५)—[हि च] छन्दस्यनेकमपि साकाङ्क्षम् (अ० ८।१।३५) इति पाणिनीयो योगश्छन्दोविषयको हियोग एकस्यानेकस्य वा साकाङ्क्षस्य तिङन्तस्य निघातप्रतिषेधं विदधाति । छन्दसि दृष्टानुविधित्वात् क्वचिद् एकस्य क्वचिच्चानेकस्य तिङन्तस्य निघातप्रतिषेधो व्यवस्थीयते ।

(१६) उत्तरेऽपि (वा० प्रा० ६।१६)—पाणिनेस्तु—यद्धितुपरं छन्दसि (अ० ८।१।५६) इति सूत्रं निघातप्रतिषेधं विदधाति । वृत्तिभाष्यादिष्वयं योगो नियमार्थः प्रतिपाद्यते । तथा चावोचद् वार्त्तिककारः—**यद्धितुपरस्य छन्दस्यनिघातोऽन्यपर-प्रतिषेधार्थः**[3]—इति ।

(१७) नेत् (वा० प्रा० ६।१७)—नेद् इति न इत् इति निपातसमाहार[4] इत्युवटः । पाणिनीयैस्तु—निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण० (अ० ८।१।३०) इति निघातप्रतिषेधो विधीयते ।

(१८) समनसस्करत् (वा० प्रा० ६।१८)—करद् इति लोडन्तं पदम् । तिङ्ङतिङः (अ० ८।१।२८) इति प्राप्तो निघातश्छान्दसत्वान्न भवतीति कल्प्यते पाणिनीयवचनाभावात् ।

(१९) द्वयोः पूर्वं समुच्चये (वा० प्रा० ६।१९)—पाणिनीयप्रक्रियया तु—चवायोगे प्रथमा (अ० ८।१।५९) इति प्रथमतिङन्तस्य निघातः प्रतिषिध्यते । चवायोगो हि समुच्चये विकल्पे च सति भवति,

---

१. वा० प्रा० ६।१४ उ० भा० ॥ २. का० ८।१।६७ ॥
३. महा० ८।१।५६ वा० १ ॥
४. वा० प्रा० ६।१७ उ० भा० ॥

स चानेकस्य धर्म इति वृत्तिः। योगग्रहणात् पूर्वत्र परत्र वा स्थितयोराख्यातद्वययुक्तयोः प्रथमस्य निघातप्रतिषेधः।

(२०) वा विचारणे, अह विनियोगे, एवावधारणे, उपपदाप्रयोगेऽपि च (वा० प्रा० ६।२०–२३)–अत्रोवटोऽस्याश्चतुःसूत्र्याश्छान्दसानाम् उदाहरणानां स्थाने लौकिकान्येवोदाहरणानि प्रादीदृशद्, अवोचच्च–**संहितायां प्रायश उदाहरणानि न लभ्यन्ते, रूपोदाहरणानि तु दीयन्ते**[1]–इति।

पाणिनेस्तु—चवायोगे प्रथमा (अ० ८।१।५९), अहेति विनियोगे च (अ० ८।१।६१), चाहलोप एवेत्यवधारणम् (अ० ८।१।६२), चादिलोपे विभाषा (अ० ८।१।६३) इत्येतानि सूत्राणि प्रातिशाख्यसूत्रचतुष्टयार्थं यथाक्रमं प्रदर्शयन्ति। अत्र–चादिलोपे विभाषा (अ० ८।१।६३) इत्यत्र पाणिनीयैर्ये चादयो गृह्यन्ते, त एवोवटेन गृहीता। अत्र हेतुर्व्याकरणसंस्कारः सम्प्रदायानुरोधो वेति निर्णेतुं न शक्यते। एषा चतुःसूत्री पाणिनीयरचनया प्रभावितेति स्पष्टं प्रतीयते, अयं विषयोऽन्तिमेऽध्याये स्फुटीकरिष्यते।

(२१) परोपाप···स्वभि (वा० प्रा० ६।२४)—एते विंशतिरुपसर्गाः प्रकृतिस्वरा भवन्तीत्यर्थः। उपसर्गं उपसर्गे (वा० प्रा० ६।२) इत्यादियोगा अस्यापवादाः। प्रकृतिस्वरस्तु व्याकरणपठितोऽत्र गृह्यत इत्युवटः स्वयमेव सूचयाञ्चक्रे। **उपसर्गाश्चाभिवर्जम्**[2]—इत्यभिवर्जं सर्वे आद्युदात्ताः। ऋक्प्रातिशाख्यकारस्तु विभागशः प्रदर्शयामास—

**विंशतेरुपसर्गाणाम् उच्चा एकाक्षरा नव।**
**आद्युदात्ता दशैतेषाम् अन्तोदात्तस्त्वभीत्ययम्**[3] ॥ इति ॥

पाणिनेः—प्रादय उपसर्गाः क्रियायोगे (अ० १।४।५९) इति प्रादिगणेऽपि विंशतिरुपसर्गाः पठ्यन्ते क्रमस्तु, भिद्यते ॥

—:०:—

१. वा० प्रा० ६।२० उ० भा० ॥ २. फिट् ८१ ॥
३. ऋ० प्रा० १२।२२–२४ ॥

पञ्चमोऽध्यायः

# ५. सन्धिविमर्शः

## ५. १. पदान्तपदाद्योःसन्धिः—

पदस्य पदान्तरेण यदानन्तर्यं सा संहितेति लोकेऽभिधीयते[1]। संहितासम्बन्धिनां कार्याणाम् अन्तःपदम् अप्युपलम्भात् शास्त्र-कृतः संहितालक्षणं स्वस्वशास्त्रेष्वारभन्त । तत्र–परः सन्निकर्षः संहिता[2]–इति यास्कः पाणिनिश्च । वर्णानाम् एकप्राणयोगः संहिता[3]–इति प्रातिशाख्यकारः कात्यायनः । तैत्तिरीयप्रातिशाख्यकारोऽपि संहितायाम् एक प्राणभावम् अङ्गीचकार[4]। वर्णानाम् अतिशयितसन्निकर्षेण, तेषां वैकप्राणयोगेन वर्णानाम् अर्धमात्राकालव्यवधानम् अभिप्रेयते[5]–इति वृत्तिकारः। एतच्चार्धमात्राकालव्यवधानं पदयुगले एकपदे वा सामान्यतः संहितापदाभिधायि भवति । वाजसनेयिप्रातिशाख्यकारः—पदान्तपदाद्योः सन्धिः (वा० ३।३) इत्यधिकृत्य सामान्येन ह्यन्तः–पदसंहिताकार्याणि प्रतिपादयति। क्वचित्तु खलु स्वक्षेत्रम् अतिक्रम्य प्रातिशाख्यकारो व्याकरणक्षेत्रेऽभिनिविशते ।[6]

प्रातिशाख्यकाराः पदानि प्रकृतित्वेन स्वीकृत्य संहितागतविकारान् प्रदर्शयन्ति। यास्कः खल्वप्याह—**पदप्रकृतिः संहिता । पदप्रकृतीनि सर्वचरणानां पार्षदानि**[7]–इति। अत्र यद्यपि दुर्गो भर्तृहरिश्च पदप्रकृतिशब्दस्य तत्पुरुषबहुव्रीहिभेदाद् द्विधा व्याख्यानं चक्रतुः[8], तथापि पदप्रकृतीनीत्यत्र बहुव्रीहित्वात्[9] पूर्वस्मिन्नपि वाक्ये बहुव्रीहि-

---

१. पद०, न्यास १।४।१०९ ॥ २. निरु० १।७; अ० १।४।१०९ ॥
३. वा० प्रा० १।१५८ ॥ ४. तै० प्रा० ५।१ ॥
५. का० १।४।१०९ ॥
६. वा० प्रा० ३।५८ उ० भा० ।
७. निरु० १।१७ ॥
८. निरु० १।१७; वा० प० १।५९।६० ॥
९. निरु० १।१७ दुर्गा० ।।

रेव न्याय्यः । अत एवोवटः—संहिता पदप्रकृतिः[1]—इत्यृक्प्रातिशाख्यसूत्रव्याख्याप्रसङ्गे प्राह—**पदानि प्रकृतिभूतानि यस्याः संहितायाः सा पदप्रकृतिः, संहितात्र विकारः । तथा हि—षत्वणत्वादयो विकाराः संहिताया एव भवन्ति[2]**–इति ।

स्वरसंस्कारयोश्छन्दसि नियमः (वा० प्रा० १।१) इति प्रातिशाख्यकारकात्यायनेन प्रतिज्ञायते । तत्र स्वरस्तावत् पूर्वस्मिन्नध्याये विमृष्टः, संस्कारोऽत्र विमृश्यते । संस्कारश्च विकारागमलोपप्रकृतिभावलक्षणः सन्धिरेव प्रातिशाख्ये, संहितायाम् (वा० प्रा० ३।१) इत्यधिकारात् । वाजसनेयिप्रातिशाख्ये सन्धिविषयस्तृतीयचतुर्थाध्याययोरर्धचतुर्थशतमितैः सूत्रैर्निबद्धः । पाणिनीयाष्टके त्वयं विषयः षष्ठाध्यायस्य प्रथमे पादे (अ० ६।१।७२–१५७), षष्ठाध्यायस्य तृतीये पादे (अ० ६।३।११४–१३९), अष्टमाध्यायस्य च तृतीयचतुर्थपादयोर्विप्रकीर्णो वर्त्तते । प्रकरण-लाघव-पूर्वाचार्यानुरोधादिवशाद् आचार्यैरयं विषयो विभिन्नस्थलेषु प्रतिपादितः, तत्र चाप्यर्वाचीनप्रक्रियाकृद्भिरिव स्वरव्यञ्जनसन्ध्यादिविभागेन सूत्रन्यासो न व्यधायि । अस्मिन् विमर्शे प्रतिपादनसौकर्यानुरोधात् स्वरसन्ध्यादिविभागान् परिकल्प्य, तत्र तत्र च वाजसनेयिप्रातिशाख्यसूत्राणि निवेश्य पाणिनीयसूत्रदृष्ट्या विवेचना प्रस्तूयते ।

## ८. २. पदान्तीया वर्णाः—

सन्धिविषयस्य प्रधानतः पदसम्बन्धित्वात्[3] प्रातिशाख्यकारेण कात्यायनेन वाजसनेयिप्रातिशाख्ये संज्ञापरिभाषाप्रकरणे पदान्तीया वर्णा उल्लिख्यन्ते । पाणिनिना यद्यपि साक्षात् तथा प्रयासो न कृतः, तथापि तत्प्रवृत्त्या यज्ज्ञाप्यते तदधस्ताद् उपस्थाप्यते—

(१) प्रथमोत्तमाः पदान्तीया अचञौ (वा० प्रा० १।८५)–सर्व एव प्रातिशाख्यकाराः प्रायशः प्रथमोत्तमवर्णान् चञ्वर्जं पदान्तीयान् आतिष्ठन्ते ।[4] पाणिनीयास्तु–झलां जशोऽन्ते (अ० ८।२।३९) इति तृतीयान् वर्णान् पदान्ते स्वीकृत्य,–वावसाने (अ० ८।४।५६) इत्यव-

१. ऋ० प्रा० २।१ ॥ २. ऋ० प्रा० २।१ उ० भा० ॥
३. वा० प्रा० ३।३; महा० ६।१।८६ ॥
४. ऋ० प्रा० १।१५, १६; १२।१; अ० प्रा० १।७; २।३ ॥

स्थानविशिष्टपदान्ते विकल्पेन प्रथमान् वर्णान् अपि पदान्तीयान् अभिमन्यन्ते। ङमो ह्रस्वाद् अचि ङमुण् नित्यम् (अ० ८।३।३२), मोऽनुस्वारः (अ० ८।३।२३) इति निर्देशात् ङणनमा अपि पदान्तीयाः सिध्यन्ति। पदान्ते चवर्गस्याभावः—चोः कुः (अ० ८।२।३०) इति कवर्गादेशात्, व्रश्चभ्रस्ज० (अ० ८।२।३६) इति षत्वे, झलां जशोऽन्ते (अ० ८।२।३९) इति जश्त्वे, आन्तरतम्यात् (अ० १।१।५०) डकारादेशाच्च। वैकारिकाश्चजत्रास्तु द्वाभ्यामपि शास्त्रकृद्भ्यां पदान्तीया अभिमन्यन्ते।

(२) विसर्जनीयः (वा० प्रा० १।८६)—प्रातिशाख्यकारा विसर्जनीयं पदान्तीयं प्रतिज्ञाय तत्संस्कारान् प्रदर्शयन्ति। पाणिनीयमते तु विसर्जनीयो न मौलिको वर्णः। अत एवास्य समावेशो वर्णसमाम्नाये न क्रियते। पाणिनीयप्रक्रियया रेफसकारौ पदान्तीयौ, पदान्तीयः सकारोऽपि-ससजुषो रुः (अ० ८।२।६६) इति रेफमापद्यते। रेफश्च खरवसानयोर्विसर्जनीयः (अ० ८।३।१५) इति विसर्जनीयम् आपद्यते।

(३) स्वराश्च लृकारवर्जम् (वा० प्रा० १।८७)—पाणिनीयैरपि स्वराणां पदान्तीयत्वं स्वीक्रियते। लृकारस्तु क्लृपस्थ एवोपलभ्यत इति न पदान्ते सम्भवति।

(४) णकारर्कारावग्रहे (वा० प्रा० १।८८)—ऋकारणकारयोः पदान्तीयत्वं पाणिनीयैः सामान्येन स्वीक्रियते। अवग्रहे ऋकारस्य पदान्तीयत्वम्—छन्दस्यृदवग्रहात् (अ० ८।४।२६) इति पाणिनीयनिर्देशेनापि ज्ञायते।

इत्थं च ऋकारलृकारवर्जं सर्वे स्वराः, चवर्गणकारवर्जं वर्गप्रथमपञ्चमवर्णाः, विसर्जनीयः, अवग्रहे च ऋकारणकारावपि वर्णावितीमे वर्णा वाजसनेयिप्रातिशाख्यमतेन पदान्तीया इति निष्कर्षः। प्रातिशाख्यकृता यथा पदान्तीया वर्णा निर्दिष्टास्तथा पदादीया वर्णा अपि निर्देष्टव्या आसन्, न तु निर्दिष्टाः। ऋक्प्रातिशाख्यकारस्तु पदादिवर्णान् अपि निर्दिदेश।[1] वाजसनेयिचरणे ऋ-लृ-ङ-झ-ञ-टवर्ग-थ-अयोगवाहाः पदादौ नोपलभ्यन्ते, अतो व्यतिरिक्ताः सर्वे वर्णाः पदादीया इति विवेकः।

१. ऋ० प्रा० १२।१॥

साधारणतः सन्धिश्चतुर्धा व्याख्यातृभ्याम् उल्लिखितः । तथा चाहोवटः—**सन्धयश्चत्वारो भवन्ति, स्वरयोः, व्यञ्जनयोः, स्वर-व्यञ्जनयोस्तु द्विप्रकारः**[1]–इति । सूत्रकाराभ्यां पाणिनि-कात्यायनाभ्यां लाघववशाद् विभागशः सन्धिर्न प्रदर्शितः । अतः स्वरसन्ध्यादिविभागोऽपि पूर्णतया न शक्यते प्रदर्शयितुम् । अस्मिन् विमर्शे—स्वर-सन्धिः, व्यञ्जनसन्धिः, अयोगवाहसन्धिः, सन्धिशेषः—इत्येतेषु शीर्षकेषु विभज्य, वाजसनेयिप्रातिशाख्यसूत्राण्याधृत्य पाणिनीयसूत्रैः सह तुलना प्रस्तूयते । :

## ५. ३. स्वरसन्धिः

### ५. ३. १. यणादेशः—

(१) स्वरे भाव्यन्तःस्थाम् (वा० प्रा० ४।४५)–कण्ठ्यम् अवर्णं वर्जयित्वा सर्वे स्वरा भाविसंज्ञकाः[2] । उत्सर्गोऽयम्–सन्ध्यक्षरम्० (वा० प्रा० ४।४६) इत्यपवादः । पारिशेष्याद् इवर्ण-उवर्ण-ऋवर्ण-लृवर्णाः स्वरे परतोऽन्तःस्थाम् आपद्यन्ते । तत्रापि–सवर्णे दीर्घत्वम् (वा० प्रा० ४।५०) इत्यसवर्णे स्वरे परतोऽयं विधिः ।

अत्र लृवर्णस्य पदान्तत्वाभावाद् ऋवर्णस्य चाप्यवग्रह एवोपलम्भात् सन्धिर्न सम्भवति, अतस्तयोर्ग्रहणम् अनर्थकमेव । एवं च—स्वर इवर्णोवर्णौ यकारवकारौ–इत्येव सूत्रन्यासो विधेयः[3] । ऋकारग्रहणे सत्यप्यृकारस्य विकारो रेफो न स्यात्, विकारी यथासन्नम् (वा० प्रा० १।१४२) इति नियमात् । ऋकारो हि जिह्वामूलीयः (वा० प्रा० १।६५), रेफः पुनर्दन्तमूलीयः (वा० प्रा० १।५८) इति तयोः स्थानभेदः स्पष्टः । न च यथासंख्यनियमेन (वा० प्रा० १।१४३) व्यवस्था, अन्तःस्थानां भिन्नक्रमत्वात्–यिति रिति लिति विति (वा० प्रा० ८।२२) इत्येवं वर्णसमाम्नाये पाठात् ।

पाणिनेस्तु—इको यणचि (अ० ६।१।७७), तयोर्य्वावचि संहितायाम् (अ० ८।२।१०८)इति सूत्रे इमं सन्धिं विदधाते । स्थानेन्तरतमः (अ० १।१।५०) यथासंख्यमनुदेशः समानाम् (अ० १।३।१०) इति

---

१. वा० प्रा० ३।३ । उ० भा० ॥ २. वा० प्रा० १।४६ ॥
३. तु०–तै० प्रा० १०।१५ ॥

सूत्रयोरन्यतमेन[1] व्यवस्था। पाणिनीयतन्त्रस्य लोकवेदसाधारण्याद् ऋकारऌकारयोरपि पदान्तयोरुदाहरणानि सम्भवन्त्येव। ऋकारस्य रेफादेशेऽपि नात्र विप्रतिपत्तिः, द्वयोरपि तुल्यस्थानत्वात्।

### ८. ३. २. अयाद्यादेशाः

(२) सन्ध्यक्षरम् अयवायावम् (वा० प्रा० ४।४६)–वाजसनेयिप्रातिशाख्यस्य कलकत्तादिसंस्करणेषु वर्णसमाम्नाये सन्ध्यक्षराणां क्रमः—ए ऐ ओ औ इति वर्त्तते। अयं क्रम आदेशक्रमेण न संवदते। इन्दुसंस्करणे तु ए ओ ऐ औ इति न्याय्यः क्रम उपलभ्यते, न च तत्र कश्चन पाठभेदः प्रदर्श्यते। पाणिनिस्तु–एचोऽयवायावः (अ० ६।१।७८) इति सूत्रेणायादिविकारान् प्रतिपादयति।

### ८. ३. ३. एकादेशः

(३) अथैकमुत्तरश्च (वा० प्रा० ४।४६)—अधिकारोऽयम्। पूर्वोत्तरवर्णयोरेकवर्णं विकारभूतमापद्यत इत्यर्थः। पाणिनिरपि–एकः पूर्वपरयोः (अ० ६।१।८४) इत्यधिकृत्यैकादेशं प्रक्रमते। अत्र प्रातिशाख्यकारः पूर्वशब्दग्रहणं विनैव चकारेण तदर्थम् आपादयति। तथा च पाणिनीयसूत्रं संशोधयतीव प्रातिशाख्यकारः।

### ८. ३. ३. (१) दीर्घ एकादेशः—

(४) सिं सवर्णे दीर्घम् (वा० प्रा० ४।५०)—अ आ, इ ई, उ ऊ, ऋ ॠ इत्यष्टौ सिंसंज्ञकाः (वा० प्रा० १।४४)। पाणिनीयाष्टके—अकः सवर्णे दीर्घः (अ० ६।१।१०१) इति योगः सवर्णदीर्घम् एकादेशं विदधाति। अत्र ऋकारस्य पदान्तत्वाभावाद् वाजसनेयिचरण उदाहरणं नोपलभ्यते।

(५) अनुनासिकवत्यनुनासिकम् (वा० प्रा० ४।५१)—अंशुः (मा० सं० १८।१९) इत्यादिषु पदेषु—अनुनासिका चोपधा (वा० प्रा० ४।३) इति पक्षे उपधानुनासिक्यं विधीयते। अत्र दीर्घैकादेशे आनुनासिक्यं प्रकृतसूत्रेण प्रतिपाद्यते। पाणिनीयमते अंशुः—इत्यादिष्वानु-

---

१. महा० १।३।१०; १।१।४९॥

नासिक्याभावाद् नैवंविधः प्रयासः । यद्वा बहुलवचनाद् (अ० ६।१।१२६) इष्टसिद्धिः ।

### ५. ३. ३. (२) गुण एकादेशः

(६) कण्ठ्याद् इवर्णं एकारम्, उवर्णं ओकारम् (वा० प्रा० ४।५२, ५३)–पाणिनीयतन्त्रे–आद् गुणः (अ० ६।१।८७) इति गुण एकादेशो विधीयते। आन्तरतम्याच्च यथायथं व्यवस्था। आन्तरतम्यादेव गुणे सिद्धे पाणिनीयसूत्रे गुणग्रहणं द्विमात्रिकादेशप्रतिपत्त्यर्थम् इति भाष्ये स्थापितम्। पाणिनीयसूत्रापेक्षया प्रातिशाख्यसूत्रे सुगमे प्रतीयेते।

(७) समुद्रस्येमंस्त्वेमंस्त्वोद्‌मन्निति च (वा० प्रा० ४।५४)–समुद्रस्येमन् (मा० सं० १३।१७), त्वेमन् (मा० सं० १३।५३) त्वोद्‌मन् (मा० सं० १३।५३) इत्यत्र वृद्धिरेकादेशः प्राप्तः, गुण एकादेशस्तु निपात्यते। नात्र पाणिनेः साक्षाद् विधानम्। वार्त्तिककारस्तु–एमन्नादिषु छन्दसि[1]–इति पररूपम् एकादेशं विदधाति।

(८) एजत्योजोरेकेषाम् (वा० प्रा० ४।५५)–वृद्धौ प्राप्तायाम् एकारौकारौ विधीयेते। तेन–नेजति–नैजति (मा० सं० ४०।५), सहोजः सहौजः—(मा० सं० ३६।१) इति विकल्पेन गुण एकादेशः। मुद्रितसंहितासु त्वैकारौकारावेव समुपलभ्येते। विकल्पस्य व्यवस्थितत्वात् कस्याञ्चित् लुप्तायां शाखायाम् एकारौकारौ स्याताम्। पाणिनीयैस्त्वत्र प्रयासो न व्यधायि।

### ५. ३. ३. (३) वृद्धिरेकादेशः

(९) सन्ध्यक्षर ऐकारौकारौ (वा० प्रा० ४।५६)–पाणिनीयो विधिस्तु–वृद्धिरेचि (अ० ६।१।८८) इति योगेन भवति। आन्तरतम्याच्च व्यवस्थोपपद्यते।

(१०) वाहौ च स्वरभूते (वा० प्रा० ४।५७)–अवर्णात् स्वरभूते वाहौ पूर्वपरयोर्यथासन्नम् औकार आदेशो भवतीत्यर्थः। पाणिनीयप्रक्रियया—वहश्च (अ० ३।२।६४)–इति सुबन्तोपपदाद् वहतेर्ण्विः।

---

१. महा० ६।१।९४ वा० ६।।

ततो भत्वे (अ० १।४।१८) वाह ऊठ् (अ० ६।४।१३२) इत्यूठि, एत्येधत्यूठ्सु (अ० ६।१।८९) इति वृद्धिरेकादेशः, आन्तरतम्यात् (अ० १।१।५०) औकारः।

(११) आरसृकारोऽपृक्तात् (वा० प्रा० ४।५८)–कण्ठ्य ऋकारे ह्रस्वम् (वा० प्रा० ४।४८) इत्यस्यापवादोऽयं विधीयते। पाणिनीयप्रक्रियानुसारं तु—उपसर्गाद् ऋति धातौ (अ० ६।१।९१) इत्युपसर्गावर्ण-धात्वृकारयोरेकादेशे वृद्धौ, उरण् रपरः (अ० १।१।५१) इति रपरत्वे आरादेशः।

(१२) लृकारश्चाल्कारम् (वा० प्रा० ४।५९)—अवर्ण–लृकारयोरालादेशोऽत्र विधीयते। ईदृशस्य सन्निकर्षस्य संहितायाम् असम्भवाद् अनावश्यकम् एतद् विधानम्। तथा चोवटः प्राह—**इदं सूत्रं केचिन्न पठन्ति व्यर्थत्वात्**–इति। शाखान्तरोदाहरणसिद्ध्यर्थं वेत्यनन्तस्य कल्पना तु न युक्ता, पदादौ लृकारस्यासम्भवात्।

## ८. ३. ३. (४) पूर्वरूप एकादेशः

(१३) एदोद्भ्यामकारः (वा० प्रा० ४।६०)–तैत्तिरीयप्रातिशाख्यं विहाय सर्वाणि प्रातिशाख्यानि पाणिनिश्च पूर्वरूपम् एकादेशं विदधति। तैत्तिरीयप्रातिशाख्ये त्वकारस्य लोपो विधीयते। तद्यथा–ऋक्प्रातिशाख्ये—

**अथाभिनिहितः सन्धिरेतैः प्राकृतवैकृतैः।**
**एकीभवति पादादिरकारस्तेऽत्र सन्धिजाः॥**[1] इति॥

**एकारौकारान्तात् पूर्वः पदादेरकारस्य**[2]—इत्यथर्वप्रातिशाख्ये। एङः पदान्तादति (अ० ६।१।१०९) इति पाणिनिः। तैत्तिरीयप्रातिशाख्ये तु–**लुप्यते त्वकार एकारोकारपूर्वः**[3]– इति।

प्रातिशाख्यकारः कात्यायनः प्रथमाध्याये संज्ञाप्रसङ्गे-एदोद्भ्यामकारो लुगभिनिहितः (वा० प्रा० १।११४) इत्यत्र पूर्वस्थाने लुकं प्रयुञ्जानो लोपं विदधातीव। अभिनिहितादिसंज्ञाशब्दैः वाजसनेयि-

---

१. ऋ० प्रा० २।३४॥　　२. अ० प्रा० ३।५३॥
३. तै० प्रा० ११।१॥

प्रातिशाख्येऽन्यत्र कार्यादर्शनात् परकीया एताः संज्ञाः—इत्यनुमीयते। उवटोऽपि–लुक् लुप्यते–इत्येव व्याचचक्षे, फलसाम्याद् विसंवादं तु न निर्दिदेश।

(१४) गाहमानः···अदुहः (वा० प्रा० ४।६३)–प्रकृतिभाव ऋक्षु (वा० प्रा० ४।८०) इति प्रकृतिभावे प्राप्तेऽयमारम्भः। ऋक्षु पादान्त-सन्धिरतिविरलः[1]। अन्तःपादम् अपि बहुषु स्थलेषु प्रकृतिभाव ऋक्षु दृश्यते, छन्दोऽनुरोधात्[2]। यत्र खल्वपि सन्धिर्दृश्यते, तत्राप्युच्चारण-काले प्रकृतिभावेनैव भाव्यम् इति पाश्चात्त्याः[3]। अत एव गाहमाना-दिशब्देष्वपि क्वचिद् व्यभिचारो लक्ष्यते। तथा हि–ऋचि वर्त्तमानः शिवः (मा० सं० ३ ६१; २७।३) इति शब्दः पूर्वस्थले पूर्वरूपम् अनु-भवति, परस्थले तु प्रकृत्या तिष्ठति।

प्रातिशाख्यसूत्रपठिता गाहमानादिशब्दा ऋक्षु प्रायेण पादान्ते वर्त्तमाना अपि प्रकृतिभावं नानुभवन्ति। विशेषत्वात् पाणिनेरत्र न प्रयासः।

(१५) वोऽहं सोऽहं सोऽस्माकं तेऽभिगरो वोऽर्वाची। (वा० प्रा० ४।६४)–ऋक्षु प्रकृतिभावे प्राप्त आरम्भः। तत्र सोऽहं, सोऽस्माकं, वोऽर्वाची इत्येते ऋक्षु अन्तःपादं वर्त्तन्ते, वोऽहम् इति पादान्ते वर्त्तते। तेऽभिगरः (मा० सं० ८।४७) इति न ऋचि, अतोऽत्र पाठः प्रपञ्चार्थः, यजुष्षु च (वा० प्रा० ४।७८) इति सिद्धत्वात्। ईदृशः प्रपञ्चो बहुत्रोपलभ्यते प्रातिशाख्ये।

(१६) येऽन्नात्रयोः, अविद्यासम्भूत्योश्च, उपस्थेऽन्तस्तेभ्योऽकरम् (वा० प्रा० ४।६५–६७)–सर्वत्र ऋक्त्वात् प्रकृतिभावप्राप्तौ विधिः।

(१७) नमोऽस्त्वसौत्रामण्याम् (वा० प्रा० ४।६८)–माध्यन्दिन-संहिताया एकोनविंशतितममारभ्यैकविंशतितमम् यावत् त्रयोऽध्यायाः सौत्रामणी यागे विनियुक्ताः[4]। तत्रैकम् उदाहरणं (मा० सं० १९।६८) प्रकृतिभावस्य। ततोऽन्यत्रापि यः प्रकृतिभावः सोऽपि संगृह्यते (वा० प्रा० ४।८३)।

---

१. वैदिकव्याकरण, पृ० ७९॥ २. वैदिकव्याकरण, पृ० ८९॥
३. ए० ए० मैक्डानल, वैदिक ग्रामर पृ० ६६॥
४. का० श्रौ० सू० अध्याय १९॥

(१८) विश्वेऽग्रे विशो रायोऽनग्नौ (वा० प्रा० ४।६९)–युञ्जानः प्रथमम् (मा० सं० ११।१) इत्यत आरम्य स्वाद्वी त्वा (मा० सं० १९।१) इति यावद् 'अग्निः' इत्युच्यते[1]। विश्वे, अग्रे इत्यनयोरग्नेरन्यत्र (मा० सं० ३३।२२; २९।२९) प्रकृतिभावो दृश्यते।

(१९) सूर्योऽग्नेऽभौ, रिषो यवसे पुरुप्रियोऽन्नपतेऽर्णवे (वा० प्रा० ४।७०, ७१)–इमे शब्दा अवर्णपराः पूर्वरूपम् आपद्यन्ते।

(२०) व्यपरे च (वा० प्रा० ४।७२)—एकारौकाराभ्यां बकारयकारपरेऽवर्णे पूर्वोत्तरयोः पूर्वरूप एकादेशो भवतीत्यर्थः। अयमेवार्थः पाणिनिना—नान्तःपादमव्यपरे[2] (अ० ६।१।११५) इति सूत्रेण प्रतिपाद्यते। पाणिनीयमतेनान्तःपादम् ऋक्पादमध्येऽयं प्रकृतिभावप्रतिषेधः। प्रातिशाख्ये यद्यपि–प्रकृतिभाव ऋक्षु (वा० प्रा० ४।८०) इति प्राप्तावस्य सूत्रस्यारम्भाद् ऋक्ष्वेवायं पूर्वरूप एकादेश ज्ञाप्यते, तथाप्यन्तःपादश्रवणाभावात् पादान्तेऽप्यनेन पूर्वत्वं स्याद् इति संदिह्येत। अत्र ऋक्प्रातिशाख्य-विधानं स्फुटतरकं विद्यते। तथा हि–

**अन्तःपादमकाराच्चेत् संहितायां लघोर्लघु।**
**यकाराद्यक्षरं परं वकाराद्यपि वा भवेत्**॥[3] इति॥

अत्र खलु लघोर्लघुग्रहणात् पाणिनेः अव्याद्० (अ० ६।१।११६) इति सूत्रस्यापि नावश्यकतास्ति। अपवादास्तु तत्रापि परिगणिता एव। तैत्तिरीयप्रातिशाख्यं तु–**यवनहपरः स्वरपरेषु**[4]–इति लोपं शास्ति।

(२१) गवे…वसन्तः, अवोस्त्वग्ने…अन्येन, पणयो…अम्बिके, नो…अहिः, ब्राह्मणः (वा० प्रा० ४।७३–७७)–सर्वत्र पूर्वरूप एकादेशो विधीयते।

(२२) यजुष्षु च (वा० प्रा० ४।७८)–यजुष्षु पूर्वरूप एकादेशोऽनेन विधीयते। उत्सर्गोऽयम्, अपवादास्तु प्रकृतिभावे निरूपयिष्यन्ते। पाणिनिः—एङः पदान्तादति (अ० ६।१।१०९) इति सूत्रेण पूर्वरूपम् एकादेशं विदधौ।

---

१. का० श्रौ० सू० अध्याय १६-१८॥
२. प्रकृत्यान्तःपादमव्यपरे-इति पाठभेदः॥
३. ऋ० प्रा० २। ५॥
४. तै० प्रा० १२।४॥

(२३) सङ्क्रमे च सर्वत्र (वा० प्रा० ४।७९)—**गलत्पदानामतिक्रम्यागलता सह सन्धानं संक्रमः**[1] । त्रिपदाद्यावर्त्तमाने सङ्क्रमः (वा० ४।१६६) । संक्रमे यजुष्षु ऋक्षु च सर्वत्रैकारौकाराभ्याम् अकारः पूर्वरूपम् आपद्यते । पाणिनीयविधानं तु सर्वत्र पूर्ववद् एव ।

### ५. ३. ३. (९) ह्रस्व आदेशः—

(२४) कण्ठ्य ऋकारे ह्रस्वम् (वा० प्रा० ४।४८)–विश्वकर्मा । ऋषिः ।। विश्वकर्म ऋषिः (मा० सं० १३।५८) । येन । ऋषयः ।। येनऽऋषयः (मा० सं० १५।४९) ह्रस्वस्यापि ह्रस्वत्वं भवति, आदेशसामर्थ्याच्च पुनः सन्धिर्न जायते । पाणिनिस्तु—ऋत्यकः (अ० ६।१।१२८) इति सूत्रेण शाकल्यमतेन तावद् ऋकारे परतोऽको ह्रस्वत्वं प्रकृतिभावं चानुशशास । लोकवेदसाधारण्यात् पाणिनीयशास्त्रम् अधिकं क्षेत्रं व्याप्नोति ।

### ५. ४. प्रकृतिभावः—

(२५) प्रकृतिभाव ऋक्षु (वा० प्रा० ४।८०)—गाहमानादिसूत्रैर्विहितात् पूर्वरूपाद् अन्यत्र, ऋक्षु प्रकृतिभावोऽनेन विधीयते । अयं प्रकृतिभाव ऋचः पादमध्ये भवतीति ऋक्प्रातिशाख्यविधानाद्[2] ज्ञाप्यते । पाणिनिना—नान्तःपादमव्यपरे (अ० ६।१।११५) इति व्यक्तमेवान्तःपादम् इत्यभ्यधायि । पादशब्देन चात्र ऋक्पादस्यैव ग्रहणम् इष्यते, न तु श्लोकपादस्येति वृत्तिकारः[3] ।

अत्र प्रातिशाख्यकृतः प्रकृतिभाव-शब्दापेक्षया पाणिनेः प्रकृत्याशब्दो युक्ततरः, प्रकृतिभावेन, प्रकृत्या इति शब्दाभ्याम् अग्रिमसूत्रेष्वन्वयदर्शनात् । अत एवोवटोऽप्यग्रिमसूत्रव्याख्याने प्रकृतिभावशब्दं विहाय प्रकृत्याशब्दं प्रयुयुजे । पाणिनेः–अन्तःपादम् इति न्यासोऽपि प्रातिशाख्यस्य ऋक्षुपदापेक्षया ज्यायान्, सूक्ष्मेक्षणत्वात् । अपवाद-परिसंख्याने तु प्रातिशाख्यस्यैव ज्यायस्त्वं, तस्य स्वचरणे नियतत्वात्, पाणिनीयतन्त्रस्य च सर्ववेदपारिषदत्वात् ।

तेषामृग् यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुः

---

१. वा० प्रा० ४।७९ उ० भा० ।। २. ऋ० प्रा० २।३४ ।।
३ का० ६।१।११५ ।।

शब्दः'[1]—इति जैमिनिः ऋक्सामयजूंषि लक्षयति। तत्र पादव्यवस्थावत्त्वमृक्त्वम्, अर्थवशेनेत्युपलक्षणत्वाद् वृत्तवशेनेत्यपि पादव्यवस्थायां हेतुरिति व्याख्यातारः'[2]। प्रश्लिष्ट-पठिता मन्त्रा यजुरिति पार्थसारथिः'[3]। वाजसनेयिसंहितायाम् उपलभ्यमाना ऋचः प्राय ऋग्वेदे (शाकलसंहितायां) सन्निविष्टाः। सन्ति हि बह्वय ऋचो याः शाकलसंहितायां न संगृह्यन्ते,पाठभेदेन वा संगृह्यन्ते। वाजसनेयिनाम् ऋग्यजुषाणां विवेकः कात्यायनीयसर्वानुक्रमसूत्रे, वासिष्ठशिक्षायां च[4] समुपलभ्यते।

**एकीकृत्वा ऋचः सर्वा मुनिषड्वेदभूमिताः।**
**एवं सर्वाणि यजूंषि रामाश्विवसुयुग्मकाः॥**[5]

इति वासिष्ठशिक्षायां १४६७ ऋचः, २८२३ यजूंषि च प्रतीकग्राहं परिसंख्यायन्ते।

वाजसनेयिसंहितयोः पूर्वरूपसन्धिः स्वल्पास्वेव ऋक्षु दृश्यते, स गाहमानादिसूत्रैः परिदर्शितः। यजुष्षु तु पूर्वरूपं प्रायेण दृश्यत इति पूर्वं प्रदर्शितम एव। यत्र त्वेष सन्धिर्न दृश्यते, तानि प्रकृतिभावस्थलानि ह्यग्र उल्लेखिष्यन्ते।

(२६) जुषाणश्चानध्वनि (वा० प्रा० ४।८१)–पाणिनीयमतेन-आपो जुषाणो० (अ० ६।१।११८) इति प्रकृतिभावः। **जुषाणो अप्तुराज्यस्य** (मा० सं० ५।३५) इत्युवटेनोदाह्रियते। वृत्तावपीदमेवोदाहरणम्। **जुषाणोऽध्वाज्यस्य** (का० सं० ११।१।४) इति प्रत्युदाहरणं काण्वशाखायामेवोपलभ्यते, न तु माध्यन्दिनशाखायाम्।

(२७) ते चानुदात्तम् अनुदात्ते (वा० प्रा० ४।८२)–यस्तु क्वचित्—**ते अन्धः** (मा० सं० ७।७) इत्यादिषु-उदात्तेऽपि प्रकृतिभावः, स ऋक्त्वात् (वा० प्रा० ४।८०) सिद्धः। यद्यपि–**ते अग्ने** (मा० सं० २।१४), **ते अग्नयः** (मा० सं० ५।८) इत्यादिषु पाणिनीयैः—अनुदात्ते च कुधपरे (अ० ६।२।१२०) इति सूत्रेण प्रकृति-

१. पू० मी० २।१।३५-३७॥
२. सोमनाथ: मयूखमालिका शास्त्रदीपिकाटीका, पृ० ११५॥
३. शास्त्रदीपिका, पृ० ११५॥
४. शि० सं०, पृ० ३६-४५॥
५. शि० सं०, पृ० ४५॥

भावः साधयितुं शक्यते, तथापि—**ते अस्तु** (**मा० सं०** ३।६३), **ते अंशु** (**मा० सं०** ७।२६) इत्यादीनि न शक्यन्ते संग्रहीतुम् ।

(२८) हेड आपो...संसदः (वा० प्रा० ४।८२)—हेडादीनाम् एकारौकाराभ्याम् अवर्णे परतः प्रकृतिभावोऽनेन सूत्रेण शिष्यते । अत्र केषाञ्चित् शब्दानां ग्रहणं प्रपञ्चार्थम्, ऋक्त्वादेव सिद्धत्वात् । पाणिनीयतन्त्रेण त्वेतेषु स्वल्पानाम् एव शब्दानां प्रकृतिभावोऽन्वाख्यातुं शक्यते । तथा हि—**आपो अस्मान्** (मा० सं० ४।२), इत्यत्र-आपो जुषाणो० (अ० ६।१।११८) इति प्रकृतिभावः । **अग्ने गुवो अग्ने** (मा० सं० १।१२) **आग्ने अग्निम्** (मा० सं० १।१७), **इमा मे अग्ने** (मा० सं० १७।२), **आवित्तो अग्निः** (मा० सं० १०।९), **स्विष्टो अग्निः** (मा० सं० २१।५८), **प्रणीतो अग्निः** (मा० सं० १९।१७), **दूरे अघशंसः** (मा० सं० १३।११), **सधस्थे अङ्गिरस्वत्** (मा० सं० ११।६१), **सो अध्वराय** (मा० सं० ३३।७५), **देवो अग्निः** (मा० सं० २१।५८) इत्येतेषु-अनुदात्ते च कुधपरे (अ० ६।१।१२०) इति प्रकृतिभावः । **प्राणो अङ्गे अङ्गे, उदानो अङ्गे, अङ्गे अङ्गे** (मा० सं० ६।२०) इत्येतेषु-अङ्ग इत्यादौ च (अ० ६।१।११९) इति प्रकृतिभावः । **वृष्णो अंशुभ्याम्** (मा० सं० ७।१) इत्यादिषु-आपोजुषाणो वृष्णो० (अ० ६।१।११८) इति प्रकृतिभावः ।

**उरो अन्तरिक्ष** (मा० सं० ४।७) इत्येकमेवोदाहरणम्, **उर्वन्तरिक्ष** (का० सं० ४।३।१) इति काण्वपाठः । पाणिनिः—यजुष्युरः (अ० ६।१।११७) इति प्रकृतिभावं विधत्ते । तत्र—**उरः शब्द एङन्तो यजुषि विषयेऽति प्रकृत्या भवति । उरो अन्तरिक्षम्**[1]—इति वृत्तिकारः । उरो अन्तरिक्षम्-इत्युदाहरणं सम्प्रत्युपलभ्यमाने वैदिकवाङ्मये न क्वचिद् उपलभ्यते । यस्तु-उरो अन्तरिक्ष-इति पाठो वैदिकवाङ्मये[2] श्रूयते, तत्र न उरस्शब्दः किन्तु उरुशब्दः सम्बुध्यन्तः । इत्थं चासङ्गतिम् अभिसमीक्ष्य प्राह वृत्तिकारः—**अपरे यजुष्युरो इति सूत्रं पठन्ति, उकारान्तम् उरुशब्दं सम्बुद्धयन्तम् अधीयते । त इदमुदाहरन्ति—उरो अन्तरिक्षं सजूरिति**[3] । अत्रापि अन्तरिक्षम् इत्यपपाठ एव प्रतिभाति,

---

१. का० ६।१।११७ ॥

२. मा० सं० ४।७; मै० सं० १।२।२ ॥

३. का० ६।१।११७ ॥

यजुः-शाखास्वनुपलम्भात्, उरो अन्तरिक्ष सजूर्देवेन[1]-इत्युपलम्भाच्च। अतः—यजुष्युरो-इति सूत्रपाठ एव युक्तः।[2]

(२९) छन्दो अङ् कुपमङ् काङ् कमस्त्रीवयः (वा० प्रा० ४।८४) **-छन्दो अङ्कुपम्** (मा० सं० १५।४), **छन्दो अङ्काङ्कम्** (मा० सं० १५।५) इत्यत्र पाणिनीयमतेन—अनुदात्ते च कुधपरे (अ० ६।१।१२०) इति प्रकृतिभावः।

(३०) का···अस्तिषु (वा० प्रा० ४।८५)-कादयः शब्दा यथा-संख्यम् ईमादिषु प्रकृत्या भवन्तीत्यर्थः। यण्गुणसवर्णदीर्घत्वानि बाध्यन्ते। पाणिनीयाष्टके यण्गुणसवर्णदीर्घाणां प्रकृतिभावस्य प्रति-पादनं नोपलभ्यते। वार्त्तिककृता तु—**ईषा अक्षादिषुच्छन्दसि प्रकृति-भावमात्रम्**[3]-इति छन्दसि प्रकृतिभावो व्यधायि। तत्र भाष्यकारः= **ईषा अक्षः** (ऋ० ८।५।२९), **का ईमिरे** (मा० सं० २३।५५) इत्यु-दाजहार।

(३१) प्रगृह्यं स्वरे (वा० प्रा० ४।८६)-पाणिनिरपि-प्लुत-प्रगृह्या अचि नित्यम् (अ० ६।१।१२५) इति सूत्रेण प्रगृह्यसंज्ञकस्य प्रकृतिभावं शास्ति।

(३२) न रोदसीमे (वा० प्रा० ४।८७)-विशिष्टोऽयं प्रकृति-भावप्रतिषेध इति पाणिनीयतन्त्रे न संगृह्यते।

(३३) विरुपतीवोपस्थिते (वा० प्रा० ४।८८)-अयमपि विधिः पाणिनिना न संगृह्यते। वृत्तिकारस्त्वाह—**ईदादीनां प्रगृह्यत्वे मणी-वादीनां प्रतिषेधो वक्तव्यः**[4]—इति। हरदत्तश्चोचे—**मणीवादीनां सिद्धये इति शेषः। न चेदं वचनं, भाष्यवार्त्तिककाराभ्याम् अपठित-त्वात्, किन्तु मणीवादीनां निर्वाहः कर्तव्य इत्यर्थः। तत्र मणीवोष्ट्रस्य इत्यत्र वशब्दस्योपमानार्थस्य प्रयोगः। रोदसीव इत्यादौ छान्दसत्वाद् इति निर्वाहः**[5]—इति।

---

१. तै० सं० १।३।८।१॥
२. पाल थीमे : पाणिनि एण्ड दि वेद, पृ० ५३-५५॥
३. महा० ६।१।१२७ वा० २॥
४. का० १।१।११॥ ५. पद० १।१।११॥

(३४) उकारोऽपृक्तोऽस्पर्शात् (वा० प्रा० ४।८९)–माध्यन्दिन-संहितायां स्पर्शात् (मकारात्) परे त्रय अपृक्ता उकाराः (मा० सं० ८।६१, १७।८८, २३।९), तत्र यथाविधि प्रकृतिभावाभावः। पाणिनीयमतेन तु—निपात एकाजनाङ् (अ० १।१।१४) इति प्रगृह्यसंज्ञा, प्लुतप्रगृह्या अचि नित्यम् (अ० ६।१।१२५) इति प्रकृतिभावः। स्पर्शाद् उत्तरेषु तु–मय उञो वो वा (अ० ८।३।३३) इति विभाषा वकारादेशः। सा चात्र व्यवस्थितविभाषेति स्पर्शाद् उत्तरं वकार एवोपलभ्यते, न तु प्रकृतिभावः।

(३५) प्लुतमितौ (वा० प्रा० ४।९०)–विवेशा३ (मा० सं० २३।४९) इत्येकस्मिन् एवायं विधिः। पाणिनेस्तु-प्लुतप्रगृह्या अचि नित्यम् (अ० ६।१।१२५) इति प्रकृतिभावः।

(३६) ओकारश्च (वा० प्रा० ४।९१)–इतावित्यनुवर्त्तनात् स्वरमात्रे प्रकृतिभावो न भवति। यथा–कृशानवेते (मा० सं० ४।२७) इत्युवटः। प्रगृह्यसंज्ञाप्रसङ्गे (वा० प्रा० १।९४) तु स एव-अध्वर्यो अद्रिभिः (मा० सं २०।३९) इत्युदाजहार। एवमत्रोवटग्रन्थे संवादो न लभ्यते। पाणिनीयास्तु–ओत्, सम्बुद्धौ शाकल्यस्येतावनार्षे (अ० १।१।१५, १६) इति प्रगृह्यं विधाय, प्लुतप्रगृह्या अचि नित्यम् (अ० ६।१।१२५) इति प्रकृतिभावमाहुः।

(३७) उकारोऽपृक्तो दीर्घम् अनुनासिकम् (वा० प्रा० ४।९३)–पाणिनिना तु–उञ ऊँ (अ० १।१।१७) इति शाकलपक्षे प्रगृह्यत्वं दीर्घानुनासिकत्वं च विहितम्। ततश्च—प्लुतप्रगृह्या अचि नित्यम् (अ० ६।१।१२५) इति प्रकृतिभावः।

### ८. ५. व्यञ्जन-सन्धिः

### ८. ५. १. रेफाद्यागमाः—

(१) वनसदोऽवेटो रेफेण (वा० प्रा० ३।४९)–वनर्षदः (मा० सं० ३३।१) इत्यत्र रेफागमः। पाणिनेरत्र न साक्षाद् विधानम्। पाश्चात्त्य-विद्वद्भिरयं रेफो मौलिक इत्यास्थीयते।[1]

---

१. वैदिकव्याकरण, पृ० १६८ टि० ९९,९९क॥

(२) पत्यौ च सकारेण (वा० प्रा० ३।५०)–**वनस्पतिः** (मा० सं० ४।११) । इत्यत्र सकारागमः । पाणिनीयमतेनात्र पारस्करप्रभृतीनि च संज्ञायाम् (अ० ६।१।१५७) इति सुट् क्रियते ।[1]

(३) ऋतावरौ च पतिपरयोः (वा० प्रा० ३।५१)–**ऋतस्पते** (मा० सं० २७।३४), **अवरस्पराय** (मा० सं० ३०।१९) इत्यत्रापि पारस्करप्रभृतित्वात् सुट् ।

(४) तद्बृहतौ करपत्योस्तलोपश्च (वा० प्रा० ३।५२)–तद्-बृहच्छब्दौ यथासंख्यं करपतिशब्दयोः परतः सकारेण व्यवधीयेते, तत्सन्नियोगेन च तलोपः । पाणिनीयतन्त्रे पारस्करप्रभृतिगणे (अ० ६।१।१५७)–**तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च**–इति गणसूत्रं प्रायेण प्रातिशाख्यसूत्रानुपूर्वीयुतं तदर्थप्रतिपादकं चोपलभ्यते । औत्तरकालिकोऽयं प्रक्षेपो गण इति कपिलदेवः[2] । प्रातिशाख्येऽर्थनिर्देशो न क्रियते । पाणिनीयैरपि–संज्ञाग्रहणाद् उपाधिपरिग्रहे सिद्धे गणे चोरदेवताग्रहणं प्रपञ्चार्थम्–इत्यूरीक्रियते[3] ।

(५) परि कृते षकारेण (वा० प्रा० ३।५३)–**परिष्कृताः** (मा० सं० २१।४२) इत्यत्र पाणिनीयप्रक्रियया–सम्पर्युपेभ्यः करोतौ भूषणे (अ० ६।१।१३७) इति सुड् विधीयते । ततः—परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् (अ० ८।३।७०) इति मूर्द्धन्यादेशः ।

(६) चन्द्रे सु शकारेण (वा० प्रा० ३।५४)–**सुश्चन्द्रः** (मा० सं० १५।४३) इत्यत्र पाणिनीयमतेन–ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे (अ० ६।१।१५१) इति सुड्विधिः, ततः—स्तोः श्चुना श्चुः (अ० ८।४।४०) इति श्चुत्वम् ।

## ५. ५. २. (१) नतिः (षत्वादेशः)

प्रातिशाख्येषु दन्त्यस्य मूर्द्धन्यापत्तिर्नतिपदेनाभिधीयते । अत्र षत्वष्टुत्वणत्वानि नतिशीर्षकेण विविच्यन्ते । (१)

(७) भाविभ्यः सः षं समानपदे, अनुस्वाराच्च तत्पूर्वात्, करेफाभ्यां च (वा० प्रा० ३।५६–५८)–पाणिनीयप्रक्रियानुसारम्–इण्कोः,

१. का० ६।२।१४० ॥

२. गणपाठः एस्क्राइब्ड टु पाणिनि, पृ० ३६६ ॥ ३. का० ६।१।१५७ ॥

नुम्विसर्जनीयशर्व्यवायेऽपि, आदेशप्रत्यययोः, शासिवसिघसीनां च (अ० ८।३।५७-६०)-इति सूत्रजालेन मूर्द्धन्यादेशो विधीयते। अत्र प्रातिशाख्यविधानेनावर्णभिन्नस्वरेभ्य उत्तरस्य सकारमात्रस्य षत्वं विधीयते, पाणिनीयमतेन पुनरादेशप्रत्यययोरिति विशेषः। ततश्च-**पुंसः** (मा० सं० २५।४५) इत्यत्र प्रातिशाख्यमते षत्वं स्यादेव। अनुस्वारात् ककाराच्च परस्य षत्वं व्याकरणसिद्धम्। अत्र लेखनं तु हिंसीर्ऋक्सामयोरित्यादिनिषेधस्य वक्ष्यमाणत्वात् प्राप्तिप्रदर्शनार्थम्[1]-इति प्रातिशाख्यप्रदीपशिक्षाकारः।

(८) नेः सीदतेः, ससाद च (वा० प्रा० ३।५९,६०)-**निषीदत** (मा० सं० ७।३४), **निषसाद** (मा० सं० १०।२७) इत्यादिषु पाणिनीयतन्त्रे-सात्पदाद्योः (अ० ८।३।१११) इति निषेधे प्राप्ते, सदिरप्रतेः (अ० ८।३।६६),स्थादिष्वभ्यासेन चाभ्यासस्य (अ० ८।३।६४) इति पुनर्विधानम् उभयत्र यथासंख्यम्।

(९) औकारात् सु, ओश्चापृक्तात्, अभेश्च (वा० प्रा० ३।६१-६३)-**मो षु णः** (मा० सं० ३।४६), **ऊ षु णः** (मा० सं० ११।४२) **अभी षु णः** (मा० सं० ३६।६) इत्येतेषु पाणिनिः—सुञः (अ० ८।३।१०७) इति सूत्रेण मूर्द्धन्यं विदधौ।

(१०) परेश्च सिञ्चतेः, अभेश्च, अव्यवहितोऽपि (वा० प्रा० ३।६४-६६)-**परिषिञ्चन्ति** (मा० सं० २०।२८), **अभिषिञ्चामि** (मा० ९।३०),**अभ्यषिञ्चन्** (मा० सं० १०।१) इत्येतेषु पाणिनीयमतेन-उपसर्गात् सुनोति० (अ० ८।३।६५), प्राक् सितादड्व्यवायेऽपि (अ० ८।३।६३) इति षत्वम्।

(११) वेर्युदयः (वा० प्रा० ३।६७)-**विष्यामि** (मा० सं० १२।६५) इत्यत्र पाणिनेः—उपसर्गात् सुनोतिसुवतिस्यति० (अ० ८।३।६५) इति षत्वम्।

(१२) हेर्मिथोदयः, द्यवेश्च(वा० प्रा० ३।६८,६९)-**हि ष्मा** (मा० सं० ३।४६) **हि ष्ठा** (मा० सं० ११।५०), **द्यवि ष्ठ** (मा० सं० ३३।५३) इत्यादिषु पाणिनेः—पूर्वपदात् (अ० ८।३।१०६) इति

---

१. शि० सं०, पृ० २३६॥

षत्वम् । असमासेऽपि यत् पूर्वपदं तदपीह गृह्यते इति वृत्तिः ।[१] एतच्च सवनादिषु (अ० ८।३।१०८) सवने सवने इति पाठाद् अवसीयते ।[२]

(१३) नेः स्त्यास्तनोः, ततक्षौ (वा० प्रा० ३।७०-७१)-**निष्ट्यायताम्** (मा० सं० ६।१५), **निष्टनिहि** (मा० सं० २९।५६), **निष्टतक्षुः** (मा० सं० १७।२०, ९२) इत्येषूवटमतेनाद्ययोर्निरित्युपसर्गः, अन्त्ये तु निस् इति । पदपाठकारस्तु सर्वत्र निस् इत्युपसर्गं मेने । तत्राद्ययोः सकारलोपोऽपि द्रष्टव्यः[३] । पाणिनीयमतेनाद्ययोः—पूर्वपदात् (अ० ८।३।१०६) इति, अन्त्ये च यजुष्येकेषाम् (अ० ८।३।१०४) इति षत्वम् ।

(१४) अनोः स्तुवन्त्याम् (वा० प्रा० ३।७२)—**अनुष्टुवन्ति** (मा० सं० ३३।९७) इत्यत्र पाणिनीयमतेन—उपसर्गात् सुनोति० (अ० ८।३।६५) इति षत्वम् ।

(१५) दुःष्वप्न्यम् (वा० प्रा० ३।७३)—निपातनमेतत् । पाणिनेस्तु—पूर्वपदात् (८।३।१०६), नुम्विसर्जनीयशर्व्यवाये (अ० ८।३।५८) इति षत्वम् ।

(१६) वन्दारुर्माकिः (वा० प्रा० ३।७४)-**वन्दारुष्टे, माकिष्टे** इत्यत्र पाणिनीयमतेन-यजुष्येकेषाम् (अ० ८।३।१०४) इति षत्वम् ।

(१७) सहेः पृतनायाः (वा० प्रा० ३।७५)-पाणिनिः **पृतनाषाह्याय** (मा० सं० १८।६८)-इत्यादिषु—सहेः पृतनर्त्ताभ्यां च (अ० ८।३।१०९) इति सूत्रेण षत्वं विदधौ । **पृतनाषाड्** इत्यत्र—सहेः साडः सः (अ० ८।३।५६) इति मूर्द्धन्यो विधीयते । प्रातिशाख्यकार **ऋताषाट्** (मा० सं० १८।३८) इत्यत्र षत्वं न विदधौ ।

(१८) सधिरंशुरदितिः, वायुरग्निरग्नेरेकाक्षरे, सकारपरे च, मातृभिर्रर्चिभिः पायुभिर्वरूत्रीः (वा० प्रा० ३।७६-७९)-अत्र सर्वत्र तव-ते-त्वा-तान्-त्वम्परकस्य सकारस्य षत्वं दृश्यते । पाणिनीयमतेन तु—युष्मत्तत्तक्षुःष्वन्तःपादम्, यजुष्येकेषाम् (अ० ८।३।१०३; १०४) इति षत्वम् । सकारपरेग्रहणात् **विष्णुस्त्वाक्रमताम्** (मा० सं० १।९); **सवितुस्त्वा प्रसवे** (मा० सं० १।३१) इत्यत्र न षत्वम् । पाणिनेस्तु

---

१. का० ८।३।१०६ ॥ २. पद० ८।३।१०६ ॥

३. महा० ८।३।३६ वा० १ ॥

व्यवस्थितविकल्पत्वात् षत्वाभावः। प्रातिशाख्यमते **वायुस्तत्, अग्निस्तत्** (मा० सं० ३२।१) इत्यत्रापि षत्वेन भाव्यम्, पाणिनेस्तु व्यवस्थितविकल्पः स्यात्।

### ५. ५. २. (२) सकारप्रकृतिभावः

(१९) प्रकृत्या नानापदस्थे तकारे (वा० प्रा० ३।८१)—अधिकारोऽयम्। समानपदस्थः सकारः प्रकृत्या, नानापदस्थः सकारस्तु तकारे प्रकृत्येति सूत्रार्थः।

(२०) अनु सन्तनोतु···चतुस्त्रिंशत् (वा० प्रा० ३।८२)—पाणिनीयमतेन—सवनादेः (अ० ८।३।११०) इति प्रतिषिध्यते। तिसृभिः—इत्यादिषु पाणिनिमतेन प्राप्तिरेव नास्ति।

### ५. ५. ३. नतिः (ष्टुत्वम्)—

(२१) षात् तथौ मूर्द्धन्यम् (वा० प्रा० ३।८०)—षकारात् परौ तथौ मूर्द्धन्यौ भवतः। यथासन्नन्यायात् (वा० प्रा० १।१४२) तकारस्य टकारः, थकारस्य ठकारः। पाणिनेस्तु—ष्टुना ष्टुः (अ० ८।४।४१) इति टवर्गादेशे, आन्तरतम्यात् (अ० १।१।५०) टकारठकारौ भवतः।

### ५. ५. ४. (१) नतिः (णत्वादेशः)—

(२२) ऋषरेभ्यो नकारो णकारं समानपदे (वा० ३।८५)—अन्तःपदनतिर्व्याकरणविषयः सन्नप्यत्र प्रतिपाद्यते। पाणिनेस्तु—रषाभ्यां नो णः समानपदे (अ० ८।४।१) इति णत्वविधानम्। तत्र सूत्रे ऋकारग्रहणं न क्रियते इति वार्त्तिककारः पूरयति—**रषाभ्यां णत्वे ऋकारग्रहणम्**—इति। महाभाष्यकारस्तु क्षुभ्नादिषु (अ० ८।४।३९) तृप्नोतिग्रहणेन ज्ञापयति—ऋकारादपि नकारस्य णकार इति। अत्र प्रातिशाख्यकारेण पाणिनीयं सूत्रं संशोध्य स्वकीयं सूत्रं रचितम् इति प्रतिभाति।

(२३) स्वरयवहकपैश्च (वा० प्रा० ३।८६)—पाणिनिरपि-अट्कुप्वाङ्नुम्व्यवायेऽपि (अ० ८।४।२) इत्यडादिव्यवधानेऽपि णत्वं विदधाति। प्रातिशाख्यकार आङ्नुम्व्यवाये पाणिनिरिव णत्वं नार-

भते, तदुदाहरणाभावाच्छुक्लयजुर्वेदे । महाभाष्यकारो वार्त्तिककार-सम्मतस्य नुमः स्थानेऽनुस्वारस्य अड्व्यवायेनैव सिद्धत्वाद् नुम्ग्रहणं प्रत्याचख्यौ ।

(२४) निषण्णाय...प्र ण आयूंषि (वा० प्रा० ३।८७)—कृत-णत्वा इमे शब्दा निपात्यन्ते । पाणिनीय-प्रक्रियया निषण्णाय इत्यत्र—रदाभ्यां निष्ठातो नः पूर्वस्य च दः (अ० ८।२।४२) इति दकारत-कारयोर्नत्वम्, सदिरप्रतेः (अ० ८।३।६६) इति षत्वम्, अट्कु० (अ० ८।४।२) इति पूर्वनकारस्य णत्वम्, ष्टुना ष्टुः (अ० ८।४।४१) इति परनकारस्य णत्वम् । परिणीयते इत्यत्र—उपसर्गादसमासेऽपि णोपदेशस्य (अ० ८।४।१४) इति णत्वम् । उरुष्या णः, रक्षा णः, षू णः, षु णः इत्यत्र—नश्च धातुस्थोरुषुभ्यः (अ० ८।४।२७) इति णत्वम् । षु णासत्या, प्र ण आयूंषि इत्यत्र—उपसर्गाद् बहुलम् (अ० ८।४।२८) इति णत्वादेशः । अन्यान्युदाहरणानि पाणिनिना न संगृह्यन्ते ।

(२५) परि ण इति शाकटायनः (वा० प्रा० ३।८८)—शाकटा-यनग्रहणं विकल्पार्थम् । सोऽपि व्यवस्थितः, काण्वादेर्भवति, न माध्य-न्दिनानाम् इत्यनन्तः ।[1] पाणिनेस्तु—उपसर्गाद् बहुलम् (अ० ८।४।२८) इति बहुलवचनाद् उभयसिद्धिः ।

(२६) प्र नेतिनुदतिहिनोमीनाम् (वा० प्रा० ३।८९)—पाणिनीय-मतेन प्रपूर्वकनयतिनुदत्योर्नकारः—उपसर्गादसमासेऽपि णोपदेशस्य (अ० ८।४।१४) इति णत्वम् आपद्यते । प्रहिणोमीत्यत्र तु—हिनुमीना (अ० ८।४।१५) इति णत्वम् ।

### ५. ९ ४. (२) नत्वप्रकृतिभावः—

(२७) प्रकृत्या पदान्तीयः (वा० प्रा० ३।९०)—पाणिनिरपि—पदान्तस्य (अ० ८।४।३७) इति योगेन पदान्तनकारस्य णत्वं प्रति-षेधति ।

(२८) निवनिनसःप्रपीनम् (वा० प्रा० ३।९१)—**बभ्रुनीकाशः** (मा० सं० २४।१८) **ब्रह्मवनि त्वा क्षत्रवनि** (मा० सं० १।१७),

१. आ० प्रा० ३।८८ अ० भा० ॥

वाध्रीनसः (मा० सं० २४।३९), प्रपीनम् (मा० सं० १७।८७) इत्येतान्युदाहरणानि । पाणिनीयास्तु—पूर्वपदात् संज्ञायामगः (अ० ८।४।३) इति योगं नियमार्थम् आतिष्ठन्ते, पूर्वपदात् संज्ञायाम् एवेति ।[1] अतो वभ्रुनीकाशादिष्वप्राप्तिः । विध्यर्थत्वेऽपि स्वीकृते, आदिमे सूत्रे-समानमेव यन्नित्यं पदं तत् समानपदम्'-इत्याश्रयणात्, समासे च पूर्वोत्तरपदविभागाद् असमानपदत्वम् अप्यस्तीति वभ्रुनीकाशादिष्वप्राप्तिः । प्रपीनम् इत्यत्र—कृत्यचः (अ० ८।४।२९)इत्यनेन प्राप्तं—न भाभूपूकमिगमिप्यायिवेपाम् (अ० ८।४।३४) इति प्रतिषिध्यते ।

(२९) श्रीमना इत्येके (वा० प्रा० ३।९२)—माध्यन्दिनानाम् अयं प्रकृतिभावः । पाणिनीयमतेन तु पूर्ववद् णत्वाभावः ।

(३०) इन्द्राग्नी चर्मम्नम् (वा० प्रा० ३।९३)—अत्रापि पूर्ववदेव णत्वाभावः ।

(३१) तवर्गे च (वा० प्रा० ३।९४)—तृम्पन्तु (मा० सं० ७।१५), अवक्रन्देन (मा० सं० २५।१) इत्यादीन्युदाहरणानि । पाणिनीयप्रक्रियायाम् एवंविधो नकारो न मौलिकः, किन्तु—नश्चापदान्तस्य झलि (अ० ८।३।२४) इत्यनुस्वारे, अनुस्वारस्य ययि परसवर्णः (अ० ८।४।५८) इति परसवर्णे, आन्तरतम्यात् (अ० १।१।५०) पुनर्नकारः । स च णत्वे कर्त्तव्ये—पूर्वत्रासिद्धम् (अ० ८।२।१) इत्यसिद्धः । न च पूर्वमेव णत्वं किं न स्याद् इति वाच्यम्, अनुस्वारे णत्वस्यासिद्धत्वात् ।

(३२) षादनन्तर ऋकारे (वा० प्रा० ३।९५)—त्वेषनृम्णः (मा० सं० ३३।८०) इत्यादिषु पाणिनीयमतेन न णत्वस्य प्राप्तिरिति पूर्वम् उपपादितम् ।

(३३) शिलिसिवर्गमध्यमव्यवहितोऽपि (वा० प्रा० ३।९६)—स्वरयवहकपैश्च (वा० प्रा० ३।८६) इति सूत्रेणैव सिद्धत्वाद् इदं प्रकृतिभावविधानं व्यर्थम् । अत एवोवटोऽप्येतद् विधानं शिष्यबुद्धिव्युत्पादनार्थं मेने ।

### ५. ९. ९. सांहितिकदीर्घत्वम्—

(३४) दीर्घम् (वा० प्रा० ३।९७)—पदान्तीयो वर्णो व्यञ्जना-

---

१. का०, महा० ८।४।३ ॥

दिषु पदेषु परतो दीर्घो भवति। क्वचित् प्रातिशाख्येषु (ऋ० प्रा० ७।१) सामवशसन्धिनाम्नाप्यस्य विवरणम् उपलभ्यते। वाजसनेयिप्रातिशाख्ये दीर्घम् (वा० प्रा० ३।९७) इत्यधिकृत्य चतुस्त्रिंशत्-सूत्रैरयं विषयः प्रतिपाद्यते। पाणिनीयतन्त्रेऽपि—संहितायाम् (अ० ६।३।११४) इत्यधिकृत्यायं विषयो विव्रियते। तत्र प्रातिशाख्यस्य स्वचरणनियतत्वात् तदीयं सूक्ष्मविवरणं स्वाभाविकम्। पाणिनीय-शास्त्रस्य तु सर्ववेदपारिषदत्वात् तत्र दिङ्मात्रमेव निर्दिश्यते।

(३५) अश्व रश्मि···वकारे (वा० प्रा० ३।९८)—पाणिनीय-मतेन अश्वावती, इन्द्रियावान् इत्यत्र–मन्त्रे सोमाश्वेन्द्रियवैश्वदेव्यस्य मतौ (अ० ६।३।१३१) इति, श्वाविद्, हृदयाविध् इत्यत्र—नह्विवृति-वृषिव्यधिरुचिसहितनिषु क्वौ (अ० ६।३।११६) इति, अभीवर्त्तः अधीवासम् इत्यत्र—उपसर्गस्य घञ्यमनुष्ये बहुलम् (अ० ६।३।१२२) इति, अवता इत्यत्र—ऋचि तुनु० (अ० ६।३।१३३) इति, अर्चा द्व्यचचोऽतस्तिङः (अ० ६।३।१३५) इति, अवशिष्टेषु च—अन्येषा-मपि दृश्यते (अ० ६।३।१३७) इति दीर्घत्वम्।

(३६) नाश्ववद्धिरण्यात्, अभिविख्येषं वीर विश्ववत्स वृत्र वाजयन्तेषु, अश्वस्य वाजिनं इति च (वा० प्रा० ३।९९–१०१)—पूर्वसूत्रेण प्राप्तस्य प्रतिषेधः।

(३७) विश्व सहभुवपुषवसुषुः, नरहामित्रेषु च (वा० ३।१०२-१०३) विश्वावसुः, विश्वानराय, विश्वामित्रः इत्यत्र–विश्वस्य वसुराटोः, नरे संज्ञायाम्, मित्रे चर्षौ (अ० ६।३।१२८–१३०) इति दीर्घत्वम्। अवशिष्टेषु—अन्येषामपि दृश्यते (अ० ६।३।१३७) इति दीर्घादेशः।

(३८) तिष्ठाद्युदात्तम् (वा० प्रा० ३।१०४)—पाणिनीयमते-नात्र-द्व्यचचोऽतस्तिङः (अ० ६।३।३।१३५) इति दीर्घत्वम्।

(३९) प्र वणश्रृङ्गयासेषु, नि वारहारयोरनवग्रहे (वा० प्रा० ३।१०५-१०६)=प्रावणेभिः, प्रा श्रृङ्गाः इत्यत्र—निपातस्य च (अ० ६।३।१३६), प्रायासाय, नीवाराः, नीहारेण इत्यत्र—उपसर्गस्य घञ्य-मनुष्ये बहुलम् (अ० ६।३।१२२) इति दीर्घत्वम्।

(४०) धारयाम···नकारे, नावनयामि (वा० प्रा० ३।१००,

१०७)—पाणिनीयमतेन योज, अव, नुद, रक्ष, यज, यच्छ, आतु इत्यत्र—द्व्यचोऽतस्तिङः (अ० ६।३।१३५) इति, मो षू णः इत्यत्र—निपातस्य च (अ० ६।३।१३६) इति, जयत, उरुष्य, पिपृत, गायत इत्यत्र—ऋचि तुनु० (अ० ६।३।१३३) इति, अवशिष्टेषु च—अन्येषामपि दृश्यते (अ० ६।३।१३७) इति दीर्घत्वम् ।

(४१) भव च, सचावस्थ्यवाजस्यपायुषु च (वा० प्रा० ३।१०६, ११०)—पाणिनेस्त्वत्र-द्व्यचोऽतस्तिङः (अ० ६।३।१३५) इति दीर्घत्वम् ।

(४२) अपृक्तः सौ (वा० प्रा० ३।१११)—ऊ षु णः इत्यत्र पाणिनेः—इकः सुञि (अ० ६।३।१३४) इति दीर्घत्वविधिः ।

(४३) रथि तकारनकारयोः (वा० प्रा० ३।११२)—**रथीतमं रथीनाम्** (मा० सं० १२।५६) इत्युदाहरणे । पाणिनीयप्रक्रियया तावद् रथीतमम् इत्यत्र—नाद्घस्य (अ० ८।२।१७)—इति नुटि प्राप्ते,—**ईद्रथिनः**[1]—इतीकारः । स च नलोपे कृते इकारस्य विधीयते । यदि तु नकारस्य स्थाने विधीयेत, तदा तस्यासिद्धत्वाद एकादेशाभावाद् रूपं न सिध्येत् । रथीनाम् इत्यत्र –**छन्दसीवनिपौ**[2]—इति मत्वर्थीय ईकारः । तथा च **रथीः** (मा० सं० १५।४५) इत्यपि सिद्धो भवति । न चैवं पदपाठेन विरोधः स्यादिति वाच्यम्, तस्य पौरुषेयत्वात्, **न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणम् अनुवर्त्यम्** इति भाष्योक्तेः[3] ।

(४४) श्रथोदारिथ···यकारे (वा० प्रा० ३।११३)—अत्र सलक्ष्मा, घा इति द्वे पदे वर्जयित्वा सर्वाणि पदानि व्याकरणसंस्कारार्हाणि । तत्र श्रथाय इति श्रथ्नातेः–छन्दसि शायजपि (अ० ३।१।८४) इति शायजन्तः । उदारिथा, पनया, सादया, सलक्ष्मा इत्यत्र—अन्येषामपि दृश्यते (अ० ६।३।१३७) इति दीर्घत्वम् । शोचा इत्यत्र—द्व्यचोऽतस्तिङः (अ० ६।३।१३५) इति दीर्घत्वम् । घा, भवता इत्यत्र—ऋचि तुनु (अ० ६।३।१३३) इति दीर्घत्वम् । ऋजूयताम्, शत्रूयतः, अरातीयतः इत्यत्र अकृत्सार्वधातुकयोर्दीर्घः (अ० ७।४।२५) इति

---

१. महा० ८।२।१७ वा० १ ॥ २. महा० ५।२।१०९ वा० २ ॥
३. महा० ५।२।१६ ॥

दीर्घादेशः। अघायतः इत्यत्र—अश्वाघस्यात् (अ० ७।४।३७) इत्याकारादेशः। ऋतायते वृषायमाणः इत्यत्र—अकृत्सार्वधातुकयोर्दीर्घः इत्यस्य—न च्छन्दस्यपुत्रस्य (अ० ७।४।३५) इति प्रतिषेधात्[1]—अन्येषामपि (अ० ६।३।१३७) इति दीर्घत्वम्।

(४५) व वृधवृजोः (वा० प्रा० ३२।११४)—अयं विधिरपि व्याकरणविषयकः। वावृधे, वावृजे इत्यत्र—तुजादीनां दीर्घोऽभ्यासस्य (अ० ६।१।६७) इति दीर्घत्वं स्यात्।

(४६) अथ…देवेषु, न होतरि (वा० प्रा० ३।११५, ११६)—पाणिनेरत्रनिपातस्य च (अ० ६।३।१३६) इति दीर्घः।

(४७) श्रृणुत…मकारे (वा० प्रा० ३।११७)—पाणिनीयमतेन श्रृणुता, भवता इत्यत्र—ऋचि तुनु० (अ० ६।३।१३३) इति, त्विषीमते, घ्रजीमान् इत्यत्र-अन्येषामपि दृश्यते (अ० ६।३।१३७) इति, पिबा, इता, तिष्ठा, रक्षा इत्यत्र-द्वयचोऽतस्तिङः (अ० ६।३।१३५) इति, स्मा इत्यत्र च-निपातस्य च (अ० ६।३।१३६) इति दीर्घत्वम्।

(४८) उष महोभि…नकारेभ्यः,पूरुषोऽवसाने(वा० प्रा० ३।११९, १२०) पाणिनीयमतेन उषासानक्ता इत्यत्र देवताद्वन्द्वे—उषासोषसः (अ० ६।३।३१) इत्युषासादेशः। अन्येषु—अन्येषामपि दृश्यते (अ० ६।३।१३७) इति दीर्घत्वम्।

(४९) पूष्णो जहीमस्तेष्वत्र, नरः सप्त ऋषीन् नस्त आहुर्नियुद्भिरषु यत्र (वा० प्रा० ३।१२१, १२२)—पाणिनेस्तु—ऋचि तुनु० (अ० ६।३।१३३) इति दीर्घत्वम्॥

(५०) अभिमाति…सहेः (वा० प्रा० ३।१२३)—पाणिनीयप्रक्रियया तु अभिमातिषाहः, विश्वासाहम् इत्यत्र—छन्दसि सहः (अ० ३।२।६३) इति ण्विः, अत उपधायाः (अ० ७।२।११६) इति वृद्धिः। घूर्षाही, सपत्नसाही इत्यत्र—कर्मण्यण् (अ० ३।२।१)इत्यणि, अत उपधायाः (अ० ७।२।११६) इति वृद्धिः॥ अवशिष्टेषु—अन्येषामपि दृश्यते (अ० ६।३।१३७) इति दीर्घत्वम्।

(५१) उक्थाच्च शसेः (वा० प्रा० ३।१२४)—उक्थशासः (मा० सं० १९।२१) इत्यत्र पाणिनीय-प्रक्रियया—मन्त्रे श्वेतवहोक्थशस्पुरो-

---

१. का० ७।४।३७॥

डाशो ण्विन् (अ० ३।२।७१) इति ण्विनि, अत उपधायाः (अ० ७।२।११६) इति वृद्धिः ।

(५२) एवाच्छ चक्रमाथ, विद्माऽसौत्रामण्याम्, अधाऽयत्स्मग्नावायुषु (वा० प्रा० ३।१२५-१२७) एवा, अच्छा, अथा, अधा इत्यत्र—निपातस्य च (अ० ६।३।१३६) इति दीर्घत्वम् । विद्मा इत्यत्र—द्व्यचोऽतस्तिङः (अ० ६।३।१३५) इति, चक्रमा इत्यत्र च – अन्येषामपि दृश्यते (अ० ६।३।१३७) इति दीर्घत्वम् ।

(५३) पूर्वो द्वन्द्वेष्ववायुषु (वा० प्रा० ३।१२८)—पाणिनीयप्रक्रियया तु—देवताद्वन्द्वे च (अ० ६।३।२६) इति पूर्वपदान्त्यवर्णस्य आनङ् आदेशः । तस्य च नकारस्य–न लोपः प्रातिपदिकान्तस्य (अ० ८।२।७) इति लोपः । अग्नीषोमौ (मा० सं० २।१४) इत्यत्र–ईदग्नेः सोमवरुणयोः (अ० ६।३।२७) इतीकारोऽन्त्यादेशः । **अग्नीन्द्राभ्याम्** (मा० सं० ७।३२) इति पाणिनिना न संगृह्यते **आग्निमारुताः** (मा० सं० २४।७) इत्यत्र—इद्वृद्धौ (अ० ६।३।२८) इत्यग्नेरिकारादेशः । **आग्नावैष्णवाः** (मा० सं० २४।८) इति पाणिनिना न संगृह्यते । वार्त्तिककारस्तु–**इद् वृद्धौ विष्णोः प्रतिषेधः**[1]–इति इकारं प्रतिषेधति, ततो यथा-प्राप्तं–देवताद्वन्द्वे च (अ० ६।३।२६)–इत्यानङ् एव भवति । वायुप्रतिषेधोऽपि पाणिनिना न व्यधायि । वार्त्तिककारस्तु–**देवताद्वन्द्वे उभयत्र वायोः प्रतिषेधः**[2]—इत्यानङ्प्रतिषेधं विदधाति । वाजसनेयिप्रातिशाख्ये वार्त्तिके च वायुप्रतिषेधः कात्यायनद्वयस्यैक्यम् इङ्गयति । अन्तिमेऽध्यायेऽयं विषय उपबृंह्यते ।

(५४) हरिशयेत्येके (वा० प्रा० ३।१२९)–व्यवस्थितविकल्पत्वात् काण्वानाम्–**हरीशया** (का० सं० ५।१२) इति दीर्घः पाठः, माध्यन्दिनानां तु ह्रस्वः । पाणिनीय-मतेन–अन्येषामपि दृश्यते (अ० ६।३।१३७) इति दीर्घत्वम् ।

(५६) पिबा सोमम्... सादन्यम् इति च (वा० प्रा० ३।१३०)–निपातितदीर्घत्वोपेता समुदाया अत्र निर्दिष्टाः । पाणिनीयमतेन पिबा इत्यादिषु–द्व्यचोऽतस्तिङः (अ० ६।३।१३५) इति, नू इत्यादिषु–ऋचि

१. महा ६।३।२८ वा० ॥
२. महा० ६।३।२६ वा० १ ॥

तुनु० (अ० ६।३।१३३) इति, परीवाप इत्यादिषु—उपसर्गस्य घञ्यमनुष्ये बहुलम् (अ० ६।३।१२२) इति, अभी षु णः इत्यत्र—इकः सुञि (अ० ६।३।१३४) इति, अश्वायन्त इत्यत्र—अश्वाघस्यात् (अ० ७।४।३७) इत्यात्वम्, यदी इत्यादिषु—निपातस्य च (अ० ६।३।१३६) इति, अवशिष्टेषु—अन्येषामपि दृश्यते (अ० ६।३।१३७) इति दीर्घत्वम्।

## ८. ५. ६. नकारविकाराः (रुत्वम्)

(५६) अनुनासिकम् उपधा प्रागन्तःस्थायाः, स्वर औपशविः, अनुस्वारेण व्यञ्जने (वा० प्रा० ३।१३१-१३३)—अन्तःस्थामन्तःस्थासु (वा० प्रा० ४।६) इति सूत्रात् प्राग् एषा त्रिसूत्री तावद् अधिक्रियते। विकारिणः पूर्वो वर्णोऽनुनासिकम् आपद्यते, स्वरे परतोऽयम् अनुनासिकादेश इत्यौपशविराचार्यः, व्यञ्जने परतस्तु तन्मतेन विकारिणः पूर्वम् अनुस्वारागमः। पाणिनेः खल्वपि—अत्रानुनासिकः पूर्वस्य तु वा, आतोऽटि नित्यम्, अनुनासिकात् परोऽनुस्वारः (अ० ८।३।२-४) इत्येषा त्रिसूत्री क्रमेण पूर्वोक्तमेवार्थं प्रतिपादयति। 'अत्र' पदेनाधिकारोऽत्र लक्ष्यते। आचार्यनामसंकीर्त्तनं विनैवात्र विभाषा विधीयते। पाणिनीयमतेनाकारस्य नित्यम् अनुनासिकः, प्रातिशाख्यमतेन तु स्वरमात्रस्य विकल्पेनानुनासिकः। नित्यानुनासिकस्य व्यभिचारोऽपि वैयाकरणैर्दृष्टः। तथा च—**केचिदनुस्वारमधीयते, स छान्दसो व्यत्ययो द्रष्टव्यः**[1]—इति वृत्तिः। केचिद् इत्यनेन च तैत्तिरीया गृह्यन्ते इति हरदत्तः[2]।

(५७) नुः, चछयोः शम्, तथयोःसम (वा० प्रा० ३।१३४-१३६)—**अहींश्च** (मा० सं० १६।५), **अन्याँस्ते** (मा० सं० १७।११) इत्यादीन्युदाहरणानि। छकारथकारयोरुदाहरणानि संहितासु नोपलभ्यन्ते। प्रातिशाख्यकारोऽत्र व्याकरणप्रभावितः प्रतिभाति। पाणिनीयप्रक्रियया—नश्छव्यप्रशान् (अ० ८।३।७) इति रुत्वम्, खरवसानयोर्विसर्जनीयः (अ० ८।३।१५) इति विसर्जनीये, विसर्जनीयस्य सः (अ० ८।३।३४) इति सकारे, स्तोः श्चुना श्चुः (अ० ८।४।४०) इति शकारे, पूर्वप्रदर्शितदिशा चानुनासिक्येऽनुस्वारे वा अहींश्चेति सिद्धम्। अन्यांस्ते इत्यत्रापि श्चुत्वर्जं सर्वं पूर्ववदेव।

---

१, का० ८।३।३॥ २. पद० ८।३।३॥

(५८) दधन्वान् स्ववान् यकारे लोपम्, रयिवृधे च (वा० प्रा० ३।१३७, १३८)—**दधन्वा यः** (मा० सं० १९।२), **स्ववा यातु** (का० सं० ३०।२०), **अन्ना रयिवृधः** (मा० सं० २७।२३) इत्यत्र पाणिनीयं विधानं साक्षाद् नोपलभ्यत इति छान्दसो लोपः कल्प्यते। नकारलोपे उपधानुनासिक्यमपि न भवति। माध्यन्दिनसंहितायां तु—**स्ववाँ यातु-** इति पाठः।

(५९) नपुंसकाद्दिकारस्य, न सप्तम्यामन्त्रितयोः (वा० प्रा० ३।१३९, १४०)–एमन्, भस्मन् इत्यादिषु नकारात् परस्येकारलोपः, सधिषि, पृथिवि इत्यादिषु लोपाभाव—इति टीकाकृदभिप्रायः। अत्र इकारस्य इति षष्ठीनिर्देशः, प्रकरणविरोधः, व्यभिचारः[1], आमन्त्रितोदाहरणं चेति सन्देहं जनयन्ति–कदाचिद् अत्र पाणिनेः—न लोपः प्रातिपदिकान्तस्य, न ङिसम्बुद्ध्योः (अ० ८।२।७, ८) इति सूत्रद्वयार्थाभिधायकं सूत्रयुगलं स्याद् इति।

(६०) नॄन् पकारे विसर्जनीयम् (वा० प्रा० ३।१४१)—**नॄँः पाहि** (मा० सं० १३।५२) इत्यत्र पाणिनीय-प्रक्रियया—नॄन् पे (अ० ८।३।१०) इति रुत्वे, तत्सन्नियोगेन च—अत्रानुनासिकः पूर्वस्य तु वा (अ० ८।३।२) इत्यानुनासिक्ये, खरवसानयोर्विसर्जनीयः (अ० ८।३। १५) इति विसर्जनीयादेशः।

(६१) शत्रून् परिधीन् क्रतून् वनस्पतीन् स्वरे रेफम् (वा० प्रा० ३।१४२)–अत्र पाणिनीयमतेन—दीर्घादटि समानपादे (अ० ८।३।९) इत्यानुनासिक्यम्।

(६२) आकारोपधो यकारम् (वा० प्रा० ३।१४३)—**महाँ इन्द्रः** (मा० सं० ७।४०) इत्यादिषु प्रातिशाख्यप्रक्रियया नकारस्य यकारे, उपधायाश्चानुनासिके, यवयोः पदान्तयोः० (वा० प्रा० ४।१२५) इति यकारलोपः। न परकालः पूर्वकाले पुनः (वा० प्रा० ३।४) इति पुनः सन्धिर्न जायते। पाणिनीयप्रक्रियया त्वत्र दीर्घादटि समानपादे (अ० ८।३।९) इति रुत्वम्, आतोऽटि नित्यम् (अ० ८।३।३) इत्यानुनासिक्यम्। भोभगोअघोअपूर्वस्य योऽशि (अ० ८।३।१७) इति यकारः, लोपः शाकल्यस्य (अ० ८।३।१९) इति यकारलोपः। अत्रापि-पूर्वत्रासिद्धम् (अ० ८।२।१) इत्यसिद्धत्वात् पुनः सन्ध्यभावः।

---

१. वा० प्रा० ३।१३९,१४० उ० भा०॥

(६३) न तमे (वा० प्रा० ३।१४४)—**मदिन्तमानाम्** (मा० सं० ८।४८) इत्यादिषु सकारप्राप्तेः (वा० प्रा० ३।१३६) प्रतिषेधः। पाणिनीयप्रक्रियया नकारान्तस्य पदस्य तमपि प्रत्यये परतः—नाद्घस्य (अ० ८।२।१७) इति नुट्, न लोपः प्रातिपदिकान्तस्य (अ० ८।२।७) इति प्रकृतिनकारस्य लोपः।

(६४) निर्जगन्वान् तमसि, धामन् शत्रून् चिकित्वान् त्वं पूषन् अर्वन् इति च (वा० प्रा० ३।१४५, १४६)—पाणिनीयमतेन—नश्छव्यप्रशान् (अ० ८।३।७) इति प्राप्तिः—उभयथर्क्षु (अ० ८।३।८) इति विकल्प्यते। व्यवस्थितविकल्पत्वाद् नात्र नकारस्य विकारः।

(६५) अश्वादौ चाध्याये, मनुष्यान् तान् लोकान् अमित्रान् उदि, आप्नोतीत्योश्च, संक्रमे च वैष्णवान्, गृहानैमि० (वा० प्रा० ३।१४७-१५१)-स्वरे परतोऽत्र नकारस्य विकाराभावः। पाणिनेस्तु छान्दसत्वात् तत्सिद्धिः।

## ८. ५. ७. मकार-नकारयोर्विकाराः—

(६६) अनुस्वारं रोष्मसु मकारः (वा० प्रा० ४।१)—रशषसहवर्णेषु परतो मकारस्यानुस्वारः। अयमनुस्वारः शुक्लयजुर्वेदे विलक्षणोच्चारणं भजते इति प्रतिज्ञापरिशिष्टे[1] शिक्षाग्रन्थेषु[2] च प्रतिपादितम्। पाणिनीयमतेन त्वत्र—मोऽनुस्वारः (अ० ८।३।२३) इत्यनुस्वारः।

(६७) नुश्चान्तःपदे रेफे (वा० प्रा० ४।२)—शषसहवर्णेषु परतो नकारमकारयोरनुस्वारो भवति पदमध्ये। पाणिनिरपि—नश्चापदान्तस्य झलि (अ० ८।३।२४) इत्यनुस्वारं विदधाति।

(६८) लोपं काश्यपशाकटायनौ (वा० प्रा० ४।४)—मकारनकारलोपेऽनुनासिकत्वे चोपधायाः-**अपाँ रसस्य** (मा० सं० ६।३), **यजूँषि** (मा० सं० २०।१२) इत्यादीन्युदाहरणानि। मुद्रितसंहितासु काश्यपशाकटायनपक्षो नोपलभ्यते। पाणिनिना खल्वप्ययं पक्षो न संगृह्यते।

(६९) प्रकृत्या सम्राट् साम्राजि (वा० प्रा० ४।५)-पाणिनीय-

१. प्रति० परि० ३।२॥ २. शि० सं० पृ० २३५॥

मतेन–मो राजि समः क्वौ (अ० ८।३।२५) इति समो मकारादेशः।

(७०) शं चे पकारादुकारोदयात् (वा० प्रा० ४।६)–**पुंश्चली** (मा० सं० ३०।२२) इत्यादौ पाणिनीयमतेन–पुमः खय्यम्परे (अ० ८।३।६) इति रुत्वे, खरवसानयोर्विसर्जनीयः (अ० ८।३।१५) इति विसर्जनीयत्वे, विसर्जनीयस्य सः (अ० ८।३।३४) इति सत्वे, स्तोः श्चुना श्चुः (अ० ८।४।४०) इति शकारः। वार्त्तिककारस्त्वत्र **संपुंकानां सत्वम्**[1]–इति सकारं विदधाति।

(७१) समन्तःपदे करवपफेष्वनूष्मपरेषु, नुश्चाम्रेडिते (वा० प्रा० ४।७, ८)–अस्य सूत्रयुगलस्य–**सँस्कृतम्** (मा० सं० ४।३४), **सँस्कृतिः** (मा० सं० ७।१४) इत्येवोदाहरणे उपलभ्येते। अत्र यद्यपि लुप्तसंहितासूदाहरणानि स्युरित्यपि सम्भाव्यते, तथापि पाणिनीयसूत्रानुकारिणी वार्त्तिककृतपरिष्कारानुरूपा च सूत्ररचना प्रातिशाख्यस्यार्वाचीनत्वम् अनुमापयति। तथा हि–समः सुटि, कानाम्रेडिते (अ० ८।३।५, १२) इति पाणिनिः। तत्र–**संपुंकानां सत्वम्, रुविधौ ह्ययनिष्ट-प्रसङ्गः**[2]–इति वार्त्तिककारः। महाभाष्यकारस्तु–समः सुटि (अ० ८।३।५) इत्यत्र द्विसकारकं निर्देशं प्रकल्प्य, सम्बन्धं चानुकृष्याक्षेपं परिहरति। पाणिनीयप्रक्रियया सँस्कृतम् इत्यादिषु–सम्पर्युपेभ्यः० (अ० ६।१।१३७) इति सुट्, समः सुटि (अ० ८।३।५) इति सकारः, पूर्वस्य च—अत्रानुनासिकः पूर्वस्य तु वा (अ० ८।३।२) इत्यानुनासिक्यम्।

(७२) अन्तःस्थाम् अन्तःस्थास्वनुनासिकां परसस्थानाम् (वा० प्रा० ४।६)–**सँय्यौमि** (मा० सं० १।२२), **सँव्वपामि** (मा० सं० १।२१), **तँल्लोकम्** (मा० सं० २०।२५) इत्यादिषु सानुनासिका यवलाः। रेफे तु परतोऽनुस्वारो विहितः। पाणिनीय-प्रक्रियानुसारं तु–मोऽनुस्वारः (अ० ८।३।२३) इत्यनुस्वारः। अनुस्वारस्य ययि परसवर्णः, वा पदान्तस्य (अ० ८।४।५८, ५९) इति परसवर्णे, आन्तरतम्यात् (अ० १।१।५०) सानुनासिकादेशः। रेफस्य सवर्णाभावात् तस्मिन् परतोऽनुस्वारोऽविकृत एव तिष्ठति।

(७३) स्पर्शे परपञ्चमम् (वा० प्रा० ४।११)—पाणिनीयप्रक्रि-

१. महा० ८।३।५ वा० १॥ २. महा० ८।३।५ वा० १, २॥

यया मकारस्य—मोऽनुस्वारः (अ० ८।३।२३) इत्यनुस्वारे, अनुस्वारस्य ययि परसवर्णः, वा पदान्तस्य (अ० ८।४।५८,५६) इति परसवर्णे, आन्तरतम्यात् स्ववर्गपञ्चमो वर्णः। पाणिनिविहितः पदान्तविकल्पो वाजसनेयिप्रातिशाख्ये नोपलभ्यते। मुद्रितसंहितासु तूपलभ्यमानो विकल्पोऽर्वाचीनः।

### ५. ५. ८. लत्वादेशः

(७४) तकारो ले लम्, नुश्चानुनासिकम् (वा० प्रा० ४।१२, १३)—पाणिनीयरीत्या—तोर्लि (अ० ८।४।६०) इति तवर्गस्य लकारः। तत्र-स्थानेऽन्तरतमः (अ० १।१।५०) इति नकारस्य स्थाने सानुनासिको लकारः।

### ५. ५. ९. आगमाः—

(७५) ङ्नौ क्ताभ्यां सकारे, न दाल्भ्यस्य (वा० प्रा० ४।१४, १५)—**प्राङ्क्सोमः**, प्राङ् सोमः (मा० सं० १६।३), **त्रीन्त्समुद्रान्**, **त्रीन्समुद्रान्** (मा० सं० १३।३१) इति विकल्पः। पाणिनीयतन्त्रेण—ङ्णोः कुक्टुक् शरि (अ० ८।३।२८) इति कुग् आगमः, नश्च (अ० ८।३।३०) इति च धुड् आगमः। उभयत्र विकल्पः। धकारस्य-खरि च (अ० ८।४।५५) इति तकारः।

(७६) स्वरश्छकारे चकारेण सर्वत्र, यस्यातिहाय सहेति न (वा० प्रा० ४।२४, २५)—**आचच्छच्छन्दः** (मा० सं० १५।५) इत्यादिषु चकारेण व्यवधानम्। **यस्य छाया** (मा० सं० २५।१३)[1], **अतिहाय छिद्रा** (मा० सं० २५।४३), **सह छन्दसि** (मा० सं० ३४।४६) इत्येतेषु न चकारेण व्यवधानम्। पाणिनीयमतेम—छे च, दीर्घात्, पदान्ताद् वा(अ० ६।१।७३,७५,७६)इति तुक्, स्तोः श्चुना श्चुः(अ० ८।४।४०) इति श्चुत्वे चकारः।

### ५. ५. १०. श्चुत्वम्—

(७७) तकारवर्गश्चकारवर्गे चकारवर्गम्, शकारे च (वा० प्रा० ४।६४,६५) पदादौ झञवर्णाभावाच् चछजवर्णानामेवोदाहरणानि

---

१. औन्धमुद्रितद्वितीयसंस्करणे (२००३ वि०) सतुक्कोऽपपाठः।

संहितायाम् उपलभ्यन्ते, नकारविकारस्तु पूर्वम् उक्त एव। पाणिनिस्तु–स्तोः श्चुना श्चुः (अ० ८।४।४०) इति श्चुत्वं विदधाति। तत्र—स्थानेऽन्तरतमः (अ० १।१।५०) इति यथान्तरतम्यम् आदेशाः।

### ५. ५. ११. छत्वम्—

(७८) परश्चास्पर्शपरश्छम् (वा० प्रा० ४।१६६)-**तक्छकेयम्** (मा० सं० १।५) इत्यादीन्युदाहरणानि। उवटोऽस्पर्शपर इत्यत्र-**आदित्याञ् श्मश्रुभिः** (मा० सं० २५।१) इति प्रत्युदाजहार। मुद्रित-संहितासु–**आदित्याँश्मश्रुभिः**—इति पाठः (**आदित्यान् श्मश्रुभिरिति** काण्वपाठः)। पाणिनेस्तु–शश्छोऽटि (अ० ८।३।६३)[1] इति छकार-विकल्पः। तत्र झयोऽनुवर्त्तनात् पञ्चमवर्जितेभ्यः स्पर्शेभ्यः परस्य शकारस्य छकारः। वार्त्तिककारस्य–**छत्वममि**[1]–इति वचनेन **देवाञ्छ्लोकः** (ऋ० १०।१२।५) इत्यादयोऽपि शब्दाः संगृह्यन्ते। पाणिनीय-मतेन–**आनट् शुचिः** (मा० सं० ३३।११) इत्यत्रापि छत्वं स्यात्, तथा चान्यत्र [2]छत्वम् उपलभ्यते।

### ५. ५. १२. सकारविकारः—

(७९) उदः स्तभाने लोपम् (वा० प्रा० ४।१६७)–**उत्तभान** (मा० सं० १७।७२) **उत्तम्भनम्** (मा० सं० ४।३६) इत्युदाहरणे। पाणिनीयतन्त्रे तु–उदः स्थास्तम्भोः पूर्वस्य (अ० ८।४।६१) इति स्तम्भेरादिसकारस्य (अ० १।१।५४) पूर्वसवर्णत्वं विधीयते। आन्तर-तम्यात् (अ० १।१।५०) सकारस्य थकारः। झरो झरि सवर्णे (अ० ८।४।६५) इत्येकस्य थकारस्य वैकल्पिको लोपः। **उत्थिताय** (मा० सं० २२।८) इत्यादेः संग्रहः प्रातिशाख्येन न क्रियते।

(८०) अश्वात् स्थे तकारं संज्ञायाम् (वा० प्रा० ४।१६८)**अश्वत्थे** (मा० सं० १२।७९) इत्यत्र पाणिनीयमतेन–अश्वोपपदे तिष्ठतेः–सुपि स्थः (अ० ३।२।४) इति कः प्रत्ययः। सकारस्य तकारः पृषोदरादि-त्वात्[3]।

---

१. महा० ८।४।६३ वा० १॥

२. ऋ० १।७१।८; तै० सं० १।३।१४।६॥

३. का०, पद०, न्यास ६।३।१०९॥

### ९. ५. १३. द्विर्वचनम्—

(८१) स्वरात् संयोगादिर्द्विरुच्यते सर्वत्र, परं तु रेफहकाराभ्याम्, ऊष्मान्तःस्थाभ्यश्च स्पर्शः जिह्वामूलीयोपध्मानीयाभ्यां च, विसर्जनीयाद् व्यञ्जनपरः, ङ्नौ चेद् ध्रस्वपूर्वौ स्वरे पदान्तौ, प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः (वा० प्रा० ४।९९-१०२, १०५, १०६, १०८)—पाणिनिना द्विर्वचन-विषयोऽतिसंक्षेपेण—अचो रहाभ्यां द्वे, अनचि च (अ० ८।४।४६, ४७) इति सूत्रद्वयेन वर्णितः । वार्त्तिककारः खल्वपि—**द्विर्वचने यणो मयः, शरः खयः**[1]—इत्यूष्मान्त-स्थाभ्यः प्रातिशाख्यवद् द्वित्वं विदधौ । द्वित्वे सति—झलां जश् झशि, खरि च (अ० ८।४।५३, ५५) इति यथायोगं व्यवस्था । प्रातिशाख्यकारस्य—ङ्नौ० (वा० प्रा० ४।१०६) इति द्वित्वविधिः पाणिनिना—ङमो ह्रस्वादचि ङमुण् नित्यम् (अ० ८।३।३२) इति ङुड्नुडागमाभ्यां संगृह्यते ।

(८२) यैस्तु परं तैर्न पूर्वम्, नास्वरपूर्वा ऊष्मान्तःस्थाः, नानुस्वारः, सवर्णे, ऋवर्णे, लृवर्णे, यमे, विसर्जनीयः, स्ववर्गीये चानुत्तमे, अवसितं च (वा० प्रा० ४।१०३, १०४, १०९-११६)—एतैर्योगैर्द्विर्वचनं प्रतिषिध्यते । पाणिनिरपि शरोऽचि, त्रिप्रभृतिषु शाकटायनस्य, सर्वत्र शाकल्यस्य, दीर्घादाचार्याणाम् (अ० ८।४।४९-५२) इति सूत्रजालेन सांहितिकद्विर्वचनस्य प्रतिषेधं शास्ति । वैयाकरणैः सर्वत्रैव शाकल्याभिमतौ विकल्पो व्यवह्रियते । साम्प्रतिकमुद्रितसंहितासु प्रायो द्वित्वाभाव एव लक्ष्यते ।

### ९. ९. १४. जश्त्वादेशः—

(८३) स्पर्शोऽपञ्चमः स्वरधौ तृतीयम् (वा० प्रा० ४।११८)—पदमध्ये त्वयं विधिः—नान्तःपदे स्वरपञ्चमान्तःस्थासु (वा० प्रा० ४।११७) इति प्रतिषिध्यते । पाणिनीयप्रक्रियया—झलां जशोऽन्ते (अ० ८।२।३९), झलां जश् झशि (अ० ८।४।५३) इति सूत्राभ्याम् अयमर्थः प्रतिपाद्यते ।

### ९. ९. १९. चर्त्वादेशः—

(८४) जिति प्रथमम् (वा० प्रा० ४।११९)—अपञ्चमः स्पर्शो

---

१. महा० ८।४।४७ वा० १,२ ॥

वर्गप्रथमद्वितीयशषसवर्णेषु प्रथमम् आपद्यते । पाणिनिस्तु-खरि च (अ० ८।४।५५) इति झलां चर्त्वं विदधौ ।

(८५) असस्थाने मुदि द्वितीयं शौनकस्य (वा० प्रा० ४।१२०) **सम्यख् स्रवन्ति** (मा० सं० १३।३८) इत्यादीन्युदाहरणानि । मुद्रित-संहितास्वयं व्यवहारो न दृश्यते । पाणिनिः कण्ठत एतद्विषये न किम-प्यवोचत् । वार्त्तिककारः-**चयो द्वितीयाः शरि पौष्करसादेः**[1]—इति पौष्करसादिमतम् उद्धरति । पौष्करसादिः 'असस्थाने' इति विशेषणं न प्रयुङ्क्ते । अत एव महाभाष्यकारः—वथ्स इत्युदाहरति ।

## ५. ५. १६. आनुनासिक्यादेशः—

(८६) पञ्चमे पञ्चमम् (वा० प्रा० ४।१२१)-अत्रापि-नान्तः-पदे (वा० प्रा० ४।११७) इति प्रतिषेधाद् अयं विकारः पदमध्ये न भवति । पाणिनीयमतेन तु—यरोऽनुनासिकेऽनुनासिको वा (अ० ८।४। ४५) इत्यानुनासिक्यम् । आन्तरतम्याद् (अ० १।१।५०) व्यवस्था ।

## ५. ५. १७. पदादिहकारविकारः—

(८७) हश्च तस्मात् पूर्वचतुर्थम्, नकारपरो जातुकर्ण्यस्य (वा० प्रा० ४।१२२, १२३)-पाणिनिस्तु—झयो होऽन्यतरस्याम् (अ० ८।४। ६२) इति विकल्पेन पूर्वसवर्णादेशं विदधौ । स्थानेऽन्तरतमः (अ० १।१।५०) इत्यान्तरतम्यनियमाद् घोषवतो महाप्राणस्य हकारस्य तद्गुणश्चतुर्थो वर्णो भवति ।

## ५. ५. १८. यवलोपः—

(८८) यवयोः पदान्तयोः स्वरमध्ये लोपः, न वकारस्यासस्थान एकेषाम्, असौ च शाकटायनः, प्रउगमिति यकारलोपः (वा० प्रा० ४।१२५-१२८)-अत्र-असौ च शाकटायनः —इत्युवटमतेनापपाठः पूर्वेणैव सिद्धत्वात्[2] । अनन्तस्त्विमं योगं युक्तं मन्यते, तत्पूरकं च प्रदर्शयति-अनथौ इति ।' तथा च—असा अथोइत्यत्र लोप एव ।[3]

---

१. महा० ८।४।४८ वा० ३ ॥

२. वा० प्रा० ४।१२७ उ० भा० ॥

३. वा० प्रा० ४।१२६ अ० भा० ॥

पाणिनीयमतेन–लोपः शाकल्यस्य (अ० ८।३।१९) इति विकल्पेन यवलोपः, पक्षे हि – व्योर्लघुप्रयत्नतरः शाकटायनस्य (अ० ८।३।१८) इति लघुप्रयत्नतरौ यकारवकारौ भवतः।

### ५. ५. १९. विशिष्टा आदेशा —

(८९) डढौ ळळ्हावेकेषाम् (वा० प्रा० ४।१४४)–माध्यन्दिन-संहितायाम् एतावादेशौ नापलभ्येते (वा० प्रा० ८।४५)। नात्र-पाणिनेर्विधानम्, विशेषत्वात्।

(९०) स्वरात् स्वरे समानपदे जो यं न त्वृकारे (वा० प्रा० ४।१६४)–नात्र पाणिनेर्विधानम् अस्ति किञ्चित्।

(९१) ख्यातेः खयौ कशौ गार्ग्यः सख्योख्यमुख्यवर्जम् (वा० प्रा० १६५ उवटानन्तमतेन—एते चरकाणाम्, इतरेषां माध्यन्दिनानां न भवतः। नात्र पाणिनीयं विधानम्। वार्त्तिककारस्तु—चक्षिङः क्शाञ्ख्याञौ[1]–इति क्शाञ् पक्षम् अप्यङ्गीचकार।

## ५. ६. अयोगवाह-सन्धिः

### ५. ६. १. विसर्जनीयविकाराः —

(१) विसर्जनीयः, चछयोः शम् (वा० प्रा० ३।६,७)–प्रातिशाख्यकारो विसर्जनीयं मौलिकं वर्णम् आस्थाय तस्य विकारान् आचष्टे। पाणिनीयप्रक्रियया तु पदान्ते वर्त्तमानस्य रेफस्य–खरवसानयोर्विसर्जनीयः (अ० ८।३।१५) इति विसर्जनीयः। तस्य पुनः–विसर्जनीयस्य सः (अ० ८।३।३४) इति सकारः। स च सकारः—स्तोः श्चुना श्चुः (अ० ८।४।४०) इति शकारम् आपद्यते।

(२) तथयोः सम् (वा० प्रा० ३।८।)–पाणिनीयमतेन पूर्वप्रादर्शितरीत्या सकारादेशः। प्रातिशाख्यनिर्दिष्टस्य थकारपरस्य विसर्जनीयस्य संहितास्वनुपलम्भाद् अत्र व्याकरणप्रभावः प्रतीयते, लुप्तशाखासु वास्यास्तित्वं कल्पनीयम्।

(३) प्रत्ययसवर्णं मुदि शाकटायनः, अविकारं शाकल्यः शषसेषु

---

१. महा० २।४।५४ वा० १॥

(वा० प्रा० ३।९, १०)—पाणिनिरपि—वा शरि (अ० ८।३।३६) इति विकल्पेन विसर्जनीयस्य विसर्जनीयम् अनुशास्ति । पक्षे तु—विसर्जनीयस्य सः (अ० ८।३।३४) इति सकारः । तस्य च शकारे परतः—स्तोः श्चुना श्चुः (अ० ८।४।४०) इति शकारः, षकारे च परतः—ष्टुना ष्टुः (अ० ८।४।४१) इति षकारः । वाजसनेयिसंहितयोस्तु विसर्जनीय एवोपलभ्यते ।

(४) प्रकृत्या कखयोः पफयोश्च, जिह्वामूलीयोपध्मानीयौ शाकटायनः (वा० प्रा० ३।११, १२) —शाकल्यमतेन विसर्जनीयः प्रकृत्या तिष्ठति, शाकटायनमतेन जिह्वामूलीयोपध्मानीयावापद्येते । पाणिनिरपि—कुप्वोः कः पौ च (अ० ८।३।३७) इति विकल्पेन जिह्वामूलीयोपध्मानीयावादेशौ शशास । मुद्रितसंहितासु जिह्वामूलीयोपध्मानीयौ नोपलभ्येते ।

(५) लुङ् मुदि जित्परे, उपवसने पीवः, स ओषधीमयोः, व्यञ्जने च, स्य एष च (वा० प्रा० ३।१३-१७)—**अन्ध स्थ** (मा० सं० ३।२०), **पीवोपवसनानाम्** (मा० सं० २१।४३), **सौषधीः** (मा० सं० १२।३६), **सेमाम्** (मा० सं० २९।५४), **स नः** (मा० सं० ३।२६), **एष स्य वाजी** (मा० सं० ९।१४) इत्येतानि यथासंख्यम् उदाहरणानि । तत्रैतत्तत्त्यत्सम्बन्धिसकारलोपः पाणिनिना—एतत्तदोः सुलोपोऽकोरनञ्समासे हलि, स्यश्छन्दसि बहुलम्, सोऽचि लोपे चेत् पादपूरणम् (अ० ६।१।१३२-३४) इति सूत्रैर्विधीयते । प्रथमद्वितीयपरेषु शषसेषु, उपवसने च सकारलोपः पाणिनिना नानुशिष्टः । वार्त्तिककारस्तु—**वा शर्प्रकरणे खर्परे लोपः**[1]—इति लोपं विदधाति । महाभाष्यकारोऽपि—**पीवोपवसनादीनां छन्दसि लोपः**[2] — इति लोपं शास्ति ।

(६) ककारपकारयोः सकारम्, भाव्युपधः षकारम् (वा० प्रा० ३।२१, २२)—अधिकारसूत्रे एते । पाणिनिरपि—सोऽपदादौ, इणः षः (अ० ८।३।३८, ३९) इत्यधिकारसूत्रे विधाय विसर्जनीयादेशौ सकारषकारावनुशास्ति ।

---

१. महा० ८।३।३६ वा० ॥

२. महा० ६।३।१०९; कीलहार्नसंस्करण पृ० १७५ । अस्य वार्त्तिकत्वमेव न्याय्यम् ॥

(७) आविर्निरिड इडायावसतिर्वरिवः (वा० प्रा० ३।२३)-पाणिनीयतन्त्रानुसारम् **आविर्निर्** इत्यत्र-इदुदुपधस्य चाप्रत्ययस्य (अ० ८।३।४१) इति, **इडस्पदे** इत्यत्र-षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु (अ० ८।३।५३) इति, **इडायास्पदम्** इत्यत्र-इडाया वा (अ० ८।३।५४) इति, **वसतिष्कृता, वरिवस्कृणोतु**-इत्यत्र-छन्दसि वाप्राम्रेडितयोः (अ० ८।३।४९) इति यथायोगं सकारषकारौ भवतः ।

(८) दिवोऽककुत्पृथिव्योः (वा० प्रा० ३।२४)-**दिवस्पुत्राय** (मा० सं० ४।३५) इत्यादिषु पाणिनीयमतेन-षष्ठ्याः पतिपुत्र० (अ० ८।३।५३) इति सकारादेशः ।

(९) रायः सहसः पोषपुत्रयोः, तमसोऽपरस्तात्, तपसस्पृथिव्याम् (वा० प्रा० ३।२५-२७)-पाणिनीयमतेनात्र-षष्ठ्याः पतिपुत्र० (अ० ८।३।५३) इति सकारः ।

(१०) अध्वनो रजसो रिषः स्पृशस्पातौ (वा० प्रा० ३।२८)-पाणिनीयनये-पातौ च बहुलम् (अ० ८।३।५२) इति सकारादेशः ।

(११) अध्वनस्कुर्विति च (वा० प्रा० ३।३९)-निपातनम् एतत् । पाणिनेस्तु-छन्दसि वा० (अ० ८।३।४९) इति सकारः ।

(१२) समानपदे च (वा० प्रा० ३।३०)-पाणिनीयतन्त्रे—अतः कृकमि० (अ० ८।३।४६), छन्दसि वाप्राम्रेडितयोः (अ० ८।३।४९) इत्यादिभिः सकारषकारौ ।

(१३) परावसाने (वा० प्रा० ३।३१)-पाणिनेस्तु-पञ्चम्याः परावध्यर्थे (अ० ८।३।५१) इति सामान्येन विधानम् ।

(१४) कविष्करत्कृधिषु (वा० प्रा० ३।३२)-पाणिनीयतन्त्रे-कः करत्करतिकृधिकृतेष्वनदितेः (अ० ८।३।५०) इति विधिः । तत्र कविशब्दो न दृश्यते ।

(१५) कृषीश्च कृधौ सकारम् (वा० प्रा० ३।३३)-नात्र पाणिनेः साक्षाद् निर्देशः । छन्दसि वा० (अ० ८।३।४९) इत्यनेन निर्वाहः क्रियते ।

(१६) सदोद्यौर्नमस्कृतंपितापथेषु (वा० प्रा० ३।३४)-सदस्कृतम् इत्यत्र पाणिनीयमतेन-कः करत्करतिकृधिकृतेष्वनदितेः (अ०

८।३।५०) इति, अन्यत्र च–छन्दसि वा० (अ० ८।३।४९) इति षकारसकारौ ।

(१७) पति तालव्यस्वरोदये, पदे च (वा० प्रा० ३।३५, ३६)–**वाचस्पतिम्** (मा० सं० ८।४३) इत्यादिषु–षष्ठ्याः पतिपुत्र० (अ० ८।३।५३) इति पाणिनीयविधिः ।

(१८) न परुषः परुषि, वाजपति…इति च (वा० प्रा० ३।३७, ३८)–समानपदे च (वा० प्रा० ३।३०) इति प्राप्तिः प्रतिषिध्यते। पाणिनिस्तु नोल्लिलेख ।

(१९) अहः पतौ रेफम्, स्वर्धूः सांसहयोः(वा० प्रा० ३।३९,४१)–पाणिनेरत्र साक्षाद् विधानं नोपलभ्यते। महाभाष्यकारस्तु–**अहरादीनां पत्यादिषूपसंख्यानम्**[1]–इति **अहर्पतये** (मा० सं० ९।२०) इत्यादि-शब्दान् संगृह्णाति ।

## ५. ६. २. रिफितारिफितविसर्जनीयादेशाः—

(२०) भाव्युपधश्च रिद्विसर्जनीयः, रेफे लुप्यते दीर्घं चोपधा (वा० प्रा० ४।३३,३४)–पाणिनीयप्रक्रियया विसर्जनीयो हि रेफस्य विकारः, स च रेफः प्राकृतो वैकृतो वेत्युक्तं पुरस्तात् । तत्र—रो रि (अ० ८।३।१४) इति पूर्वरेफस्य लोपे, ढ्रलोपे पूर्वस्य दीर्घोऽणः (अ० ६।३।१११) इति दीर्घत्वम् ।

(२१) रेफं स्वरधौ (वा० प्रा० ४।३५)–पाणिनीयप्रक्रियया पदान्तीयो रेफः खरवसानयोर्विकारमापद्यतेऽन्यत्र तु स्वरूपेणैव तिष्ठतीति प्रदर्शितचरम् ।

(२२) कण्ठ्यपूर्वो यकारम् अरिफितः, लोपं धौ (वा० प्रा० ४।३६, ३७) पाणिनीयसरण्या खल्ववर्णपूर्वस्य रुरेफस्य—भोभगो-अघोअपूर्वस्य योऽशि (अ० ८।३।१७) इति यकारः । तस्य च—लोपः शाकल्यस्य, हलि सर्वेषाम् (अ० ८।३।१९।२२) इति लोपः ।

(२३) भूमेश्चाकारेऽपृक्ते (वा० प्रा० ४।३८) **भूम्या ददे** (मा० सं० २६।१६) इत्यत्र पाणिनीयमतेन—सुपां सुलुक्० (अ० ७।१।३९) इति सोर्लुग् भवति ।

---

१. महा० ८।२।७० वा २ ।।

(२४) सर्वो अःकार ओकारम्, अकारे च (वा० प्रा० ४।४१,४२)- पाणिनीयप्रक्रियया तु-ससजुषो रुः (अ० ८।२।६६) इति रुत्वे, अतो रोरप्लुतादप्लुते, हशि च (अ० ६।१।११३, ११४) इत्युत्वे, आद् गुणः (अ० ६।१।८७) इति पूर्वपरयोरान्तरतम्याद् (अ० १।१।५०) ओकार एकादेशः।

(२५) ओकारम् इतः सिञ्चतौ सोपधः, एषो हू च, स्वो रुहाव- हश्च रात्र्याम् (वा० प्रा० ३।४६; ४।४३,४४)—**परीतो षिञ्चता** (मा० सं० १९।२) इत्यादिषु साक्षात् पाणिनीयं विधानं नोपलभ्यते। **स्वो रुहाणा** (मा० सं० ११।२२) इत्यत्र वार्त्तिककारः—**स्वरो रोहतौ छन्दसि**[1]-इति वचनेनौत्वं विदधौ। **अहोरात्रे** (मा० सं० १८।२३) इत्यत्र वार्त्तिककृता-**रुविधावह्नो रूपरात्रिरथन्तरेषूपसंख्यानम्**[2]-इति रुत्वं विहितम्। ततः-हशि च (अ० ६।१।११४) इत्युत्वे, आद् गुणः (अ० ६।१।८७) इति गुणे, आन्तरतम्यात् (अ० १।१।५०) ओकारः।

## ५. ७. ०. सन्धिशेषः—

वाजसनेयिप्रातिशाख्यकारः कात्यायनो बहुषु स्थलेषु स्वक्षेत्रम् अतिक्रम्य व्याकरणक्षेत्रं प्रविशति। तथा हि—पदान्तपदाद्योः सन्धिः (वा० प्रा० ३।३) इति प्रतिज्ञायापि बहुषु सूत्रेष्वन्तःपदं, सर्वत्रेत्यादि- शब्दान् प्रयुञ्जानः कात्यायनोऽन्तःपदसन्धिकार्याणि निर्दिदेश। अत्र सन्धिशेषप्रकरणे व्याकरणविषयकाणि वाजसनेयिप्रातिशाख्यसूत्राणि विविच्यन्ते। केचन योगाः पूर्वत्र विविक्ता अपि प्रसङ्गवशात् पुनरत्रो- पस्थाप्यन्ते।

## ५. ७. १. वर्णलोपः—

(१) निशब्दो बहुलम् (वा० प्रा० ३।१८)-निशब्दः पदान्तीयो लुप्यते बहुलम् इत्युवटः। यथा-**शृङ्गा** (मा० सं० १७।९१) इति। बहुलग्रहणाद् **नामानि** (मा० सं० ८।४३) इत्यत्र लोपाभावः, **एमन्** (मा० सं० १३।५३) इत्यत्र इकारमात्रस्य लोपः, **इष्कर्तारम्** (मा०

---

१. महा० ६।३।१०९ वा० ६॥
२. महा० ८।२।६८ वा० १॥

सं० १२।११०) इत्यत्र नकारमात्रस्य लोपः । पाणिनीयमतेन–शेश्छन्दसि बहुलम् (अ० ६।१।७०)इति बहुलं शिलोपः। एमन्नादिषु-सुपां सुलुक्० (अ० ७।१।३९) इति लुक्। इष्कर्तारम् इत्यादिषु–**छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे**[1]–इति महाभाष्यप्रामाण्याच् छान्दसो वर्णलोपः ।

(२) नपुंसकाद इकारस्य, न सप्तम्यामन्त्रितयोः (वा० प्रा० ३।१३९, १४०)–अत्रोवटः एमन्नादिशब्दान् उदाजहार, व्यभिचारं च प्रदर्शयाञ्चकार । अनन्तोऽपि–**यच्च निशब्दो बहुलम् इति पूर्वम् उक्तं तद् निशब्दस्येति पौनरुक्त्यम्**–इत्याह । एतत् सूत्रद्वयं न न्याय्यं प्रतीयते, प्रकरणासङ्गतेः, व्यभिचाराच्च ।

(३) यकाराकारयोर्जास्पत्ये पदे, अलोपो मांस्पचन्याः, प्रउगम् इति यकारलोपः (वा० प्रा० ४।३९, ४०, १२८)–नात्र पाणिनीयो विधिरुपलभ्यते। वार्त्तिककारस्तु–**पदादिषु मांस्पृत्स्नूनाम् उपसंख्यानम्**[2]–इति सकारान्तं मांस् इत्यादेशं विदधौ। महाभाष्यकारश्च तत्र मांस्पचन्या इत्युदाजहार । अन्यत्र पृषोदरादित्वात् (अ० ६।३।१०९) लोपो द्रष्टव्यः ।

## ५. ७. २. पदसंस्कारः—

(४) उकारं दुर्दे, नाशे च, पुरो दाशे,अनसो वाहौ सकारो डकारम्, षड् दशदन्तयोः संख्यावयोऽर्थयोश्च, त आघाताद् अनाडम्बरात्, दुधुक्षन् धो दकारम् (वा० प्रा० ३।४२-४५, ४७, ४८, ५५)–**दूडभः** (मा० सं० ३।३६), **दूणाशः**, **पुरोडाशः** (मा० सं० १९।२०), **अनड्वाहम्** (मा० सं० ३५।१३), **षोडश** (मा० सं० १८।२५), **षोडन्तः**, **दार्वाघाटः** (मा० सं० २४।३५), **दुदुक्षन्** (मा० सं० ३३।२८) इति यथासंख्यम् उदाहरणानि। तत्र पुरोडाशशब्दो-मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् (अ० ३।२।७१) इति निपात्यते। अपरेषां शब्दानां संस्कारस्तु पाणिनीयसूत्रेषु नोपलभ्यते। यथावार्त्तिकं तु–**षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च, दुरो दाशनाशदभध्येषु**[3]–इति षोडन्तः, षोडश, दूणाशः, दूडभ इत्येते शब्दाः संस्क्रियन्ते। दूणाशः, षोडन्तः

---

१. महा० ८।२।२५ ॥ २. महा० ६।१।६३ वा० १ ॥

३. महा० ६।३।१०९ वा० ३, ५ ॥

(षोडन् वा) इत्येतौ शब्दौ वाजसनेयिशाखयोर्नोपलभ्येते । अनड्वान् इति–**अनसि वहेः क्विबनश्च डः**[1]–इत्यौणादिकप्रत्ययान्तः । दार्वाघाट इति शब्दः—**दारावाहनोऽणन्त्यस्य च टः संज्ञायाम्**[2]–इति वार्त्तिकेन साध्यते । दुदुक्षन् इति दुहे रूपम् ।

### ५. ७. ३. षत्वम्—

(५) भाविभ्यः सः षं समानपदे, अनुस्वाराच्च तत्पूर्वात्, करेफाभ्यां च (वा० प्रा० ३।५६-५८) पूर्वं विचारिता इमे योगाः, प्रसङ्गादत्रोपन्यस्ताः ।

### ५. ७, ४. णत्वम्—

(६) ऋषरेभ्यो नकारो णकारं समानपदे, स्वरयवहकपैश्च (वा० प्रा० ३।८५, ८६)–इमौ योगावपि व्याकरणविषयकौ विभाक्तिपूर्वौ ।

### ५. ७. ५. दीर्घत्वम्—

(७) अथोदारिथ···यकारे, व वृधवृजोः, उषः···नकारेभ्यः, पूरुषोऽवसाने, अभि ··सहेः, उक्थाच्च शसेः (वा० प्रा० ३।११३,११४, ११६, १२० १२३, १२४) पददीर्घत्वमेतत् पूर्वं यथाप्रकरणं विविक्तम् ।

### ५. ७. ६. अनुस्वारादेशः

(८) नुश्चान्तःपदेऽरेफे (वा० प्रा० ४।२)–अन्तःपदानुस्वारादेशोऽयं यथा-प्रकरणं विचारितः ।

### ५. ७. ७. ऊड्वृद्धिः—

(९) वाहौ च स्वरभूते (वा० प्रा० ४।५७)–**तुर्य्यौहो** (मा० सं० १८।२६) इत्यादिषु पाणिनीयप्रक्रियया तु-वाह ऊठ् (अ० ६।४।१३२) इत्यूठि, सम्प्रसारणाच्च (अ० ६।१।१०८) इति पूर्वरूपे, एत्येधत्यूठ्सु (अ० ६।१।८९) इति पूर्वपरयोर्वृद्धिरेकादेशः ।

---

१. दश० उ० ९।१०७ ॥ २. महा० ३।२।४९ वा० १ ॥

५. ७. ८. यकारादेशः—

(१०) स्वारात् स्वरे समानपदे जो यं न त्वृकारे (वा० प्रा० ४।१६४)—अयजः, अयजनिष्ट (मा० सं० १३।५१) इत्यादिषु जकारस्य यकारेण भाव्यम्। अयं विकारो न सार्वत्रिक इति साम्प्रतिकसंहितासु नोपलभ्यते। चरकाणां संहितासु जकारस्य यकारापत्तिरित्युवटः। नात्र पाणिनेर्विधानं समुपलभ्यते।

५. ७. ९. कशादेशः—

(११) ख्यातेः खयौ कशौ गार्ग्यः सख्योख्यमुख्यवर्जम् (वा० प्रा० ४।१६५)—पाणिनिः—चक्षिङः ख्याञ् (अ० २।४।५४) इति ख्याञादेशं विदधौ। वार्त्तिककारस्तु—चक्षिङः क्शाञ्ख्याञौ[1]—इति क्शाञादेशमपि निर्दिदेश।

—:०:—

१. महा० २।४।५४ वा० १ ॥

षष्ठोऽध्यायः

# ६. पदपाठ-विमर्शः

## ६. १. पदपाठप्रयोजनम्—

वैदिकवाङ्मये पदपाठग्रन्था विशिष्टं स्थानं भजन्ते । संहितापाठ-श्रवणमात्रेणार्थान् अवगन्तुम् असमर्थेषु जनेषु आचार्यैः पदग्रन्था विरचिताः । तत्र संहितापाठं विच्छिद्य पदस्वरूपं प्रकृतिप्रत्ययविभागाश्च तथा प्रदर्श्यन्ते यथा मन्त्रार्थः स्फुटं परिज्ञायते । तदाहाथर्वप्रातिशाख्यकारः–**पदाध्ययनम् अन्तादिशब्दस्वरार्थज्ञानार्थम्** (अ० प्रा० ४।१०७) इति । इत्थं चेमे ग्रन्थाः संहितानां संक्षिप्ततमा आद्या व्याख्याग्रन्था इति निष्कर्षः[1] । केचित्तु–सुविकसितस्य व्याकरणवृक्षस्य प्रारम्भिका अङ्कुरा इमे ग्रन्थाः[2]–इत्याहुः ।

संहितापाठसुरक्षापि पदपाठस्यान्यतमं प्रयोजनम् अस्ति, यतो जटादयोऽष्टौ विकृतयः[3] क्रमपाठम् आश्रयन्ति, स पुनः पदपाठायत्तः । क्रमः स्मृतिप्रयोजनः (वा० प्रा० ४।१८१) इति च प्राह कात्यायनः । एवं च वेदरक्षोपायानां जटादीनां पदपाठाश्रितत्वात् परम्परया पदपाठो हि संहितापाठं सुरक्षति ।

पदपाठः संहितापरिमाणनिर्धारणे महत् साहाय्यं विदधाति । तद्यथा शाकले पदपाठे षण्णाम् ऋचां पदपाठो न समाविश्यते । अतस्तासां संहितायां पाठः संदिह्यते । खिलसूक्तानाम् अपि सैव स्थितिः ।[2]

---

१. वै० वा० इ०, प्रथम भाग द्वितीयखण्ड, पृ० १४५।। माध्यन्दिन-पदपाठः, भूमिका, पृ० ११ ।।

२. वैदिक व्याकरण, पृ० १८५ ।।

३. जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः ।। चरणव्यूह-महिदास-भाष्ये ।।

## ६. २. ०. प्रवचनपद्धतिः—

पदपाठो मन्त्रार्थबोधे महत् साहाय्यं विदधातीत्युक्तं पुरस्तात् । कथं तत् साहाय्यं विधीयत इति पदपाठानां प्रवचनपद्धत्या सुव्यज्यते । अतः पदपाठानां प्रवचनपद्धतिः समासतो वर्ण्यते ।

## ६. २. १. पृथक् पाठः—

पदानि पृथक् पठ्यन्ते, विरामचिह्नेन च युज्यन्ते । तद्यथा—

**संहितापाठः—इषे त्वोर्जे त्वा (मा० सं० १।१) ।**

**पदपाठः—इषे । त्वा । ऊर्जे । त्वा ।**

## ६. २. २. पदलोपः—

पुनरुक्तानां पदानां मन्त्रांशानां मन्त्राणां च संक्रमः (लोपः) पदपाठेषु दृश्यते । यथावसरम् अयमग्रे प्रदर्शयिष्यते ।

## ६. २. ३. अवग्रहः—

संहितायां समासादिवृत्तिषु वर्त्तमानानि पदानि पदग्रन्थे ऽवगृह्यन्ते । तत्र ऋगथर्वपदपाठयोः सकृत् सावग्रहः पाठः, यजुषि सेतिकारः सावृत्तिकश्च, सामसु तु सावृत्तिक इतिकाररहितः पाठः । तद्यथा—

**पुरःऽहितम् (ऋ० १।१।१), त्रिऽसप्ताः (अथर्व० १।१।१) ।**

**श्रेष्टतमायेति श्रेष्ठ तमाय (मा० सं० १।१) ।**

**हव्यदातये हव्य दातये (साम० पू० १।१।१) ।**

## ६. २. ४. प्रगृह्यादिप्रदर्शने इतिकारः—

शुक्लयजुषि प्रगृह्यपदं पदपाठे सेतिकारावृत्तिकं प्रदर्श्यते, अन्यत्र सेतिकारमात्रम् । यथा—

**विष्णो इति विष्णो (मा० सं० १।४) ।**

**वायो इति (ऋ० १।२।३; अथर्व० ६।६८।१) ।**

## ६. २. ५. (५) स्वरः—

ऋगथर्वमाध्यन्दिनपदपाठेषु संहितावत् स्वरः सञ्चर्यते । साम-

काण्वतैत्तिरीयपदपाठेषु तूत्तरभागस्य स्वतन्त्रपदवत् स्वरः। यथा—

**प्रजावतीरिति प्रजा वतीः (मा० सं० १।१)।**

**प्रजावतीरिति प्रजा वतीः (का० सं० १।१॥ तै० सं० १।१।१)।**

### ६. २. ६. सांहितिककृत्याभावः—

ऋगथर्वपदपाठयोः सांहितिककृत्यरहितः सकृत् पाठः क्रियते। याजुषपदपाठे तु सांहितिकरूपं पूर्वं प्रदर्श्य सांहितिककृत्यरहितं सेतिकारम् आवर्त्यते। यथा—

**त्रिऽस्तुप् (ऋ० १०।१४।१६॥ अथर्व० ८।६।२०)।**

**त्रिष्टुप्। त्रिस्तुबिति त्रि स्तुप् (मा० सं० १०।११)।**

एवम् अनया पद्धत्या पदानां स्वरूपं सुव्यज्यते, येनार्थावगमः सुकरतया जायते। अवग्रहेण प्रकृतिप्रत्ययबोधो भवति। तद्यथा—**अवसायश्वान्** (ऋ० १।१०४।१) इत्यत्र **'अवऽसाय'** इति पदपाठः। अवग्रहदर्शनाद् अवपूर्वस्य स्यतेर्ल्यपि रूपमेतद् इति निश्चयः। **अवसाय पद्वते** (ऋ० १०।१६९।१) इत्यत्र **'अवसाय'** इत्यवग्रहरहितः पदपाठः। तस्माद् अवतेरौणादिकेऽसचि रूपमेतद् इति निर्णयः[1]। इतिकारेण प्रगृह्यत्वं निर्दिश्यते, रेफान्तत्वसान्तत्वं विविच्यते, नामाख्यातभेदश्च सकारान्तविसर्जनीयान्तेषु पदेषु ज्ञाप्यते। लौकिकरूपप्रदर्शनं तु साक्षाद् अर्थं बोधयत्येव।

### ६. ३. पदविच्छेदविषये वैमत्यम्—

पदकाराः स्वदेशकालयोः प्रचरितां व्याकरणप्रक्रियाम् आश्रित्य पदपाठान् विदधुः। वैदिकैरपि संहिताया एवापौरुषेयत्वम् आस्थीयते, अतो दर्शनभेदात् पदविच्छेदेषु प्रभेदा लक्ष्यन्ते। भाष्यकारैरपि यथामति पदानि प्रकल्प्य व्याख्यायन्ते। कैश्चिद् निदर्शनैरेतत् स्पष्टीक्रियते—

**(१) अरुणो मासकृत्** (ऋ० १।१०५।१८) इत्यस्याः संहितायाः—**'अरुणः। मा सकृत्'** इति पदपाठः शाकल्येन प्रदर्शितः। निरुक्तकारो

---

१. निरु० ५।२१॥

यास्कस्तु—**मासानाम् अर्धमासानां च कर्ता**[1]–इति व्याचक्षाणो **'मास-कृत्'** इति पदं स्वीचकार।

(२) **वने न वायो न्यधायि** (ऋ० १०।२९।१) इत्यस्याः संहितायाः पदपाठः शाकल्येन प्रदर्श्यते–**'वने । न । वा । यः । नि । अधायि'** इति । यास्कस्तु तस्य पक्षं प्रत्याचष्टे—**वा इति च य इति च चकार शाकल्यः । उदात्तं त्वेवम् आख्यातम् अभविष्यद्, असुसमाप्तश्चार्थः**[2]–इति ।

(३) **एष्टा रायः** (मा० सं० ५।७) इति संहितापाठो माध्यन्दिनपदपाठे–**आ इष्टा**–इत्यवगृह्यते । तत्र—यजतेः कृतसम्प्रसारणस्यैतद् रूपं निष्ठाप्रत्यये परतो दानार्थस्य । **आ इष्टा रायः मर्यादया इष्टानि धनानि**[3]–इत्युवटः । **हे इष्टः । तृजन्तस्य सम्बुद्धिः**[4]—इति सायणः । ऐतरेयब्राह्मणभाष्ये तु—**यद्वा एष्टा इति प्रथमान्तम्**[5]–इति सायणः । हे एष्टः एषणशील । केचिन्निष्ठायां वर्णव्यत्ययेन इकारस्य एकारमाहुः, अनामन्त्रितत्वं च मन्यन्ते । तदा आद्युदात्तत्वं च दुर्लभम् । **शाखान्तरे तु आ इष्ट एष्ट इति मत्वा अवग्रहं कुर्वन्ति**[6]–इति भट्टभास्करः ।

(४) वैयाकरणैरपि स्वप्रक्रियया यथालक्षणं पदानि पठनीयानीति राद्धान्तः स्वीक्रियते । तथा चाह पतञ्जलिः—**न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणम् अनुवर्त्यम् । यथालक्षणं पदं कर्त्तव्यम्**[7]–इति ।

## ६. ४. पदपाठप्रवक्तारः—

महाभाष्यकारेण पतञ्जलिना सूचितासु ११३१ शाखासु[8] सम्प्रत्युपद्वादश एव शाखा उपलभ्यन्ते । तासामपि सप्तानामेव पदपाठा उपलभ्यन्ते । सम्प्रत्युपलभ्यमानानां पदग्रन्थानां प्रवक्तॄनामान्यपि

---

१. निरु० ५।२१ ॥ २. निरु० ६।२८ ॥
३. मा० सं० ५।७ उ० भा० ॥
४. श० ब्रा० (३।४।३।३१) सायणभाष्यम् ॥
५. ऐ० ब्रा० १।२६ सायणभाष्यम् ॥
६. तै० सं० १।२।११ भट्टभास्करभाष्यम् ॥
७. महा० ३।१।१०३ ॥ ८. महा० पस्पशा० ॥

सर्वेषां न ज्ञायन्ते । तत्र ऋक्पदपाठस्य प्रवक्ता शाकल्य इति यास्कवचनात्[1] प्रतीयते । उवटानन्तावेकं प्राचीनं श्लोकं पेठतुर्यत्र शाकलस्यपदपाठप्रवक्तृत्वं स्मर्यते । तथा हि—

**पुनरुक्तानि लुप्यन्ते पदानीत्याह शाकलः ।**
**अलोप इति गार्ग्यस्य काण्वस्यार्थवशादिति ।।**[2] इति ।।

सामपदपाठकृद् गार्ग्य इति सम्प्रदायविदः । तैत्तिरीयपदपाठ आत्रेयकृत इत्यापस्तम्बादिग्रन्थेषु प्रसिद्धम् । अथर्वमैत्रायणीयकाण्वपदपाठानां प्रवक्तृविषये न किमपि ज्ञायते । काण्वपदपाठः काण्वकृत इति पूर्वोद्धृतश्लोकाद् विद्वद्भिरनुमीयते । माध्यन्दिन-पदपाठस्य प्रवक्तापि शाकल्य एवेत्याचार्यमीमांसकाः ।[3]

### ६. ५. ०. शुक्लयजुःपदपाठनियमाः—

अथ वाजसनेयिप्रातिशाख्यम् अवलम्ब्य, पाणिनीयसूत्रैर्यथासम्भवं तुलनां विधाय शुक्लयजुःपदपाठनियमाः प्रस्तूयन्ते ।

### ६. ५. १. स्वरः—

(१) वाक्यस्वराभावः—पदपाठे पदानि संहितागतवाक्यस्वरं विहाय स्वकीयेन पदस्वरेणैव तिष्ठन्ति । यथा—

**इषे । त्वा । ऊर्जे । त्वा ।**

(२) इतिव्यवहिते—प्रगृह्यप्रदेशेषु इतिपदेन व्यवहितेऽपि संहितायाः सत्त्वात् संहितास्वरो भवति । यथा—

**विष्णोऽइति विष्णो ।**

(३) अवग्रहे—अवग्रहस्य मात्राकालत्वात्[4] संहिताभावाद् अवग्रहस्थलेषु संहितास्वरो न स्यादिति कात्यायनोऽतिदिशति—संहितावद् अवग्रहः स्वरविधौ परं च सर्वं चेदनुदात्तम् (वा० प्रा० १।१४८) इति । तेन स्थितोपस्थितेषु[5] अवग्रहस्थलेषु संहितावत् स्वरो भवति । यथा—

---

१. निरु० ६।२८ ।।
२. वा० प्रा० ४।१७६ उ० भा०, अ० भा० ।।
३. माध्यन्दिनपदपाठः, भूमिका पृ० २९ ।।
४. वा० प्रा० ५।१ ।।
५. वा० प्रा० १।१४७ ।।

**श्रेष्ठतमायेति श्रेष्ठ तमाय ।**

काण्वपदपाठे त्वयं संहितावद्भावो नोपलभ्यते । तथा च तत्र—

**श्रेष्ठतमायेति श्रेष्ठं तमायः—इति पदपाठः ।**

(४) अवग्रहोत्तरभागे उत्तम उपोत्तमो वोदात्तः स्वरितो वा चेत् तर्हि तस्मात् पूर्वे द्वित्रा अनुदात्ताः प्रकृत्या तिष्ठन्ति, इतिकरणस्य स्वरिताद् ऐकश्रुत्यं न प्राप्नुवन्ति । यथा—

**विजानतऽइति वि जानतः (या० सं० ४०।७)**

**विचचक्षिरऽइति वि चचक्षिरे (मा० सं० ४०।१०) ।**

## ६. ५. २. इतिकरणम्—

पदपाठे वहुषु स्थलेष्वितिशब्दः प्रयुज्यते । अयम् इतिशब्दो न संहिताभागः, अपि तु प्रयोजनविशेषाद् आचार्यैः प्रयुक्तः । अत एव पाणिनिरिमम इतिशब्दम् अनार्षशब्देन विशिनष्टि[1] । पाणिनीयतन्त्रे उपस्थितनाम्नापीदृशम् इतिकरणं स्मर्यते[2] । अथात्र वाजसनेयिप्रातिशाख्यकारेण निर्दिष्टा इतिकरणनियमा उपस्थाप्यन्ते—

(१) प्रगृह्यं चर्चायामितिना पदेषु (वा० प्रा० ४।१७)—चर्चा नामेतिकरणात् परं पदावृत्तिः, तन्नियमा अनुपदं वक्ष्यन्ते । तदयं सूत्रार्थः—प्रगृह्यसंज्ञकं पदं चर्चायां परभूतायाम् इतिना व्यवधीयते । तद्यथा—**देवी इति देवी (मा० प० ५।१८) ।**

(२) रिफितं च संहितायाम् अनिरुक्तम् (वा० प्रा० ४।१८)—संहितायां यद् अनिर्ज्ञातरेफं रिफतं, तच्चर्चायां परभूतायाम् इतिना व्यवधीयते । तद्यथा—**पुनरिति पुनः (मा० प० ४।१५)** । संहितायाम् अनिरुक्तम् इति ग्रहणात्—**पुनः । मनः (मा० प० ४।१५)** इत्यत्र नेतिना व्यवधानम् ।

(३) पदावृत्तौ चान्तरेण (वा० प्रा०४।१९)—पदस्य द्विरुक्तौ सत्यां मध्ये इतिशब्दः प्रयुज्यते ।—तद्यथा—**श्रेष्ठतामयेति श्रेष्ठ तमाय ।**

---

१, सम्बुद्धौ शाकल्यस्येतावनार्षे (अ० १।१।१६) ॥

२. अप्लुतवद् उपस्थिते (अ० ६।१।१२९) ।

### ६. ५. ३. पदावृत्तिः—

पदपाठे पदानाम् आवृत्तिः क्वचित् क्वचिद् दृश्यते । तत्र प्रातिशाख्यकृत् कात्यायनो नियमान् विदधानः प्राह—क्रमोक्तावृत्तिः पदेषु (वा० प्रा० ४।२१) इति । एवं क्रमोक्ता पदावृत्तिः पदपाठेऽपि भवति । तन्नियमास्तावत् समासत उपस्थाप्यन्ते—

(१) पूर्वस्योत्तरसंहितस्य स्थितोपस्थितम् अवगृह्यस्य (वा० प्रा० ४।१८८) अवगृह्यमाणं पदम् आवर्त्यते । तद्यथा—**श्रेष्ठतमायेति श्रेष्ठ तमाय** ।

(२) अन्तःपददीर्घीभावे (वा० प्रा० ४।१९०)–अन्तःपददीर्घत्वे पदम् आवर्त्यते । तत्रान्तर्विकारागमयुक्तं पदं स्वरूपतः परिपठ्य[1] पदावृत्तिर्विधीयते । यथा–**मामहन्ताम् । ममहन्ताम् इति ममहन्ताम्** (मा० प० ३३।३८) ।

(३) विनामे (वा० प्रा० ४।१९१)–दन्त्यस्य मूर्द्धन्यीभावे पदावृत्तिः क्रियते । अत्रापि प्राक् पदं स्वरूपतो निर्दिश्यते[1], तत आवर्त्यते । तद्यथा–**सिषासन्तः । सिसासन्त इति सिसासन्तः** (मा० प० २६।१७) ।

(४) प्रगृह्ये (वा० प्रा० ४।१९२)–प्रगृह्यसंज्ञकं पदम् आवर्त्यते । तद्यथा–**इन्द्राग्नी इतीन्द्राग्नी** (मा० प० ३३।८३) ।

(५) रिफितेऽनिरुक्ते (वा० प्रा० ४।१९३)–अनिर्ज्ञातरेफे रिफिते पदावृत्तिर्विधीयते । यथा–**अन्तरित्यन्तः** (मा० प० ७।५) ।

### ६. ५. ४. सांहितिककृत्याभावः—

पदपाठेऽन्तःपदवर्त्तिनां विकारागमानाम् अभावः क्वचिद् उपलभ्यते । तत्र कात्यायनो व्यवस्थापयति—

(१) अनितावध्याये (वा० प्रा० ३।१९)–अस्मिन्नध्यायशेषे (वा० प्रा० ३।२०-१५२) येऽन्तःपदविकारागमा[2] उपदिष्टास्ते इतिशब्दे परतो न भवन्तीत्यर्थः । तद्यथा–**श्रेयस्कर । श्रेयः करेति श्रेयः कर** (मा० प० ३।५८) ।

(२) इतिवच्चर्चायाम् (वा० प्रा० ३।२०)–पदावृत्तावपि विका-

---

१. अनितावन्तर्विकारागमं प्राग् उक्तवा । वा० प्रा० ४।२३ ।।

२. तत्र विसर्जनीयविकार-षत्व-णत्व-दीर्घत्वादीन्युपदिष्टानि ।।

रागमा न भवन्तीत्यर्थः । उदाहरणानि तु पूर्वत्र प्रदर्शितान्येव ।

**६. ५. ५. संक्रमः—**

पदपाठं विदधाना आचार्या आवर्त्तमानानि पदान्यतिक्रम्यानावर्त्तमानेन पदेन सह सन्दधति । इदं सन्धानं प्रातिशाख्यकारैः संक्रमशब्देन व्यपदिश्यते । अयं संक्रमो नाम सन्धानविशेषः कैश्चित् पदपाठकारैराश्रीयते, अपरैस्तु नाश्रीयते । अन्यैस्तु कैश्चित् क्वचित् संक्रमः प्रदर्श्यते, क्वचिन्न । तथा चोवटानन्तौ पूर्वाचार्यवचनम् उद्धृतवन्तौ--

**पुनरुक्तानि लुप्यन्ते पदानीत्याह शाकलः ।**
**अलोप इति गार्ग्यस्य काण्वस्यार्थवशादिति ॥**[1] इति ॥

वाजसनेयिप्रातिशाख्ये (वा० प्रा० ४।१६६-१८०) प्रोक्तोऽयं संक्रमोऽत्र संक्षेपेण प्रस्तूयते । त्रिपदाद्यावर्त्तमानेऽयं संक्रमो विधीयते । अनुवाके द्विपदैकपदान्यपि संक्रम्यन्ते । शब्दार्थकृतानन्तर्येऽयं संक्रमो भवति । अन्यस्याङ्गभूते, अस्वरविकारे, अलिङ्गविकारे, असमाने आनुषङ्गिके च पुनरुक्ते संक्रमो विधीयते । अवसानाविकारज्ञापनार्थं तु संक्रमो न विधीयते । आर्ष्यां संहितायामपि पुनरुक्ते आवर्त्तमाने संक्रमो दृश्यते । यथा—**हिरण्यगर्भ इत्येषः (मा० सं० ३२।३॥२५।१०-१३)** ।

**६. ५. ६. (०) अवग्रहः—**

**अवगृह्यते विच्छिद्य पठ्यते इत्यवग्रहः**[2]–इति हरदत्तः । **नानाग्रहोऽवग्रहः**[3]—इत्युवटः । यत्तु **द्वयोः पदयोः पृथग् ग्रहणम् अवग्रहः**[3]—इत्युवटेनाभिहितं, तत्समासमुद्दिश्योक्तम् इति न तत्राव्याप्तिदोषः । वेदार्थान् बुबोधयिषुभिः पदकारैराचार्यैः पूर्वोत्तरपदविभागः प्रकृतिप्रत्ययविभागाश्च येनोपायेन प्रदर्श्यन्ते, सोऽवग्रहनाम्ना व्यपदिश्यते । तथा च प्राह हरदत्तः—**पदे ह्यवग्रहः क्रियते, पदमत्र विच्छिद्यते इति दर्शनाय**[2]–इति ।

**६. ५. ६. (१) अवग्रहस्य कालः—**

प्रातिशाख्यकारा अवग्रहं मात्राकालं संगिरन्ते । तथा च प्राति-

---

१. वा० प्रा० ४।१७६ उ० भा०, अ० भा० ॥
२. पद० ८।४।२६ ॥ ३. वा० प्रा० ५।१ उ० भा० ॥

शाख्यकृत् कात्यायनः प्रोवाच—समासेऽवग्रहो ह्रस्वसमकालः (वा० प्रा० ५।१) इति। शौनकोऽप्याह—**मात्रा ह्रस्वः। तावदवग्रहान्तरम्**[1]— इति। केचिद् आचार्या अवग्रहम् अर्धमात्राकालम् आतिष्ठन्ते। तथा च प्रोक्तं कैयटेन—**अर्धमात्राकालोऽवग्रह इष्यते। अर्धमात्राकालं स्थित्वा वर्णान्तरं समुच्चार्यते**[2]—इति। नागेश उभयमतसमन्वयं प्रतिपादयति—**वर्णाद् वर्णोच्चारणेऽर्धमात्राकालस्य नियतत्वात् तदधिकोऽर्धमात्राकाल इत्यर्थः। अत एव मात्राकालोऽवग्रह इति प्रातिशाख्यान्तरैरविरोधः**[3]—इति। भट्टोजिदीक्षितोऽपि विरोधं परिजहार—**यत्तु प्रातिशाख्यान्तरम् अर्धमात्रोऽवग्रह इति, तत्तु सर्वत्र संहितायाम् अर्धमात्राकालस्य सत्त्वात् ततोऽतिरिक्तोऽर्धमात्राकालोऽवग्रहोऽस्तीत्येवंपरम्, अतः प्रातिशाख्ययोरविरोधः**[4]—इति।

## ६. ५. ६. (२) अवग्रहस्य लक्षणाधीनत्वम्—

पदपाठेषु बहुषु स्थलेष्ववग्रहविषये विसंवादो दृश्यते। स च विसंवादो न केवलं चरणान्तरे एव, किन्तु समानचरणेऽपि परिलक्ष्यते। तथा च—अधिवासम् इति माध्यन्दिनीये पदपाठेऽवगृह्यते, काण्वे तु नावगृह्यते,[5]। पदकाराणाम् ईदृशीं विलक्षणाम् अवग्रहशैलीम् आक्षिपन्निव स्कन्दस्वामी बभाण—**शाकल्यात्रेयप्रभृतिभिर्नावगृहीतं, पूर्वनिर्वचनाभिप्रायेण। गार्ग्यप्रभृतिभिरवगृहीतमिति तदेव कारणम्। विचित्रा हि पदकाराणाम् अभिप्रायाः। क्वचिद् उपसर्गविषयेऽपि नावगृह्णन्ति, यथा शाकल्येन 'अधीवासम्' नावगृहीतम्, आत्रेयेण तु—अधि वासम्—इत्यवगृहीतम्। तस्माद् अवग्रहोऽनवग्रहः**[6]—इति।

अत्र स्कन्दस्वामी—निर्वचनभेद एवावग्रहानवग्रहे कारणम्—इति ब्रवीतीव। अयमेव वस्तुतो विसंवादहेतुः। स्वस्वदेशकालप्रचलितानि व्याकरणनिरुक्तादिशास्त्राण्याश्रित्य पदकारैरवग्रहाः प्रदर्शिताः, अत एव कात्यायनः सूत्रयामास—उत्तम्भनादीन्यादिसंशयात् (वा० प्रा० ५।३८) इति। अत्रोवटानन्तौ व्याचख्यतुः—**उदः स्थास्तम्भोः पूर्वस्य**

---

१ ऋ० प्रा० १।२७, २८ ॥
२. प्रदीप १।१।७ ॥
३. उद्योत १।१।७ ॥
४. शब्दकौ० १।१।७ ॥
५. वा० प्रा० ५।२३ ॥
६. निरु० २।२३ स्कन्दभाष्य, भाग २, ८१ ॥

(अ० ८।४।६१) इति सकारस्य पाणिनिः पूर्वसवर्णतां विदधाति, अन्ये तु सकारलोपं विदधति। अत उत्तरपदस्यादिसंशयाद् एतानि पदानि नावगृह्यन्ते[1]-इति। अस्मादेव दर्शनभेदाद्—अशीतमः, काण्वानामिदं प्रकृतिदीर्घम्,पदपाठेऽपि ह्रस्वाभावात्[2]-इत्यनन्तकथनं सङ्गच्छते। अत एव च पदकारमतेन शमीष्व (मा० सं० १।१५) इत्यस्य पदस्य ह्रस्वत्वम्, पाणिन्यापिशलिमतेन त्वीड्विधानान्न ह्रस्वत्वम्[3]।

पाणीनीयतन्त्रस्य प्रमाणभूत आचार्यः पतञ्जलिः पदकारान् लक्षणम् अनुवर्त्तयितुं प्रेरयति। पञ्चसु स्थलेषु पतञ्जलिः पदकारदोषान् उद्भावयति। तत्र त्रिषु स्थलेषु तत्र भवान् प्रावोचत्-**न लक्षणेन पदकारा अनुवर्त्त्याः। पदकारैर्नाम लक्षणम् अनुवर्त्यम्। यथालक्षणं पदं कर्त्तव्यम्**[4]-इति। यौ द्वाववग्रहौ पतञ्जलिः स्वीचकार[5], तौ सम्प्रत्युलभ्यमानेषु पदग्रन्थेषु न दृश्येते। एतेन पतञ्जलिवचनेनावसीयते यत् प्रकरणाद्यनुरोधाल्लक्षणम् अनुसृत्य पदविच्छेदः शक्यते कर्त्तुम् इति। अतः पाणिनिनापि स्वप्रक्रिययावग्रहदिग् निर्दिष्टा—छन्दस्यृदवग्रहात् (अ० ८।४।२६) इति।

## ६. ९. ६. (३) अवग्रहनियमाः—

पदपाठप्रातिशाख्ययोरनुशीलनेनैतद् निष्कृष्यते यत् पाणिनीयतन्त्रेण यत्र पदसंज्ञा विधीयते तत्रैव प्रायः पदकारैरवग्रहः क्रियत इति। तथा हि-पाणिनिना-सुप्तिङन्तं पदम् (अ० १।४।१४) इति पदसंज्ञा विधीयते। समासेऽन्तर्वर्त्तिन्या विभक्त्यावयवानामपि पदत्वं प्रत्ययलक्षणेन भवति[6]। प्रातिशाख्येऽपि—समासेऽवग्रहः (वा० प्रा० ५।१) इत्यादिनेदृशेषु स्थलेष्ववग्रहो विधीयते। यथा—**प्रजापतिरिति प्रजा पतिः**।

पाणिनिः—स्वादिष्वसर्वनामस्थाने (अ० १।४।१७) इति सूत्रेण सर्वनामस्थानभिन्नेषु स्वादिषु प्रत्ययेषु परतः पूर्वभागस्य पदसंज्ञां विदधौ। एवंविधेष्वपि स्थलेषु पदकारैरवग्रहः प्रदर्श्यते। तद्यथा—**तक्षभ्य इति तक्ष भ्यः**।

---

१. वा० प्रा० ५।३८ उ० भा०, अ० भा० ॥
२. वा० प्रा० ३।१२९ अ० भा० ॥
३. का० ७।३।९५ ॥
४. महा० ३।१।१०९ ॥ ६।१।२०७॥ ८।२।१६ ॥
५. महा० ४।२।३६ ॥ ६।३।९८ ॥
६. अ० १।१।६२ ॥

नः क्ये, सिति च (अ० १।४।१५, १६) इति सूत्रयुगलेन पाणिनिना पदसंज्ञा विहिता, परन्तु पदपाठ एतद्विषयकाण्युदाहरणानि नोपलभ्यन्ते ।

प्रातिशाख्यकारः कात्यायनः केषुचित् तादृशस्थलेष्वपि ह्यवग्रहं व्यधाद्, यत्र पाणिनिमतेन पदसंज्ञा न सम्भवति । तथा हि—

(१) पाणिनीयतन्त्र इवशब्देन तिङन्तपदेन च समासो न विधीयते । प्रातिशाख्यकारस्तु तत्राप्यवग्रहं विदधाति । तद्यथा—**स्रुचीवेति स्रुचि इव । उपस्तृणन्तीत्युप स्तृणन्ति** । वार्त्तिककारस्तु–**इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च**[1]–इति वार्त्तिकेनेवशब्देन सह—**उदात्तगतिमता च तिङा**[2]–इत्यनेन च तिङन्तेन सह समासं विदधौ ।

(२) क्यच्क्यङ्क्यष्क्वसुप्रत्ययेषु परतः सामान्यतः पाणिनीयमतेन पदसंज्ञाभावः (नान्तवर्जम्) । अवग्रहस्तु प्रातिशाख्ये विधीयत एव । तद्यथा—**देवयुर्वामिति देव युवम् । अघायत इत्यघ यतः । वृषायमाणः इति वृष यमाणः । जक्षिवांस इति जक्षि वांसः** ।

(३) पाणिनीयमतेन पदद्विर्वचने समस्तवद् व्यवहारो न सार्वत्रिकः, पदपाठे तु सर्वत्रावग्रह उपलभ्यते । यथा—**संसम् इति सम् सम्** ।

अवग्रहाभावोऽपि संक्षेपतो निरूप्यते—

(१) पाणिनीयतन्त्रे भसंज्ञा पदसंज्ञां वाधते । पदपाठेऽपि भसंज्ञास्थलेषु नावग्रहो दृश्यते ।

(२) यत्रार्थविकल्पाद् व्युत्पत्तिर्विकल्प्यते, आचार्यभेदाद् वा प्रक्रिया भिद्यते, तत्रावग्रहो न प्रदर्श्यते । तथा च प्राह कैयटः—**यत्रार्थनिश्चयाभावस्तत्रावग्रहो न क्रियते । तदुक्तम्**–**हरिद्रूरनवगृह्यते इति । हरिद्रूरित्यत्र किं हरिशब्द इकारान्तः, अथ हरिच्छब्दस्तकारान्त इति सन्देहात्**[3]–इति ।

(३) भकारादिविभक्तौ परतो दीर्घान्तो नावगृह्यते । यथा—हस्ताभ्याम्, देवेभिः । सुपः षत्वेऽपि नावग्रहः । यथा—**अग्निषु** ।

---

१. महा० २।१।४ वा० २ ॥ २. महा० २।२।१८ वा० ८ ॥
३. प्रदीप ३।१।१०९ ॥

(४) द्विवचनान्तद्वन्द्वेऽवग्रहो न क्रियते । यथा—**इन्द्राग्नी** ।

(५) अन्याय्यसमासेऽपि नावग्रहः क्रियते । यथा—**विशौजाः** ।

(६) उवटानन्तौ पदानवग्रहनिर्दशिकाम् एकां प्राचीनां कारिकाम् उद्धरतः। तथा हि—

**आदिमध्यान्तलुप्तानि समासान्यायभाञ्जि च ।**
**नावगृह्णन्ति कवयः पदान्यागमवन्ति च ॥**[1] इति ।

## ६. ५. ६. (४) अवग्रहविधिः—

अथातोऽवग्रहस्य विधिनिषेधविषयकाणि वाजसनेयिप्रातिशाख्य-सूत्राण्यनुक्रम्यन्ते,पाणिनीयसूत्रैश्च यथासम्भवं तेषां तुलना विधीयते—

(१) समासेऽवग्रहो ह्रस्वसमकालः (वा० प्रा० ५।१)—उत्सर्गोऽयं समासेऽवग्रहं विदधाति । समासेऽन्तर्वर्त्तिनीं विभक्तिम् आश्रित्य पाणिनीयैः पदकार्याणि क्रियन्ते । अतः पाणिनीयदर्शनेन समासेऽवग्रह-प्रदर्शनं समीचीनम् । यथा—**ऋक्सामाभ्यामित्यृक् सामाभ्याम्** (मा० सं० ४।१) ।

(२) तरतमयोश्चातिशयेऽदक्षिणप्रत्यासङ्गे (वा० प्रा० ५।२)—आतिशायिकयोस्तरतमप्रत्यययोः परतोऽवग्रहो, न चेद् दक्षिणशब्दः प्रत्यासक्तो भवति । यथा—**वह्नितममिति वह्नि तमम्** (मा० सं० १।८) । अतिशयग्रहणात्—**कारोतरेण** (मा० सं० १९।८०) इत्यत्र नावग्रहः । अत्रादक्षिणप्रत्यासङ्गवचनं स्पष्टप्रतिपत्त्यर्थम्, उत्तरशब्दस्य (मा० सं० १५।५) अनातिशायिकत्वात् । पाणिनीयमतेनात्र—स्वादिष्वसर्वनामस्थाने (अ० १।४।१७) इति पदसंज्ञा ।

(३) वीतमहुतमसूतमगोपातमरत्नधातमवसुधातमाः पूर्वेण (वा० प्रा० ५।३)—पूर्वयोगस्यापवादः । वीतमादिषु पूर्वपदम् अवगृह्यते । **देववीतम इति देव वीतमः** (मा० सं० ११।३४) इत्यादीन्युदाहरणानि । पाणिनीयास्तु-प्रत्ययलोपे प्रत्ययलक्षणम् (अ० १।१।६२) इति प्रत्ययलक्षणत्वात्—सुप्तिङन्तं पदम् (अ० १।१।१४) इति पदत्वम् अभिमन्यन्ते ।

(४) सर्पदेवजनेभ्यश्च (वा० प्रा० ५।४)—सर्पदेवजनेभ्य इति

१. वा० प्रा० ५।४५; उ० भा०, अ० भा० ॥

शब्दः पूर्वेणावगृह्यते । यथा—**सर्पदेवजनेभ्य इति सर्प देवजनेभ्यः (मा० सं० ३०।६)** । बहुप्रकृतावागन्तुना पर्वणा (वा० प्रा० ५।७) इत्यस्यापवादः । पाणिनेस्तु पूर्ववदन्तर्वर्त्तिन्या विभक्त्या पदत्वम् ।

(५) तूणवध्मम् उत्तरेण (वा० प्रा० ५।५)–यथा—**तूणवध्मम् इति तूणव ध्मम्** । तूणव शब्दो–**वप्रकरणेऽन्येभ्योऽपि दृश्यते**[1]–इति वचनाद् वप्रत्ययान्तः । ततस्तूणवोपपदाद् ध्माधातोः—आतोऽनुपसर्गे कः (अ० ३।२।३) इति कः । इत्थं च बहुप्रकृताविति (वा० प्रा० ५।७) न्यायेन न्याय्य एवात्रोत्तरेणावग्रहः । तस्मात् प्रपञ्चार्थम् एतत् ।

(६) रायस्पोषदे विजावेति च (वा० प्रा० ५।६)–रायस्पोषदे विजावा इति पदे उत्तरेणावगृह्येते । यथा–**रायस्पोषद इति रायस्पोष दे (मा० सं० ५।१,) विजावेति विजा वा (मा० सं० १२।४४)** । पाणिनीयसरण्या रायस्पोष इत्यत्र षष्ठीसमासः, ततो रायस्पोष उपपदे ददातेः कः,[2] उपपदसमासः । तथा च बहुप्रकृति (वा० प्रा० ५।७) न्यायेनैवावग्रहे सिद्धे प्रपञ्चः । विजावेति शब्दः पाणिनिमतेन विपूर्वाज् जनधातोः—अन्येभ्योऽपि दृश्यन्ते (अ० ३।२।७५) इति वनिप्प्रत्ययान्तः । अत्र पूर्वेणैवावग्रहो युक्तः प्रतीयते । पदपाठे त्वन्यत्रापि विजावशब्द उत्तरेणावगृह्यते ।[3]

(७) बहुप्रकृतावागन्तुना पर्वणा (वा० प्रा० ५।७)–बहुपदसमासे समानलक्षणेन यत् पश्चात्कालिकं पदं भवति, तेनावग्रहो विधीयते।[4] यथा–**प्रजापतिगृहीतयेति प्रजापति गृहीतया (मा० सं० १३।४९)** । पाणिनीयप्रक्रियायामपि तथैवार्थबोधः । तथा च प्रकृतोदाहरणे–प्रकर्षेण जायन्ते इति प्रजाः[5] तासां पतिः, तेन गृहीतया–इति क्रमः ।

(८) तद्वति तद्धिते न्यायसंहितं चेत् (वा० प्रा० ५।८)–अत्र 'तद्वत्' शब्दस्तन्त्रेणोच्चार्यत इत्युवटानन्तौ । तथा च–तद्वति मत्वर्थीये-तद्धिते वतौ च परभूतेऽवग्रहो भवति न्यायसंहितं व्याकरणशास्त्रोक्त-सन्धिमत् पदं चेद् भवतीति सूत्रार्थः[6] । यथा–**हिरण्यवदिति हिरण्य वत्**

---

१. महा० ५।२।१०९ ॥ २. अ० ३।२।३ ॥
३. ऋ० ३।१।२३ ॥
४. तु०–अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च (निरु० २।२) ॥
५. अ० ३।२।६७ ॥ ६. वा० प्रा० ५।८ उ० भा० ॥

**(मा० सं० ८।५७)।** माध्यन्दिनीयसंहितायाम् इवार्थे वतिप्रत्ययस्य प्रयोगानुपलम्भाद् व्याख्याकारयास्तन्त्रव्याख्या चिन्त्या। यत्तु-**संवतम्** **(मा० सं० ११।१०)** इत्युदाहरणं ताभ्याम् उपन्यस्तं, तदपि न वति-प्रत्ययान्तम्, सविभक्तिकत्वाद् इवार्थकवतेश्चाव्ययत्वात्। तथा चोवटः संहिताभाष्ये प्राह—**संवतमनु, संपूर्वस्य वनोतेः क्विप्येतद् रूपं, संभजनम् उच्यते**[1]–इति। महीधरोऽप्याह–**वन सम्भक्तौ संवन्यते सभ्यग् भज्यते मृदुग्रहणार्थं सेव्यते इति संवत्। सम्पूर्वस्य वनतेः क्विप्येतद् रूपम्। मृत्खननयोग्या भूमिः संवत्**[2]–इति।

पाणिनीयप्रक्रियया—तदस्यास्त्यस्मिन्निति मतुप् (अ० ५।२।६४) इति मतुप्, मादुपधायाश्च मतोर्वोऽयवादिभ्यः (अ० ८।२।६) इति वत्वम्। तत्र—स्वादिष्वसर्वनामस्थाने (अ० १।४।१७) इति पदत्वम्। न्यायसंहितम् इति प्रत्युदाहरणरूपेणोपन्यस्तेषु **ऊर्जस्वन्तम्** **(मा० सं० ६।४८), मरुत्वन्तम्** **(मा० सं० ७।३६)** इत्यादिषु तु—तसौ मत्वर्थे (अ० १।४।१९) इति भसंज्ञया पदसंज्ञाया बाधाद् नावग्रहः।

(९) शस्त्वन्त्रातातिषु च (वा० प्रा० ५।६)–शसादिष्ववग्रहो भवति। यथा—**ऋतुश इत्यृतु शः** (मा० सं० २३।५०), **देवत्वमिति देव त्वम्** (मा० सं० ३१।१७), **देवत्रेति देव त्रा** (मा० सं० ६।१८), **ज्येष्ठतातिमिति जेष्ठ तातिम्** (म० सं० ७।११)। पाणिनीयप्रक्रियया तु–संख्यैकवचनाच्च वीप्सायाम् (अ० ५।४।४३) इति शस्, तस्य भावस्त्वतलौ (अ० ५।१।११९) इति त्वः, देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् (अ० ५।४।५६) इति त्रा, भावे च (अ० ४।४।१४४) इति तातिल् प्रत्ययः। सर्वत्रैवात्र स्वादिष्वसर्वनामस्थाने (अ० १।४।१७) इति पदत्वम्।

(१०) धात्वर्थे यकारे स्वरपूर्वे (वा० प्रा० ५।१०)–स्वरपूर्वे धात्वर्थे यकारेऽवग्रहः क्रियते। यथा—**वृषायमाणः। वृषायमाण इति वृष यमाणः** (मा० सं० २०।३९)। पाणिनीयतन्त्रे–सुप आत्मनः क्यच्, कर्तुः क्यङ् सलोपश्च, लोहितादिडाज्भ्यः क्यष् (अ० ३।१।८, ११, १३) इत्यादिसूत्रैः क्यजादयो विधीयन्ते। तत्र–नः क्ये (अ०

---

१. मा० सं० १०।१२ उ० भा०॥
२. मा० सं० १०।१२ म० भा०॥

१।४।१५) इति नकारान्तस्यैव पदत्वम्। प्रातिशाख्ये तु दीर्घीभावं प्रदर्शयितुम् अवग्रहो विधीयते।

(११) वांसौ च भूतकाले स्वरेण ह्रस्वादनुषि (वा० प्रा० ५।११)–भूतकालविहितेऽनुषि वांसौ ह्रस्वेन स्वरेणावग्रहः। यथा—**पपिवांस इति पपि वांसः** (मा० सं० ८।१९)। पाणिनीयप्रक्रियानुसारं भूतकाले—क्वसुश्च (अ० ३।२।१०७) इति क्वसुः, तस्य नुमि (अ० ७।१।७०), उपधादीर्घे (अ० ६।४।१०) च वासुरूपम्। व्याकरणान्तरेऽयं प्रत्ययो विहितः स्यात्।

(१२) प्रत्नपूर्वविश्वेमर्त्तुभ्यस्था (वा० प्रा० ५।१२)—प्रत्नादिभ्यस्थावगृह्यते। यथा—**प्रत्नथेतिप्रत्न था** (मा० सं० ७।११)। पाणिनेस्तु–प्रत्नपूर्वविश्वेमात्थाल् छन्दसि (अ० ५।३।१११) इति थाल्विधिं। स्वादिष्वसर्वनामस्थाने (अ० १।४।१७) इति पदसंज्ञा। ऋतुथाशब्दः पाणिनिना साक्षान्न संगृह्यते।

(१३) ह्रस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्यये (वा० प्रा० ५।१३)—भकारादिविभक्तौ परतो ह्रस्वव्यञ्जनान्तोऽवगृह्यते। **तक्षभ्य इति तक्ष भ्यः** (मा० सं० १६।२७), **धावद्भ्य इति धावत् भ्यः** (मा० सं० १६।२३)। पाणिनीयमतेन—स्वादिष्वसर्वनामस्थाने (अ० १।४।१७) इति स्वरव्यञ्जनान्तानां सर्वेषां पदत्वम् इति दीर्घाणामपि ह्यवग्रहः स्यात्। प्रातिशाख्ये तु संकोचः।

(१४) स्विति चानतौ (वा० प्रा० ५।१४)—ह्रस्वव्यञ्जनान्तावषत्वभूते सुपि परतोऽवगृह्येते। यथा—**अप्स्वित्यप् सु** (मा० सं० १२।३१)। पाणिनिमतेन—स्वादिष्वसर्वनामस्थाने (अ० १।४।१७) इति पदत्वम्।

(१५) वर्णसंख्येऽन्यतरतः (वा० प्रा० ५।१५)—वर्णवाचिशब्दः संख्यावाचिशब्दश्च विकल्पेनावगृह्येते। यथा–**धूम्ररोहित इति धूम्र रोहितः** (मा० सं० २४।२), **पञ्चदशेति पञ्च दश** (मा० सं० १८।२४)। व्यवस्थितोऽयं विकल्पः। तेन **त्रिणवत्रयस्त्रिंशौ** (मा० सं० १०।१४) इत्यत्र नावग्रहः। पाणिनीयानां त्वन्तर्वर्त्तिन्या विभक्त्या पदत्वम्।

(१६) अनुदात्तोपसर्गे चाख्याते (वा० प्रा० ५।१६)—अनुदात्तो-

पसर्गे समासे आख्याते परत उपसर्गोऽवगृह्यते । यथा-**उपस्तृणन्तीत्युप स्तृणन्ति (मा० सं० २५।३७)** । अत्र व्याख्याकारौ समासपदं नाभिसम्बध्नीतः, अनुदात्तोपसर्गं चाख्यातविशेषणत्वेन व्याचक्षाते । तथा-सति-**अन्वारभामह इत्यनु आरभामहे (मा० सं० ६।२६)** इत्यत्र 'अन्वा' इत्यवगृह्येत । ननु समासेऽभिसम्बध्यमानेऽपि दोषस्तदवस्थ एवेति चेन्न, बहुप्रकृतावागन्तुना पर्वणा (वा० प्रा० ५।७)इत्यपवादेनोत्सर्गस्य बाधितत्वात् ।

पाणिनिना कण्ठतस्तिङा समासो नोपदिश्यते । वार्त्तिककारस्तु—**उदात्तगतिमता च तिङा**(अ० २।२।१८ वा० ८) इति समासं विधत्ते । महाभाष्यकारः-सह सुपा (अ० २।१।४) इत्यत्र योगविभागेनेष्टसिद्धि मन्यते । वार्त्तिककारस्यायं विधिः पदपाठं नसिक्तस्यै ? । कंयटनागेशौ-अनुव्यचलदादिषूदाहरणेषु —समासस्य (अ० ६।१।२२३) इत्यन्तोदात्तत्वं विदधानौ लक्षणैकचक्षुष्कावेव, लक्ष्येषु तत्स्वरस्यानुपलम्भात् ।

(१७) गिरि त्रशयोः (वा० प्रा० ५।१७)-त्रशयोः परतो गिरिशब्दोऽवगृह्यते । यथा--**गिरित्रेति गिरि त्रा (मा० सं० १६।३)**, **गिरिशेति गिरि श (मा० सं० १६।४)** । पाणिनिमतेन गिरिशब्दोपपदे त्रायतेः कः, शेतेश्च डः[1] ।

(१८) इवकाराम्रेडितायनेषु (वा० प्रा० ५।१८)-इवे, कारे, आम्रेडिते, अयने च पूर्वोऽवगृह्यते । यथा-**स्रुचीवेति स्रुचि इव (मा० सं० २०।७०)**, **वषट्कारानिति वषट् कारान् (मा० सं० १६।२०) संसमिति सम् सम् (मा० सं० १५।२६)**, **अयनायेत्या अयनाय (मा० सं० २२।७)** । पाणिनीयनये सर्वत्रैवात्र सुबन्तत्वात् पदत्वम् ।

(१९) एकात् समीची (वा० प्रा० ५।१९)-यथा-**एकम् । समीची इति सम् ईची (मा० सं० १२।२)**। यस्तु नैकशब्दात् परः, स नावगृह्यते । यथा-**समीची इति समीची (मा० सं० ११।२८)** । उभयत्र समीचीशब्दः प्रगृह्यसंज्ञकः । पाणिनीयतन्त्रे समीचीशब्द द्विधा व्याक्रियते । तथाहि-**समीणः**[2]-इतीणश्चटि, दीर्घत्वे च, टित्वान् ङीप्[3]-इति प्रथमः पन्थाः । अत्रान्तर्वर्त्तिन्या विभक्त्या पदत्वम्, अतोऽवग्रहो युज्यते । सम्पूर्वाद-

१. अ० ३।२।३ ॥ अ० ३।२।१५ वा० ४ ॥
२. उ० ४।१०० ॥ ३. अ० ४।१।१५ ॥

ञ्चतेः क्विपि, समः समि (अ० ६।३ ९३) इति सम्यादेशे, धात्ववयलोपे[1], चौ (अ० ६।३।१३८) इति दीर्घ इति द्वितीयोऽध्वा। अत्रादिमध्यान्तलुप्तानीति[2] नियमात् नावग्रहः।

(२०) त्वयवः शँय्योर्बहिर्धास्मयु मृन्मयीं सुम्नयाशुया साधुया घृष्णुया विशालमनुया। मृगयुमुभयादतोऽपामार्गं किम्पूरुषमिति च (वा० प्रा० ५।२०, २१) एतानि पदान्यवगृह्यन्ते। **त्वायवः (मा० सं० २०।७८), अस्मयुम् (मा० सं० ११।११)** इत्यत्र—सुपः आत्मनः क्यच् (अ० ३।१।८)इति क्यच्, क्याच्छन्दसि (अ० ३।२।१७०) इत्युः। **शंयोः (मा० सं० ३।४२)** इत्यत्र—कंशंभ्यां बभयुस्० (अ० ५।२।१३८) इति युस्। सिति च (अ० १।४।१६) इति पदत्वम्। **बहिर्धा (मा० सं ५।११)** इत्यत्र धाप्रत्ययः। **मृन्मयीम् (मा० सं० ११।५६)** इत्यत्र विकारे मयट्।[3] **सुम्नया, आशुया, साधुया, धृष्णुया, अनुया** इत्यत्र—सुपां सुलुक्० (अ० ७।१।३९) इति याजादेशः। **विशालम्** इत्यत्र—वेः शालच्० (अ० ५।२।२८) इति शालच् प्रत्ययः। एतेषु—स्वादिष्वसर्वनामस्थाने (अ० १।४।१७) इति पदत्वम्। याचि तु भत्वेऽपि[4] नावग्रहाभावः।

मृगय्वादिशब्देषु समासत्वादेवावग्रहे सिद्धे प्रपञ्चार्थं वचनम्। पाणिनीयतन्त्रे तु मृगयुम् इत्यत्र **मृगय्वादयश्च**[5] इति मृगोपपदाद् यातेः कुः। **उभयादतः (मा० सं० ३१।८)** इत्यत्र बहुव्रीहिसमासे, छन्दसि च (अ० ५।४।१४२) इति दत्रादेशः, अन्येषाम्० (अ०६।३।१३७) इति दीर्घत्वम्। अपामार्ग इत्यत्रापपूर्वाद् मृजेर्घञि-उपसर्गस्य घञि० (अ० ६।३।१२२) इति दोर्घत्वम्। **किम्पूरुषम्** इत्यत्र–किं क्षेपे (अ० २।१।६४) इति समासे, अन्येषाम्० (६।३।१३७) इति दीर्घत्वम्। सर्वत्रैवात्रान्तर्वर्त्तिन्या विभक्त्या पदत्वम्।

(२२) पारावतान् आग्निमारुतांश्चेति जातुकर्ण्यस्य, अधीवासमित्येके (वा० प्रा० ५।२१, २३) व्यवस्थितविकल्पा इमे। तेन काण्वानाम् अवग्रहो न भवति[6]। पाणिनीयप्रक्रिययान्तर्वर्त्तिन्या विभक्त्यत पदत्वम्।

---

१. अ० ६।४।२४, १३८॥ २. वा० प्रा० ५।४५ उ० भा०॥
३. अ० ४।३।१४४॥ ४. अ० १।४।१८॥
५. उ० १।३७॥ ६. वा० प्रा० ५।२२, २३ अ० भा०॥

### ६. ५. ६. (५) अवग्रहप्रतिषेधः—

(२२) प्रतिषेधे नावग्रहः, उत्तरेण चाकारेण (वा० प्रा० ५।२४, २५) प्रतिषेधवाचिना नञा सह समासे सति नावग्रहो भवति। उत्तरेण चाकारेण सह समासेऽवग्रहो न भवति। यथा—**अरक्षसा** (मा० सं० ११।२४), **अनाततायं** (मा० सं० १६।१४)। प्रतिषेध-शब्देनात्र प्रसज्यप्रतिषेधो व्याख्याकृद्भ्याम् अभिमतः। अत एव प्रत्युदाहरणरूपेण 'अनिशित' शब्द उपन्यस्यते।

(२३) द्वा पूर्वम् (वा० प्रा० ५।२६)—द्वापूर्वं समासपदं नावगृह्यते। यथा—**द्वादश** (मा० सं० १८।२५)। अत्र पदस्वरूपस्य विकृतत्वादवग्रहाभावः स्यात्।

(२४) संख्यापूर्वश्च धा (वा० प्रा० ५।२७)—धापरतः संख्यापूर्वो नावगृह्यते यथा—**अष्टधा** (मा० सं० ८।६२)। पाणिनीयमतेनात्रावग्रहेण भाव्यमेव।

(२५) द्वन्द्वानि द्विवचनान्तानि स्वरान्तपूर्वपदानि (वा० प्रा० ५।२८)—यथा—**इन्द्राग्नी** (मा० सं० २।१५)। पूर्वपदस्य विकृतरूपत्वादत्रावग्रहो न स्यात्।

(२६) तद्धिते चैकाक्षरवृद्धावनिहिते (वा० प्रा० ५।२६)—समासादुत्पन्ने तद्धित एकाक्षरपूर्वपदे वृद्धौ, वृद्ध्या चोत्तरपदे व्यवहितेऽवग्रहो न भवति। यथा—**त्रैष्टुभेन** (मा० सं० ११।८)। अत्रापि पदस्वरूपस्य विकृतत्वाद् अवग्रहो न स्यात्।

(२७) अञ्चतिसहत्योः कृल्लोपे, अनुरुसुभ्याम् (वा० प्रा० ५।३०, ३१) कृल्लोपेऽञ्चतिसहत्योर्नावग्रहः, उरुसुभ्याम् उत्तरयोस्तु तयोरवग्रहो भवत्येव। यथा—**प्राङ्** (मा० सं० १६।३), **पृतनाषाट्** (मा० सं० १७।३६)। **उरुव्यञ्चमित्युरु व्यञ्चम्** (मा० सं० १५।२५), **सुसहमिति सु सहम्**। सुसहतम् इत्यनन्तोदाहृतं संहितायां नोपलभ्यते।

(२८) समिदाभ्यां वत्सरः (वा० प्रा० ५।३२)—यथा—**संवत्सरः** (मा० सं० २७।४५), **इद्वावत्सरः** (मा० सं० २७।४५)।

(२६) प्राग्निभ्याम् अनिन्धौ प्रश्लेषे (वा० प्रा० ५।३३)—

प्राग्निभ्यां प्रश्लिष्टसन्धाववग्रहो न भवति, इन्धिं वर्जयित्वा । यथा—**प्राणः (मा० सं० २०।५), आग्नीध्रम् (मा० सं० १९।१६)** । वाजसनेयिप्रातिशाख्ये प्रश्लिष्टसन्धिर्नोल्लिख्यते । स्वरितविशेषस्य तु संज्ञा प्रश्लिष्ट इति स्मर्यते[1] । सवर्णदीर्घ-गुण-वृद्धिसन्धय ऋक्प्रातिशाख्ये[2] प्रश्लिष्टनाम्ना प्रसिद्धाः ।

(३०) पाङ्त्रानुदद्रोऽभ्राय संशयात् (वा० प्रा० ५।३४)–पाङ्त्रादयः शब्दाः संशयान्नावगृह्यन्ते । तथा हि–पाङ्त्रान् इत्यत्र पङ्क्तेः पूर्वपदं त्रायतेरुत्तरपदं, पातेर्वा पूर्वपदं तनोतेरुत्तरपदम् । उद्द्र इत्युद्द्रवतीति वोद्रातीति वा । अपो विभर्त्तीत्यभ्रः, अभ्रति गच्छतीति वाभ्रः । पाङ्त्रादयः शब्दा उदाहरणमात्रं, न तु परिगणनम् । तस्माद् यत्रापि संशयस्तत्रैवानवग्रहः । तथा चोक्तम् उवटेन—**हेतुवचनादन्यत्रापि यत्र संशयस्तत्रावग्रहो न भवति**[3]–इति ।

(३१) जनयत्या...वलगम्, समानोऽनश्वमेधे, वायुरसजातः... नरिष्ठायै (वा० प्रा० ५।३५-३७)–अस्यां त्रिसूत्र्यां पठिता अष्टसप्ततिः शब्दा नावगृह्यन्ते । अत्रानवग्रहहेतुः प्रातिशाख्यकारेण नोक्तः । उवटस्तु प्रावोचत्—**यैश्च हेतुभिरेतानि पदानि नावगृह्यन्ते तान् हेतून् अन्यपदव्याजेन विचिख्यासुराचार्यो वक्ष्यमाणसूत्रैर्वक्ष्यति । येषु च पदेषु वक्ष्यमाणहेतवो न सन्ति, ते जातिवचना प्रत्येतव्याः । यथा गोधूमपारावतादयः**[4]–इति ।

(३२) उत्तम्भनादीन्यादिसंशयात् (वा० प्रा० ५।३८)–उत्तम्भनादीनि पदान्यादिसंशयान्नावगृह्यन्ते । यथा **उत्तम्भनम् (मा० सं० ४।३६), उत्थाय (मा० सं० ११।६४), उत्थिताय (मा० सं० २२।८)** । अत्राहोवटः—**उदःस्थास्तम्भोः पूर्वस्य (अ० ८।४।६१) इति सकारस्य पाणिनिः पूर्वरूपतां विदधाति, अन्ये तु सकारलोपं[5] विदधति**[6]–**इति** ।

(३३) विशौजा इत्यन्यायसमासात्, दित्यौही तुर्यौही पष्ठौही हृदयौपशेनेति च (वा० प्रा० ५।३९, ४०)–इमानि पदान्यन्यायसमा-

१. वा० प्रा० १।११५ ॥
२. ऋ० प्रा० २।१५–२० ॥
३. वा० प्रा० ५।३४ उ० भा० ॥
४. वा० प्रा० ५।३७ उ० भा० ॥
५. वा० प्रा० ४।९८ ॥
६. वा० प्रा० ५।३८ उ० भा० ॥

साद् नावगृह्यन्ते ।अन्यायसमासोऽत्रान्याय्यविधियुक्तसमासपरो गृह्यते । तथा चावोचद् उवटः–**विशौजाः विश् ओजो यस्य स विडौजा इति प्राप्ते विशौजा इत्यन्याय्यः समासः । अत एव पदकारो नावगृह्णाति**[1]–इति । वाहौ च स्वरभूते (वा० प्रा० ४।५७) इति स्वयमौकारं विदधानोऽपि कात्यायनो दित्यौही तुर्य्यौही पष्ठौही इत्यत्र कथम् अन्यायसमास मेन इति न ज्ञायते । वस्तुतस्तु सर्वत्रैवात्र न्याय्यः सन्धिः । तथा हि–विशा इति टाबन्तस्य[2] समासः । दित्यौहीत्यादिषु-एत्येधत्यूठ्सु (अ० ६।१।८९) इति वृद्धिरेकादेशः । हृदयौपशेनेत्यत्र हृदयम् आ उपशेते इति विग्रहः ।

(३४) दुष्टरो विष्टरो विष्टपो विष्टम्भो विष्टम्भनीम् (वा० प्रा० ५।४१)–एतानि पदानि नावगृह्यन्ते । तत्र दुष्टरशब्दे धातुसंशयः–दुरुपसर्गात् तरतेः स्तृणातेर्वा; अन्येष्वन्याय्यषत्वम् इति नावगृह्यन्ते ।

(३५) ऊवध्यमुगणा उख इष्कृतिरिष्कर्त्तारमुदरम् इत्युपसर्गैकदेशलोपात् (वा० प्रा० ५।४२)–उपसर्गैकदेशलोपाद् एतषु शब्देषु नावग्रहः । इष्कृतिः, इष्कर्तारम् इत्यत्र नेरुपसर्गस्य नकारलोपः[3] अवशिष्टेषूद उपसर्गस्यान्त्यवर्णलोपः ।

(३६) संस्कृतं संस्कृतिर्मांस्पचन्याः पुंश्चलूम् इत्यनुनासिकोपधत्वात्, अनुस्वारागमत्वाद् इत्येके (वा० प्रा० ५।४३, ४४)–एतानि पदान्यनुनासिकोपधत्वाद् अनुस्वारागमत्वाद् वा नावगृह्यन्ते । अत्र माध्यन्दिनानाम् आदिमः पक्षः काण्वानां त्वन्तिम इति व्याख्याकारौ ।[4]

(३७) परीत्तोऽवत्तानां सुविताय सग्धिरिति च (वा० प्रा० ५।४५)–एतानि पदानि नावगृह्यन्ते । तत्र परीत्तः, अवत्तानां, सग्धिः—इति धात्वेकदेशलोपाद अवग्रहाभावः । पाणिनीयप्रक्रियया तु—अच उपसर्गात् तः (अ० ७।४।४७) इति तकारादेशः । सग्धिरित्यत्र घसेरकारसकारयोर्लोपः । सुवितायेत्यत्र धातुः संशय्यते । तथा हि—सु इताय सुगताय, आहोस्वित् सुताय प्रजायै–इति संशयः । व्याख्याकृद्भ्याम् उद्धृता संग्रहकारिका पूर्वं प्रदर्शितैव ।

—:०:—

१. मा० सं० १०।२८ उ० भा० ।।

२. आपं चैव हलन्तानाम् इति भागुरिमतम् । महा० ४।१।१ अपि द्रष्टव्यम् ।।

३. महा० ८।२।२५; वा० प्रा० ३।१८ उ० भा० ।

४. वा० प्रा० ५।४३, ४४ उ० भा०, अ० भा० ।।

सप्तमोऽध्यायः

# ७. पाणिनिकात्यायनाभिसम्बन्धविमर्शः

## ७. १. ०. विशिष्टाः साम्यप्रदेशाः—

पाणिनीयाष्टक-वाजसनेयिप्रातिशाख्ययोः प्रयुक्तानां संज्ञा-परिभाषा-स्वर-संस्कार-शैलीनां सुप्रभूतं साम्यं वरीवृत्यत इति शास्त्रद्वयस्य पारस्परिक-तुलनया सुव्यज्यते। एतच्च तत्र तत्र परामर्शे प्रदर्शितचरम्। इदं साम्यं काकतालीयं स्याद् इत्यपि न शक्यते कल्पयितुम्,वहुतरविषयव्यापित्वात्। तत् पाणिनि-प्रातिशाख्यकृत्कात्यायनयोः केनचिद् अभिसम्वन्धेनावश्यं भाव्यम्। तमेवाभिसम्बन्धम् उद्भाव्य स्थिरीकर्त्तुम् अत्र प्रयासो विधीयते। उभयोः शास्त्रयोः साम्यस्थलविशेषास्तावद् निदर्शनरूपेणेह समुपस्थाप्यन्ते—

## ७. १. १. संज्ञासाम्यम्

| वाजसनेयिप्रातिशाख्ये | पाणिनीयाष्टके |
|---|---|
| अन्त्याद् वर्णात् पूर्व उपधा (१।३५) | अलोऽन्त्यात् पूर्व उपधा (१।१।६५) |
| समानस्थानकरणास्यप्रयत्नः सवर्णः (१।४५) | तुल्यास्यप्रयत्नं सवर्णम् (१।१।६) |
| अनन्तरं संयोगः (१।४८) | हलोऽनन्तराः संयोगः (१।१।७) |
| मुखनासिकाकरणोऽनुनासिकः (१।७५) | मुखनासिकावचनोऽनुनासिकः (१।१।८) |
| उच्चैरुदात्तः (१।१०८) | उच्चैरुदात्तः (१।२।२९) |
| नीचैरनुदात्तः (१।१०९) | नीचैरनुदात्तः (१।२।३०) |
| उभयवान् स्वरितः (१।११०) | समाहारः स्वरितः (१।२।३१) |
| तस्यादितउदात्तं स्वरार्द्धम् (१।१२६) | तस्यादित उदात्तम् अर्द्धह्रस्वम् (१।२।३२) |
| वर्णस्यादर्शनं लोपः (१।१४१) | अदर्शनं लोपः (१।१।६०) |

### ७. १. २. परिभाषासाम्यम्

| वाजसनेयिप्रातिशाख्ये | पाणिनीयाष्टके |
|---|---|
| स एवादिरन्तश्च (१।५२) | आद्यन्तवद् एकस्मिन् (१।१।२१) |
| सवर्णवच्च (१।७२) | अ अ (८।४।६८) |
| तस्मिन्निति निर्दिष्टे पूर्वस्य (१।१३४) | तस्मिन्निति निर्दिष्टे पूर्वस्य (१।१।६६) |
| तस्माद् इत्युत्तरस्यादेः (१।१३५) | तस्माद् इत्युत्तरस्य (१।१।६७) |
| षष्ठी स्थानेयोगा (१।१३६) | षष्ठी स्थानेयोगा (१।१।४९) |
| संख्यातानाम् अनुदेशो यथासंख्यम् (१।१४३) | यथासंख्यम् अनुदेशः समानाम् (१।३।१०) |
| विप्रतिषेध उत्तरं बलवद् अलोपे (१।१५९) | विप्रतिषेधे परं कार्यम् (१।४।२) |
| न परकालः पूर्वकाले पुनः (३।३) | पूर्वत्रासिद्धम् (८।२।१) |

### ७. १. ३. स्वरसाम्यम्

| | |
|---|---|
| स्वरितवर्जम् एकोदात्तं पदम् (२।१) | अनुदात्तं पदम् एकवर्जम् (६।१।१५५) |
| तेनानन्तरा षष्ठ्येकपदवत् (२।१८) | सुबामन्त्रिते पराङ्गवत् स्वरे (२।१।२) |
| आमन्त्रितं च (२।२४) | आमन्त्रितस्य च (६।१।१९८) |
| आसीदिति चोत्तरं विचारे (२।५३) | उपरि स्विदासीदिति च (८।२।१०२) |
| उदात्ताच्चानुदात्तं स्वरितम् (४।१३४) | उदात्ताद् अनुदात्तस्य स्वरितः (८।४।६६) |

### ७. १. ४. संस्कारसाम्यम्

| | |
|---|---|
| ऋषरेभ्यो नकारो णकारं समानपदे (३।८५) | रषाभ्यां नो णः समानपदे (८।४।१) |
| नुश्चाम्रेडिते (४।८) | कान् आम्रेडिते (८।३।१२) |
| तकारो ले लम् (४।१३) | तोर्लि (८।४।६०) |
| सन्ध्यक्षरम् अयवायावम् (४।४७) | एचोऽयवायावः (६।१।७८) |
| तकारवर्गश्चकारवर्गे चकारवर्गम् (४।९४) | स्तोः श्चुना श्चः (८।४।४०) |
| शकारे च (४।९५) | |

### ७. २. त्रयः कल्पाः—

ईदृशेषु स्थलेषु सूत्राणाम् आनुपूर्वी क्वचित् सर्वथा समाना विद्यते, क्वचित् स्वल्पं भिद्यते, केचन योगाश्च शब्दतो भिन्नाः सन्तोऽप्यर्थतः समाना एवोपलभ्यन्ते। तथैव प्रतिपादनपद्धतिरपि बहुत्र समाना दरीदृश्यते। एतत् सर्वम् अभिसमीक्ष्य जायत एषा विचारणा-अस्ति कश्चनाभिसम्बन्धः पाणिनिप्रातिशाख्यकारकात्यायनयोः ?—इति। स च सम्बन्धोऽत्रोपजीव्योपजीविभावरूपः सम्भवति। तत्र त्रयः कल्पाः सम्भाव्यन्ते—

(१) स्रोतोऽन्तरस्योपजीव्यत्वम्—द्वाभ्यामपि शास्त्रकृद्भ्यां कुतश्चित् तृतीयस्रोतसः सामग्रीम् उद्धृत्य, स्वस्वशास्त्रे यथावसरं सा निक्षिप्तेति प्रथमः कल्पः।

(२) कात्यायनीयप्रातिशाख्यस्योपजीव्यत्वम्—पाणिनिः कात्यायनीयप्रातिशाख्याद् इमां सामग्रीं समुद्धृत्य स्वशास्त्रे सन्निवेशयामासेति द्वितीयः कल्पः।

(३) पाणिनीयतन्त्रस्योपजीव्यत्वम्—कात्यायनः पाणिनीयाद् अष्टकाद् एतां सामग्रीं समुद्धृत्य स्वकीये प्रातिशाख्ये निचिक्षेपेति तृतीयः कल्पः।

तत्र यदि तावत्-स्रोतोऽन्तरस्योपजीव्यत्वम्—इति प्रथमः कल्पः स्वीक्रियेत, तर्हि बहु कल्पनीयं स्यात्। तथा हि—पाणिनीयतन्त्रे वाजसनेयिप्रातिशाख्ये च विधीयमाना व्यवह्रियमाणाश्च संज्ञाः परिभाषाश्च तस्मिस्तृतीये स्रोतसि विद्येरन्, तदुपयोगप्रदेशाश्चाप्युपलभ्येरन्। तिङ्कृत्तद्धितसमासादिविधयस्तत्रापि तथैव प्रतिपाद्येरन् यथास्मिन् शास्त्रद्वये, प्रतिपादनपद्धतिश्चापि तादृश्येवाङ्गीक्रियेत यादृशी पाणिनीयकात्यायनीयशास्त्रयोरुपलभ्यते। न चैवंविधः कोऽपि ग्रन्थः शास्त्रं वोपलभ्यते यत्र सर्वम् एतद् विन्यस्यते। तस्मादेष कल्पोऽगतिकगतिरित्यपरकल्पद्वयेऽसिद्ध एवादरणीयः।

अथ-कात्यायनीयप्रातिशाख्यस्योपजीव्यत्वम्-इति द्वितीयः कल्पः परीक्ष्यते। अयं पक्षो वेवरेण सिद्धान्ततयाऽङ्गीकृतः। लीबिश-ब्रेलोर-

कीथादयश्च वेवरास्थितपक्षम् एव समर्थयन्ते[1] । वेवरोक्तं संक्षेपत इत्थम् अनुवदितुं शक्यते[2]—

(१) वाजसनेयिप्रातिशाख्ये तिङ् (वा० प्रा० १।२७), आङ् (वा० प्रा० ६।२४), लुक् (वा० प्रा० ३।१२), लुप् (वा० प्रा० १।११४) इत्यादयो लघुपारिभाषिकशब्दाः, उपपदम् (वा० प्रा० ६।१४), यद्वृत्तम् (वा० प्रा० ६।१४), अनुदेशः (वा० १।४३), धातुः (वा० प्रा० ५।१०) इत्यादयश्च गुरुपारिभाषिकशब्दा अष्टाध्याय्याम् इव समुपलभ्यन्ते । परं नैतेऽथर्वप्रातिशाख्यवत् सर्वथा संवादिनः सन्ति । वाजसनेयिप्रातिशाख्ये सिम् (वा० प्रा० १।४४), जित् (वा० प्रा० १।५०), मुद् (वा० प्रा० १।५२) धि (वा० प्रा० १।५३) इत्यादयो लघुसंज्ञा विधीयन्ते व्यवह्रियन्ते च । नैताः क्वचिदन्यत्रोपलभ्यन्ते । एता एवानुकृत्य पाणिनिः स्वशास्त्रे टिघुघादीर्लघुसंज्ञाः कृतवान् इत्याशयः[3] ।

(२) वाजसनेयिप्रातिशाख्यीया मुख्याः परिभाषाः स्वरूपतः स्वल्पभेदेन वा पाणिनिः स्वकीये शास्त्रे प्रायः संजग्राह । एताः पाणिनीयशास्त्रे विकासम् आपन्ना दृश्यन्ते । तद्यथा—तस्मिन्निति निर्दिष्टे पूर्वस्य (अ० १।१।६६) इत्येवमादयः (पूर्वत्र विन्यस्ताः) । केषुचिद् उदाहरणेषु विषयसाम्यात् सूत्रसाम्यम् इत्यस्मिन् तथ्ये स्वीकृतेऽपि पाणिनीयतन्त्रप्रयुक्तं कौशलं वाजसनेयिप्रातिशाख्ये न लक्ष्यते ।[4]

(३) पाणिनिकालेऽकारोच्चारणस्य संवृतप्रधानत्वात् पाणिनिः स्वशास्त्रे उकारेणान्यान् वर्णान् निर्दिदेश[5], वाजसनेयिप्रातिशाख्यकारस्तु

---

१. एस० एन० घोषालः, वाजसनेयिप्रातिशाख्य : रिव्यू आफ् वेबर्स इन्ट्रोडक्शन पृ० २२; सी० एफ० स्कोल्ड : दि रिलेटिव क्रानालाजी आफ् पाणिनि एण्ड दि प्रातिशाख्याज, इण्डियन एण्टिक्वेरी, अंक ४० (अक्टूबर १९२६) पृ० १८१-१८५ ॥

२. एस० एन० घोषालः, वाजसनेयिप्रातिशाख्य : रिव्यू आफ् वेबर्स इण्ट्रोडक्शन पृ० २१, २२ ॥

३. थि० गोल्डस्टुकर : पाणिनिः, पृ० २०४, २०५ ॥

४. पाणिनि, पृ० २०७ ॥

५. अ० १।२।२७ ॥

खल्वकारस्य संवृतताम्[1] ऊरीकुर्वन्नप्यस्य विशुद्धस्वरत्वम्[2] अभ्यमन्यत ।[3]

वेवरस्य विचारसरणिः समीचीना न प्रतीयते, यतः स प्रथमत एव प्रातिशाख्यकारकात्यायनेन समनुगृहीतः पाणिनिः—इति मतम् अङ्गीकृत्य द्वावेव कल्पौ प्रदर्शयामास । प्रातिशाख्यकारकात्यायने कौशलाभावम् अभ्यास-राहित्यं वा, पाणिनौ च कौशलं मन्यमानोऽपि स प्राह-प्रातिशाख्यकारकात्यानप्रस्तुता नियमाः सुनिश्चिताः स्पष्टाश्च, पाणिनिस्तु निश्चयाभावे (बहुलम्) भ्राम्यति, यद्वासाधुना पाक्षिकेण च विधिना निर्णयति[4]–इति । एतेन वेवरस्य स्ववचोव्याघातः स्पष्टम् अवभासते । यश्चाप्यस्य प्रधानो हेतुः—अकारस्य संवृततरत्वं नाम, तत्रायं स्वयमेवापरितुष्य प्रावोचत्—प्रदेशभेदोऽस्य (अकारसंवृततरत्वस्य) कारणं सम्भवति, यतः पाणिनिर्भारतस्योत्तरपश्चिमप्रदेशेन सम्बद्धः, वाजसनेयिप्रातिशाख्यं तु प्राच्यप्रदेशेन[5]–इति ।

वेवरास्थितमतम् एव लीविशोऽपि समभ्यमन्यत । स च स्पष्टतरशब्दैरेतन्मतम् उपन्यस्यति । तथा हि—समानसूत्रैः प्रथमत एतद् अनुमीयते यद् द्वयोर्ग्रन्थयोः कश्चन सम्बन्धो विद्यते । तथा च पाणिनिर्वा कात्यायनीयग्रन्थाद् उद्धरति,कात्यायनो वा पाणिनीयग्रन्थाद् उद्धरति, यद्वा द्वावपि कुतश्चन समानस्रोतस उद्धरतः । यदि वयं षट्चत्वारिंशत्तमानुच्छेदस्थानि सूत्राणि (अर्थाद् उभयोर्ग्रन्थयोः समानसूत्राणि न तु समानानुपूर्वीकाणि) पक्षपातं विना परीक्षेमहि, तर्हि मन्मते वयम् इमं निष्कर्षं प्राप्स्यामो यद् द्वितीयः कल्पोऽविचारणीयः । अत एव ए० वेबरो गोल्डस्टुकराद् विपरीतं स्वमतं स्थापयति । ऋग्वेदप्रातिशाख्यापेक्षया वाजसनेयिप्रातिशाख्यस्य शैलीविकासोऽतितरां स्यात्, परं कात्यायनस्य (वाजसनेयिप्रातिशाख्यकृतः) सूत्ररचना शिलाभ्यः सुघटितानाम् इव पाणिनीयसूत्राणां तुलनायां प्रमादेन प्रपञ्चेन चोपेता । अस्मिन् विषये तुलना विधेया, यथा—पा० ८।२।१; ८।४।४०; ८।३।३७; १।१।१७, १८; ६।१।८७, ८८ इत्येतेषां सूत्राणां वाजसनेयिप्रातिशाख्यस्थसमानसूत्रैः सह[6]–इति ।

---

१. वा० प्रा० १।७२ ॥ २. वा० प्रा० १।५५ ॥
३. पाणिनि, पृ० २०५ ॥
४. पाणिनि, पृ० २०७ ॥ ५. पाणिनि, पृ० २०५ ॥
६. पाल थीमे : पाणिनि एण्ड दि वेद, पृ० ८३, ८४ ॥

पक्षपातत्यागपूर्विकां निष्कर्षप्राप्तिं प्रतिज्ञायापि लीविशो–द्वितीय-कल्पोऽविचारणीयः–इति घोषयन् पक्षविशेषम् एवाजग्राह। न हि प्रातिशाख्यकारकात्यायनस्य पाणिन्युपजीवित्वे किमपि प्रत्यक्षं बाधकमस्ति। यच्चापि स कात्यायनीयसूत्राणां सप्रमादत्वं सप्रपञ्चत्वं चोद्घोष्य पाणिनीयतन्त्रस्य विकसिततरत्वं प्रतिपादयति, तद् अप्यसमीचीनम्, प्रयोजनविशेषपरस्य कात्यायनस्य तादृशरचनाश्रयत्वस्यापि सुवचत्वात्। एतच्चानुपदं प्रतिपादयिष्यते। अपि च, रचनाविकासो न रचनाया अवरकालत्वद्योतकः, व्यभिचारदर्शनात्। तथा हि—पाणिनीयरचना ह्यथर्ववेदप्रातिशाख्यापेक्षया विकसिततरा सत्यपि नावरकालजेति गवेषकैरङ्गीक्रियते। रचयितुः स्वयोग्यता, रचनाप्रयोजनम्, उपयोक्ताधिकारीत्यादयोऽपि हेतवो रचनां प्रभावयन्तीति सर्वसम्मतम्। विकाससिद्धान्तस्य शास्त्रीयरचनासु विनियोगो न युक्तः। तथा चाह थीमेमहोदयः—विकाससिद्धान्तः साहित्यकलाकृतीः प्रति विवेकं विना प्रयुक्तश्चेत्, तर्हि स गम्भीराणां विपरीतनिर्णयानां प्रभवः स्यात्[१]–इति।

अथ पाणिनीयतन्त्रस्योपजीव्यत्वम् इति–तृतीयः कल्प इदानीं परीक्ष्यते। कात्यायनः पाणिनीयतन्त्रम् अधिगम्य स्वकीयं शास्त्रं प्रोवाच। व्याकरणापेक्षया प्रातिशाख्यस्य स्वल्पक्षेत्रव्यापित्वात् कात्यायनः प्रक्रियाजटिलतां तदनुरूपपारिभाषिकीं शब्दावलीं च परितत्याज। प्रातिशाख्यनिकाये लब्धप्रचाराः संज्ञाः, परिभाषाः, प्रतिपादनपद्धतिं च स्वायत्तीकृत्य पाणिनीयतन्त्रप्रभावप्रकाशेन च परिष्कृत्य कात्यायनः स्वशास्त्रं प्रोवाच। तत्र केचनांशाः प्राचीनाचार्याणाम्, अपरे पाणिनेः, अन्ये च स्वकीयाः सन्निविष्टाः। अत एव कानिचन पाणिनीयवचनानि वाजसनेयिप्रातिशाख्ये शब्दशोऽनूदितानि, इतराणि चार्थतोऽनुकृतानि दृश्यन्ते। प्रक्रियाजटिलतां परिजिहीर्षुः कात्यायनः प्रातिशाख्यान्तरवत् प्रत्याहारस्थाने वर्णान् स्वरचितसंज्ञाविशेषान् वा, क्वादिस्थाने कवर्गादीन्, गुणादिस्थाने एकारादीन शब्दान् प्रयुयुजे। इत्थं च सुखावबोधः स्पष्टा प्रतिपत्तिश्च कात्याय-

---

१. दि थियरी आफ़ इवोल्यूशन, इफ़ इण्डिस्क्रिमिनेटली एप्लाइड टु दि प्राडक्ट्स आफ़ लिटरेचर ऑर आर्ट, इज़ एप्ट टु बिकम दि सोर्स आफ़ ग्रेव मिस्जजमेण्ट्स (पाल थीमे : पाणिनि एण्ड दि वेद, पृ० ८५)॥

नस्य प्रातिशाख्ये परिलक्ष्यते। अत एवास्मिन् शास्त्रे रचनासौष्ठवं न तादृग् उपलभ्यते यादृक् पाणिनीये तन्त्रे।

### ७. ३. कात्यायनीयतन्त्रे पाणिनेः प्रभावः—

कात्यायनः पाणिनीय-योगान् परिष्कृत्य स्वशास्त्रे निचिक्षेपेति कतिपयैर्निदर्शनैरुपपाद्यते—

(१) मुखनासिकावचनोऽनुनासिकः (अ० १।१।१८) इति पाणिनीयसूत्रे प्रयुक्तं वचनपदं युक्ततरेण करणपदेन विनिमीयते वाजसनेयिप्रातिशाख्ये—मुखनासिकाकरणोऽनुनासिकः(वा० प्रा० १।७५) इति। पाणिनीयसूत्रस्थो वचनशब्दोऽपि करणपर्यायः प्रतीयते। तथा चाह हरिः—**स हि वर्णो न मुखेनैव, नापि नासिकयैव चात्मवृत्तिं लभते, किन्तु वायुनानुपरतशक्तिनान्यतरकरणमभिहत्यान्यतरकरणेऽभिहन्यमाने आत्मव्यक्तिं लभते**[१]–इति। अथर्ववेदप्रातिशाख्यकारः खल्वपि—**अनुनासिकानां मुखनासिकम्**[२]–इत्यत्र मुखनासिकम् अनुनासिकानां करणम् अभिमेने।

(२) तुल्यास्यप्रयत्नं सवर्णम् (अ० १।१।९)इति सूत्रेण पाणिनिः सवर्णसंज्ञां विधत्ते। प्रातिशाख्यकारः कात्यायनस्तु–समानस्थानकरणास्यप्रयत्नः सवर्णः (वा० प्रा० १।४५) इति गुरुतरसूत्रेण सवर्णसंज्ञाम् आरभते। पाणिनीयसूत्रम अस्पष्टम् इति व्याख्यानक्लेशम् अपेक्षते। अत एव वार्त्तिककारस्तत्रातिप्रसङ्गम् उद्भाव्य न्यासान्तरेण परिहरति—**सिद्धन्त्वास्ये तुल्यदेशप्रयत्नं सवर्णम्**[३]–इति। महाभाष्यकारश्चापि बहुविधं व्याख्यानं प्रास्तावीत्। अत्र प्रातिशाख्यकारः स्पष्टप्रतिपत्तये शब्दलाघवम् अपि परित्यज्य पाणिनीयं सूत्रं परिष्करोतीति सुव्यक्तम्।

(३) आद्यन्तवद् एकस्मिन् (अ० १।१।२१) इति पाणिनीयोऽतिदेशः प्रातिशाख्यकृता कात्यायनेन सरलैः शब्दैरुपस्थाप्यते—स एवादिरन्तश्च (वा० प्रा० १।५२) इति सूत्रेण।

(४) अदर्शनं लोपः (अ० १।१।६०) इति पाणिनिना लोपसंज्ञा

---

१. उद्योते १।१।८ उद्धृतम्॥ २. अ० प्रा० १।२७॥
३. महा० १।१।९ वा० २॥

विधीयते । प्रातिशाख्यकारः कात्यायनस्तु पाणिनीयं सूत्रं स्पष्टयति–वर्णस्यादर्शनं लोपः (वा० प्रा० १।१४१) इति योगेन । तथा चात्रापि प्रातिशाख्यकारः स्पष्टप्रतिपत्त्यर्थं लाघवमपि नाद्रियते ।

(५) तस्माद् इत्युत्तरस्य (अ० १।१।६७), आदेः परस्य (अ० १।१।६४) इति पाणिनीयं परिभाषाद्वयम् एकीकृत्य वाजसनेयिप्रातिशाख्यकारः संक्षिपति–तस्माद् इत्युत्तरस्यादेः (वा० प्रा० १।१३५) इति सूत्रेण । पाणिनीये तन्त्रे द्वयोरपि परिभाषयोः पृथक् पृथक् प्रयोजनानि सन्ति, किन्तु प्रातिशाख्यस्य स्वल्पविषयव्यापित्वात् तत्रैकेनैव सूत्रेण निर्वाहः क्रियते ।

(६) समाहारः स्वरितः (अ० १।२।३१) इति पाणिनेःस्वरितसंज्ञाविधानम् । तत्र वार्त्तिककारः समाहारशब्दस्यास्पष्टताम् उद्बोधयन्—**समाहारोऽचोश्चेन्नाभावात्, गुणयोश्चेन्नाच्प्रकरणात्**[1]–इति वार्त्तिकयुगलेनाक्षिप्य समादधाति–**सिद्धन्त्वचसमुदायस्याभावात् तद्गुणे सम्प्रत्ययः**[2]–इति । तत्रापि**मतुब्लोपोऽत्र द्रष्टव्यः—अथवाकारो मत्वर्थीयः**[3]—इति पातञ्जलव्याख्यानात् सूत्रार्थः स्फुटीभवति । तथा च पाणिनीये सूत्रे महत् प्रतिपत्तिगौरवम् । उभयवान् स्वरितः (वा० प्रा० १।११०) इति वाजसनेयिप्रातिशाख्यसूत्रं तु तादृशं व्याख्यानं नापेक्षते । **य इदानीम् उभयगुणः स तृतीयाम् आख्यां लभते**[4]–इति ब्रुवाणः पतञ्जलिः खल्वपि प्रातिशाख्यकारस्य कात्यायनस्यानुवदत इव ।

(७) यथासंख्यम् अनुदेशः समानाम् (अ० १।३।१०) इति पाणिनीयं सूत्रं प्रातिशाख्यकारः कात्यायनः सरलीकरोति—संख्यातानाम् अनुदेशो यथासंख्यम् (वा० प्रा० १।१४३) इति ।

(८) विप्रतिषेधे परं कार्यम् (अ० १।४।२) इति पाणिनीयो योगः प्रातिशाख्यकृता कात्यायनेन परिष्क्रियते—विप्रतिषेध उत्तरं बलवद् अलोपे (वा० प्रा० १।१५९) इति । पाणिनीयैः क्वचिद् नित्यान्तरङ्गासिद्धत्वादिभिः क्वचिच्च—**सर्वविधिभ्यो लोपविधिर्बलीयान्**[5]–इति परिभाषया व्यवस्था क्रियते । ततः प्रतिपत्तिगौरवं विज्ञाय

---

१. महा० १।२।३१ वा० १, २ ॥ २. महा० १।२।३१ वा० ३ ॥
३. महा० १।२।३१ ॥ ४. महा० १।२।३१ ॥
५. सीर० परि० १११ ॥

प्रातिशाख्यकारः स्पष्टमेव सूत्रे लोपं पर्युदस्यति ।

(९) अनुदात्तं पदम् एकवर्जम् (अ० ६।१।१५५) इति पाणिनीयो योगः प्रातिशाख्यकारेण कात्यायनेन—स्वरितवर्जम् एकोदात्तं पदम् (वा० प्रा० २।१) इत्येवं परिष्क्रियते ।

(१०) पूर्वत्रासिद्धम् (अ० ८।२।१) इति सूत्रेण पाणिनिः पूर्वं प्रति परस्यासिद्धत्वम् उपदिशति । कात्यायनस्तु—न परकालः पूर्वकाले पुनः (वा० प्रा० ३।३) इति सूत्रेण तदेव प्रयोजनं साधयति । कात्यायनीयं सूत्रं यद्यपि रचनादृष्ट्या तावत् सौष्ठवं नावहति यावत् पाणिनीयं सूत्रम्, तथापि स्वार्थं स्पष्टरीत्या बोधयतितराम् । पाणिनीयसूत्रस्यास्पष्टतावारणाय वार्त्तिककारोऽपि—**पूर्वत्रासिद्धमधिकारः**[1]—इत्यादिभिर्वार्त्तिकैः प्रयतते । लीविशस्तु शब्दलाघवशैलीम आश्रित्य पाणिनेरर्वाक्कालिकत्वम् अभिमन्यते[2] । कालनिर्णये केवलं शैल्याः प्रयोजकत्वं न शक्यतेऽङ्गीकर्त्तुम् । तथा चाह सिद्धेश्वरवर्मा – समकालिकाः पुरुषाः संक्षेपविस्तारयोर्विविधमात्रोपेतां शैलीं प्रयुञ्जीरन् । एवं च स्वापकृष्टशैल्याधारेण वाजसनेयिप्रातिशाख्यं पाणिनेः प्राचीनतरं भवितुं नार्हति[3]–इति ।

(११) रषाभ्यां नो णः समानपदे (अ० ८।४।१) इति पाणिनीयसूत्रे साक्षाद् ऋकारस्याभावम् अभिसमीक्ष्य, प्रतिपत्तॄन् ज्ञापकादिक्लेशात् परित्रातुं कात्यायनः स्वकीये प्रातिशाख्ये सूत्र एव साक्षाद् ऋकारं सन्निवेशयति—ऋषरेभ्यो नकारो णकारं समानपदे (वा० प्रा० ३।८५) इति । वार्त्तिककारोऽपि—**रषाभ्यां णत्वे ऋकारग्रहणम्**[4]–इति वार्त्तिकेन पाणिनीयं लक्षणं पूरयितुम् उद्यतो दृश्यते ।

(१२) अ अ (अ० ८।४।६८) इति सूत्रेण पाणिनिर्विवृतस्यावर्णस्य संवृतत्वं प्रत्यापादयति । प्रातिशाख्यकृत् कात्यायनस्तु–सवर्ण-

---

१. महा० ८।२।१ वा० ३ ।

२. पाणिनि एण्ड दि वेद, पृ० ८९ ।।

३. टू काण्टेम्परेरी पर्सन्ज़ मे यूज़ स्टाइल्स विद ए वेरींग डिग्री आफ़ डिफ़यूज़नैस ऑर प्रिसिश्यन । दस दि वाज० प्राति० नीड नॉट बी अर्लियर दैन पाणिनि ऑन दि ग्राउण्ड आफ़ इट्स इन्फ़ीरियर स्टाइल । (सिद्धेश्वरवर्मा, क्रिटिकल स्टडीज़, पृ० २८) ।

४. महा० ८।४।१ वा० १ ।।

वच्च (वा० प्रा० १।७२) इति सूत्रेण तदेव विधत्ते । आपाततः कात्यायनीयं सूत्रं गुरु प्रतीयते, किन्तु पाणिनीयेऽपि प्रतिपत्तिगौरवं वर्त्तत एव । व्याख्याक्लेशापनयनाय प्रातिशाख्यकारेण कात्यायनेन जानतैव गुरुरचना समाश्रायि ।

प्रदर्शितनिदर्शनैः पाणिनीयसूत्राणां प्रातिशाख्यकारेण कात्यायनेन विहितः परिष्कारः सुतरां सिध्यति । अपि च, सन्ति बहवो योगाः कात्यायनीयप्रातिशाख्ये, ये पाणिनीयतन्त्रस्य साहाय्यं विना व्याख्यातुं न शक्यन्ते ।[1] अत एवोवटानन्तौ बहुषु स्थलेषु पाणिनीय-सूत्राणां साहाय्येन प्रातिशाख्यसूत्राणि व्याचख्यतुः ।

अनेकस्य कात्यायनीयसूत्रस्योदाहरणानि संहितासु नोपलभ्यन्ते । यद्यपि तेषु कतिपयानाम् उदाहरणानि लुप्तासु संहितासु स्युरिति कल्प्यते, तथापि तेषां रचना पाणिनिरचनया प्रभावितेति स्पष्टं लक्ष्यते । अथ निदर्शनैरेतद् विशदीक्रियते । सम् अन्तःपदे कखपफेष्व-नूष्मपरेषु, नुश्चाम्रेडिते (वा० प्रा० ४।८, ९) इति सूत्रयोः प्रायेण कृत्रिमाण्युदाहरणानि पुरस्क्रियन्ते । तथा च प्राहोवटः—**इह यान्युदाहरणानि संहितायां नोपलभ्यन्ते, तेषामपि लक्षणं प्रसङ्गात् क्रियमाणं न विरुध्यते**[2]–इति । इत्थं च प्रातिशाख्यकारस्य स्वक्षेत्राद् बहिर्धावनं द्योतयति यदयं महत आचार्यस्य पाणिनेः कृतेः सामग्रीम् उद्धृत्य प्रसङ्गवशात् स्वशास्त्रे समावेशयतीति । किञ्च, नुश्चाम्रेडिते (वा० प्रा० ४।९) इति सूत्रस्य रचना—कान् आम्रेडिते (अ० ८।३।१२) इति पाणिनीयसूत्रस्य रचनाम् अनुसरति । अपि च, वार्त्तिककारः—समः सुटि (अ० ८।३।५) इति पाणिनीयसूत्रे संशोधनं प्रस्तौति—**सम्पुङ्कानां सत्वम्, रुविधो ह्यनिष्टप्रसङ्गः**[3]–इति । प्रातिशाख्यकारोऽप्यत्र सकारमेव विधत्ते[4] । तथैव—नपुंसकाद् इकारस्य, न सप्तम्यामन्त्रितयोः (वा० प्रा० ३।१३९, १४०) इति कात्यायनीयसूत्रे पाणिनिप्रभाविते प्रतीयेते । एते सूत्रे नकारस्य विकारप्रकरणे पठ्येते, न चैताभ्यां नकारस्य विकारस्तत्प्रतिषेधो वा विधीयतेयथाव्याख्यम् । अपि च, लोपम् इति द्वितीयान्तपदानुवर्त्तनाद् अत्र 'इकारः' इति प्रथमान्त-

---

१. गोल्डस्टुकर : पाणिनि, पृ० २२३ ।।
२. वा० प्रा० ४।९ उ० भा० ।।
३. महा० ८।३।५ वा० १,२ ।।
४. वा० प्रा० ४।८ ।।

निर्देशेन भवितव्यम् । तथैव—यकाराकारयोर्जास्पत्ये पदे (वा० प्रा० ४।३९) इति सूत्रे लोपम् इति द्वितीयान्तपदानुवृत्तेः 'यकाराकारौ' इति प्रथमान्तनिर्देशेन भाव्यम् । इदृशेषु स्थलेषु पाणिनेः प्रभावः स्फुटं परिलक्ष्यते । तथा चाह सिद्धेश्वरवर्मा—पाणिनिना स्थानिनिर्देशः षष्ठ्या विभक्त्या क्रियते, वाजसनेयप्रातिशाख्ये तु द्वितीयया[1] निर्देशः, तदर्थं च परिभाषा विधीयते (वा० प्रा० १।१३३) । तदेव प्रातिशाख्यं स्थलद्वये[2] षष्ठ्या स्थानिनं निर्दिशति, तदर्थं च पाणिनीयशब्दान् प्रयुञ्जानः परिभाषान्तरं विधत्ते (वा० प्रा० १।१३६) । वाजसनेयिप्रातिशाख्ये स्थानिनिर्देशाय षष्ठीप्रयोगस्तत्र पाणिनेः प्रभावम् इङ्गयति[3]—इति ।

तिङ्कृतद्धितचतुष्टयसमासाः शब्दमयम् (वा० १।२७) इति सूत्रे प्रातिशाख्यकारः कात्यायनः 'तिङ्' प्रत्याहारं प्रयुङ्क्ते । केवलं प्रातिशाख्यम् अधीयानः कस्तिङ्पदस्यार्थं बोद्धुं पारयेत् ? पाणिनीयशास्त्रम् अधिगम्यैव तिङ्प्रत्याहारावबोधः सम्भवति । तस्मादत्र पाणिनेः प्रभावः सुतराम् अभिव्यज्यते ।

अथ प्रकारान्तरेणापि प्रातिशाख्यकारस्य कात्यायनस्य पाणिन्युपजीवित्वम् उपपाद्यते—

## ७. ४. पाणिनेः शुक्लयजुर्वेदानुद्धरणम्—

पाणिनिः स्वकीये शास्त्रे शुक्लयजुर्वेदं कण्ठतो न सस्मार, कृष्णयजुर्वेदं तु—तित्तिरिवरतन्तुखण्डिकोखाच्छण् (अ० ४।३।१०२) इति सूत्रेण तैत्तिरीयशब्दसंस्कारे, देवसुम्नयोर्यजुषि काठके (अ० ७।४।३८) इत्यत्र च साक्षाद् निर्दिदेश । शुक्लयजुर्वेदस्य प्रवक्तापि न वाजसनेयनाम्ना नैव याज्ञवल्क्यनाम्ना[4] पाणिनीयतन्त्रे स्मर्यते । यद्यपि वाज-

---

१. अत्र वर्म्मणा 'प्रथमया' इति वक्तव्यम् आसीत्, यतः—तम् इति विकारः (वा० प्रा० १।१३३) इति परिभाषासूत्रेण विकारो द्वितीयया निर्दिश्यते, न तु स्थानी ।

२. वस्तुतस्तु बहूनि स्थलानि । यथा—३।१३९; ४।३९, १२५, १२६ ॥

३ क्रिटिकल स्टडीज़, पृ० २८ ॥

४. (क) इमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते (बृहदारण्यकस्य पञ्चमे प्रपाठके) ।

सनेयशब्दः शौनकादिगणे[1] पठ्यते, याज्ञवल्क्यशब्दश्च गर्गादिगणे[2] पठिताद् यज्ञवल्कशब्दात् यञ्प्रत्ययेन साध्यते, तथापि गणपठितेषु प्रथमशब्दस्य (प्रकारान्तरेण सिद्धस्य वान्यस्य) एव पाणिनीयत्वाङ्गीकाराद् अनयोः[3] पाणिनीयत्वं नासन्दिग्धम् । यत्तु—शौनकादिभ्यश्छन्दसि (अ० ४।३।१०६) इति सूत्रे बहुवचननिर्देशाद् गणपठितास्त्रयः शब्दा अवश्यमेव पाणिनीयाः[4]—इत्यवोचत् पाठकः, तदपि न, आदिशब्दस्य प्रकारवाचित्वाभ्युपगमात् । एवं च—पाणिनिः शुक्लयजुर्वेदं नाज्ञासीद् इति निष्कर्षः[5] ।

अपि च, पुराणप्रोक्तेषु ब्राह्मणकल्पेषु (अ० ४।३।१०५) इत्यत्र वार्त्तिककारः—**याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्**[6]—इत्यवोचत् । वार्त्तिककारस्यायम् अभिप्रायः—पाणिनिना यानि शाट्यायनादीनि ब्राह्मणानि पुराणप्रोक्तानि समभिमतानि, तत्समानकालत्वाद् याज्ञवल्क्यादिभ्योऽपि णिनेः प्रसङ्गः, तस्य प्रतिषेधो वक्तव्य इति । तथा च णिनेरभावे कण्वादित्वाद्[7] अणि, याज्ञवल्कानि ब्राह्मणानीति सिध्यति । तत्र गोल्डस्टुकरो विवेचयति—पाणिनिः स्वसमानकालवर्त्तीनि नाममात्रेण ज्ञातानि शाट्यायनादीनि ब्राह्मणानि तावद् ईक्षेत, प्रधानभूतानि च याज्ञवल्कानि ब्राह्मणान्युपेक्षेतेत्यसम्भवाद्—याज्ञवल्क्येन सह पाणिनेरपरिचय इति निष्कर्षः । पाणिनिकाले शुक्लयजुर्वेदस्य संकलनं नाभूद् इत्यप्यनेनैव ध्वन्यते । न च तथा सति वार्त्तिककारभाष्यकाराभ्यां कात्यायनपतञ्जलिभ्यां प्रस्तुतस्य तुल्यकालत्वहेतोरयुक्तत्वम्, अन्यथा व्याख्यानात् । एवं हि व्याख्यायते—पाणिनिकात्यायनयोः पाणिनिपतञ्जल्योश्च मध्ये सुदीर्घकालव्यवायत्वात् पाणिन्यभिमतम् अपुराणम् अपि ताभ्यां पुराणम् एवाभ्यमन्यत[8]—इति ।

---

(ख) इमानि काण्वादीनि शुक्लानि शुद्धानि यजूंषि वाजसनेरपत्येन याज्ञवल्क्येनर्षिणाख्यायन्ते शिष्येभ्य उपदिश्यन्ते (प्रतिज्ञापरिशिष्टभाष्य १।३) ।

१. अ० ४।३।१०६॥ २. अ० ४।१।१०५ ॥

३. गोल्डस्टुकर : पाणिनि, पृ० १४४ ॥

४. ए० बी० ओ० आर० आई०, पूना वा० ६ भाग १, १९३०, पृ० ८४-८६ ॥ ५. गोल्डस्टुकर : पाणिनि, पृ० १४३, १४४ ॥

६. महा० ४।३।१०५ वा० १ ॥ ७. अ० ४।२।१११ ॥

८. पाणिनि पृ० १४३-१५२ ॥

पाणिनिः शुक्लयजुर्वेदं नाज्ञासीद् इति गोल्डस्टुकरस्य प्रथमो निष्कर्षः समीचीन इत्यनुपदम् उपपादयिष्यते, किन्तु तत्र–याज्ञवल्क्या-दिप्रतिषेधः—इति वार्त्तिकस्य हेतुत्वेनोपन्यासो न युक्तः, तस्य व्याख्यान्तरस्यापि सुवचत्वात् । तथा हि—वस्तुतः पाणिनिर्याज्ञवल्कानि ब्राह्मणानि पुराणप्रोक्तानि नोरीचकार ।[1] तथा—चाह वृत्तिकारः—**पुराणप्रोक्तेष्विति किम् ? याज्ञवल्कानि ब्राह्मणानि ···याज्ञवल्क्यादयो हि न चिरकाला इत्याख्यानेषु वार्त्ता**[2]—इति । यद्वा—पाणिनीय-शास्त्रस्य प्रायिकत्वात् तत्र याज्ञवल्क्यादि-प्रतिषेधो न विहितः स्यात्[3] ।

पूर्वप्रदर्शितविवेचनाद् एतत् स्पष्टं व्यज्यते यत् पाणिनिना शुक्ल-यजुर्वेदेन सह स्वपरिचयो न क्वचित् प्रदर्शितः, नापि शुक्लयजुर्वेदमात्र उपलभ्यमानः कश्चन शब्दो विशेषेण संस्कृत इति । अपि च, थीमे-महाशयेन नैके शब्दाः शुक्लयजुर्वेदात् (प्रायेण शतपथब्राह्मणात्) संगृह्यन्ते[4] येषां संस्कारः पाणिनिनावश्यं प्रदर्शनीय आसीत्, न खलु प्रदर्शितः । तादृशस्त्रयः शब्दा इह निदर्श्यन्ते । तथा हि—

(१) शिशिरशब्दोऽन्तोदात्तः पुँल्लिङ्गः शतपथे[5] बहुकृत्वः श्रूयते । पाणिनिस्तु–हेमन्तशिशिरावहोरात्रे च च्छन्दसि (अ० २।४।२८) इति सूत्रेण पूर्ववल्लिङ्गताम् अतिदिशति छन्दसि । यदि स शतपथप्रयुक्तं पुँल्लिङ्गं शिशिरशब्दम् अभोत्स्यत, तर्हि पूर्ववल्लिङ्गतां नात्य-देक्ष्यत् ।

(२) स्तर्यशब्दः पुँल्लिङ्गः शतपथे[6] श्रूयते । पाणिनिः—छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्य··(अ० ३।१।१२३) इति सूत्रेण स्तर्याशब्दं निपातयति, न तु पुंसि वर्त्तमानं स्तर्यशब्दम् । स्तर्याशब्दः केवलं कृष्णयजुर्वेद एवोपलभ्यते, तत्र चाप्येकस्मिन्नेव स्थले ।[7] शतपथस्थः पुँल्लिङ्गः स्तर्यशब्दोऽपि पाणिनिना व्यज्ञास्यत चेत्, तर्हि सोऽवश्यमेव समग्राहिष्यत ।

---

१. एफ़० कीलहार्न : महाभाष्य २, पृ० १०, ११ फ़ुटनोट १ ॥
२. का० ४।३।१०५ ॥ ३. पाणिनि एण्ड दि वेद, पृ० ७३ ॥
४. पाल थीमे : पाणिनि एण्ड दि वेद, पृ० ७-२०, ७४ ॥
५. श० ब्रा० २।१।३।१ ॥
६. श० ब्रा० ३।२।२।१० अस्तर्याः स्तर्यान् ॥ ७. मै० सं० १।५।१० ॥

(३) शतपथब्राह्मणे पितृहूयशब्दोऽपि श्रूयते[1]। पाणिनिः- छन्दसि निष्टर्क्यदेवहूय... (अ० ३।१।१२३) इत्यत्र देवहूयशब्दं निपातयन्नपि पितृहूयशब्दं न संगृह्णाति। एतेन—पाणिनिना सन्दर्भोऽयं न व्यज्ञायि- इत्यनुमीयते।

शुक्लयजुर्वेदेन सह पाणिनेरपरिचये सिद्धेऽपि गोल्डस्टुकरस्य—पाणिनीयव्याकरणप्रवचनं वाजसनेयिसंहितासंकलनाच्छतपथब्राह्मण-रचनायाश्च प्राक् सम्वभूव—इति निष्कर्षः साहसमात्रम् एव। पाठकेनायं पक्षः सुतरां प्रत्याख्यातः[2]। किञ्च, लीबिशो ब्राह्मणेषु प्रयुक्तानां शब्दानां पाणिनीयसूत्रैस्तुलनां विधाय निष्कर्षम् अवाप्नोति—न केवलम् ऐतरेयब्राह्मणम् (यत् सम्भवतः पा० ५।१।६२ सूत्रे निर्दिष्टम्) अपि तु बृहदारण्यकोपनिषद् निश्चयेन पाणिनेः प्राचीनतरा[3]–इति।

यदि पाणिनिकाले शुक्लयजुर्वेदः समवर्त्तत, तर्हि स तत्र भवान् कुतो न ततः किमप्युदहरद् इति महान् प्रश्न उदेति। अत्र वेबरः—भारतस्य प्राच्यतमेन विदेहाभिधेन प्रदेशेन वाजसनेयिसंहिताशतपथ-ब्राह्मणे सम्वध्येते, भारतस्य विभिन्नप्रदेशेषु विभिन्ना याजुषसंहिताः प्राचलन्निति नासम्भवि[4]–इति समाधिदिशं निर्दिदेश। थीमेमहाशयो वेबरनिर्दिष्टदिशम् अनुसृत्य तत्कृतसम्भावनां स्वानुसन्धानेन प्रत्यतिष्ठिपत्, प्रादीदृशच्च यत् शुक्लयजुर्वेदः प्राच्यप्रदेशेषु प्रसृतः, कृष्णयजुर्वेदस्तु खलूदीच्येषु (काठकसंहिता) प्रतीच्येषु (मैत्रायणीयसंहिता) दाक्षिणात्येषु (तैत्तिरीयसंहिता) च लब्धप्रचार आसीत्।[5] पाणिनेरुदीच्य प्रदेशवासित्वात् तत्र प्रथितेभ्य एव वेदेभ्यो विशिष्टोदाहरणानां संग्रहः स्वाभाविकः, न प्राग्देशप्रचलिताच्छुक्लयजुर्वेदात्। ननु चैवम् अनेकेन सूत्रेण[6] क्रियमाणं प्राच्यदेशनगरादिवाचिनां शब्दानां साधुत्वं

---

१. श० ब्रा० २।१।३।२ ॥

२. के० बी० पाठक, वेर दि वाजसनेयिसंहिता एण्ड शतपथब्राह्मण अननोन टु पाणिनि, एबीओआर आई, वाल० ९ भाग १ (१९३०), पृ० ८४-८९ ॥ ३. पाणिनि एण्ड दि वेद, पृ० ७५ इत्यत्रोद्धृतम् ॥

४. पाणिनि एण्ड दि वेद, पृ० ७५ इत्यत्रोद्धृतम् ॥

५. पाणिनि एण्ड दि वेद, पृ० ७५ ॥

६. अ० १।१।७५, २।४।६०, ४।२।४६, १२०, १२३, १३९, ६।२।८९; ९९, ७।३।१४ ॥

नोपपद्येतेति चेद्, न, उदीच्यविदुषामपि तादृशशब्दानां ज्ञानस्य सम्भवत्वात्। अत एव पाणिनिर्यादृशीं सूक्ष्मेक्षिकाम् उदीच्यशब्दसंस्कारे प्रदर्शयामास, न तादृशीं प्राच्यशब्दसंस्कारे। उदक् च विपाशः (अ० ४।२।७४) इति सूत्रमत्र निदर्शनरूपेणोपस्थापयितुम् अलम्।

पुनरपीह शङ्का जागर्त्ति–यदि तावदुदीच्या विद्वांसः प्राच्य-देश-नगरादिवाचिनः शब्दान् अज्ञासिषुः तर्हि शुक्लयजुर्वेदमप्यवश्यमेव जानीयुः। पुनः पाणिनिः शुक्लयजुर्वेदात् स्वल्पमपि नोद्धृतबान् इत्यत्र को हेतुः? अत्रोच्यते—कृष्णयजुर्वेदेन सह पाणिनेर्घनिष्ठः सम्बन्ध आसीद् इति पाणिनीयतन्त्रे संस्कारार्थम् उद्धृतैर्विशिष्टैः शब्दैः सुव्यज्यते। तथा हि—

(१) छन्दसि पुनर्वस्वोरेकवचनम् (अ० १।२।६१) इति विहितं पुनर्वसुशब्दस्यैकवचनान्तं द्विवचनान्तं च रूपं विशेषतः कृष्णयजुर्वेद एवोपलभ्यते, न शुक्लयजुर्वेदे। तत्र मैत्रायणीय-काठकसंहितयोरेकवचनान्तम् एव, तैत्तिरीयसंहितायां तु वहुवचनान्तमेवेति व्यवस्थितो विकल्पः।

(२) हेमन्तशिशिरावहोरात्रे च छन्दसि (अ० २।४।२८) इति सूत्रे प्रयुक्तो नपुंसकलिङ्गः शिशिरशब्दः कृष्णयजुर्वेदे सर्वत्र तथैव श्रूयते, आद्युदात्तश्च।

(३) छन्दसि निष्टर्क्य···(अ० ३।१।१२३) इत्यत्र निपातितः स्तर्याशब्दः कृष्णयजुर्वेद एवोपलभ्यते, तत्र चापि सकृदेवेति पूर्वं निर्दशितम्।

(४) कृष्णयजुर्वेदेन सह पाणिनेर्घनिष्ठसम्बन्धम् अभिसमीक्ष्यैव थीमेमहोदयः—साम्प्रतिकवैदिकग्रन्थेष्वविद्यमानानि पाणिनीयसूत्राणां छान्दसोदाहरणानि कस्याश्चित् कृष्णयजुर्वेदीयाया लुप्तशाखाया उद्धृतानि स्युः[1]– इति निष्कर्षं व्यजिज्ञपत्।

तदेवं कल्प्यते—कृष्णयजुर्वेदेन प्रभावितत्वात् स्वयं वा कृष्णयजुर्वेदित्वात् पाणिनिः कृष्णयजुर्वेदीयानामेव शाखानां यजुष्ट्वं स्वीचकार, न शुक्लयजुर्वेदीयानाम् इति। अतो जानतापि तेन ततो न किमप्युद्धृतम्।

१. पाणिनि एण्ड दि वेद, पृ० ६४, ६५ ॥

इत्थं च यः पाणिनिः शुक्लयजुर्वेदाद् न किमप्युज्जहार, स कात्यायनीयप्रातिशाख्याद् योगान् योगांशान् वोद्धरिष्यतीति नास्ति सम्भवः[1]। अतः प्रातिशाख्याकारः कात्यायन एव पाणिनिम् उपजीवति, न तु पाणिनिः प्रातिशाख्यकृत्कात्यायनम् इति निश्चीयते। तथोरीकृते चेदानीं प्रातिशाख्यकार-वार्त्तिककारयोः कात्यायनयोरैक्येऽपि न क्षतिः। एतच्च प्रातिशाख्यसूत्राणां वार्त्तिकैः सह तुलनया सुतरां स्पष्टीभवेद् इति सा प्रस्तूयते।

## ७. ५. प्रातिशाख्यकार-वार्त्तिककारयोः कात्यायनयोरैक्यम्—

अनेकं वाजसनेयिप्रातिशाख्यसूत्रं कात्यायनीयवार्त्तिकैः सह संवदन्ते, क्वचिद् रचनापि तुल्यैव दृश्यते, केषाञ्चिच्च वार्त्तिकसदृशानां वाजसनेयिप्रातिशाख्यसूत्राणाम् उदाहरणानि वाजसनेयिसंहितासु नोपलभ्यन्ते। तदत्र केचन वाजसनेयिप्रातिशाख्ययोगाः कात्ययनीयवार्त्तिकैः सह तुलनायै समुपस्थाप्यन्ते—

—:०:—

१. पाणिनि एण्ड दि वेद, पृ० ९६॥

| वाजसनेयिप्रातिशाख्ये | कात्यायनीयवार्त्तिकपाठे |
|---|---|
| (१) कारेण च (१।३७) | वर्णात् कारः (महा० ३।३।१०८ वा० ३) |
| (२) र एफेन च (१।३९) | राद् इफः (महा० ३।३।१०८ वा० ४) |
| (३) समानस्थानकरणास्यप्रयत्नः सवर्णः (१।४३) | सिद्धन्त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् (महा० १।१।९ वा० २) |
| (४) लुङ् मुदि जित्परे (३।१३) | वा शर्प्रकरणे खर्परे लोपः (महा० ८।३।३६ वा० १) |
| (५) उकारं दुर्दे (३।४२)<br>(६) नाशे च (३।४३) | दुरो दाशनाशशदभध्येषु (महा० ६।३।१०९ वा० ५) |
| (७) षड् दशदन्तयोःसंख्यावयोऽर्थयोश्च (३।४७) | षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च(महा० ६।३।१०९ वा०४) |
| (८) त आघाताद् अनाडम्बरात् (३।४८) | दारावाहनोऽण् अन्त्यस्य च टः संज्ञायाम्(महा० ३।२।४९वा०१) |
| (९) तद्बृहतौ करपत्योस्तलोपश्च (३।५२) | तद् बृहत्योः करपत्योश्चोरदेवतयोः सुट् तलोपश्च (महा० ६।१।१५७ वा०१)[1] |
| (१०) ऋषरेभ्यो नकारो णकारं समानपदे (३।८५) | रषाभ्यां णत्वे ऋकारग्रहणम् (महा० ८।४।१ वा० १) |
| (११) अलोपो मांस्पचन्याः (४।४०) | पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् (महा० ६।१।६३ वा० १) |
| (१२) समुद्रस्येमंस्त्वेमंस्त्वोद्मन्निति च (४।५४) | एमन्नादिषु छन्दसि (महा० (६।१।९४ वा० ६) |
| (१३) असस्थाने मुदि द्वितीयं शौनकस्य (४।१२०) | चयो द्वितीयाः पौष्करसादेः (महा० ८।४।४८ वा० ३) |
| (१४) ख्यातेः खयौ कशौ गार्ग्यः सख्योख्यमुख्यवर्जम् (४।१६५) | चक्षिङः क्शाञ्ख्याञौ (मा० २।४।५४ वा०१) |

१. पारस्करादिगणस्थसूत्रमिदम् अपाणिनीयम् इति कपिलदेवशास्त्री (गणपाठ एस्क्राइब्ड टु पाणिनि, पृ० ३६६) ॥

वाजसनेयिसूत्र-कात्यायनीयवार्त्तिकानाम् एतत् साम्यं यद्यपि क्वचिद् विषयसाम्यादपि भवितुमर्हति, तथापि बहुत्र रचनासाम्यात्; प्रातिशाख्यकारस्य च स्वक्षेत्रातिक्रमात्[1] प्रकारान्तरेणानुमितं प्रातिशाख्यकार-वार्त्तिककारकात्यायनयोरैक्यम् उपोद्बल्यते।

वार्त्तिककारः प्रातिशाख्यैरतितरां प्रभावित इति माधवकृष्णेन सूपपादितम्[2]। वेदपतिमिश्रः पुष्कलैः प्रमाणैर्वार्त्तिककारकात्यायनस्यैन्द्रसम्प्रदायानुयायित्वं प्रत्यपीपदत्।[3] प्रातिशाख्यानि ह्यैन्द्रसम्प्रदायेन सम्बद्धानीति बर्नेलः प्रतिपादयामास।[4] अतो वार्त्तिककारकात्यायनस्य प्रातिशाख्येन सह सम्बन्धः सुतराम् उपपन्नः। प्रदर्शितचरसाम्याच्च वार्त्तिककारस्य कात्यायनस्य वाजसनेयिप्रातिशाख्येन सह घनिष्ठः सम्बन्धः प्रतीयत एव। अतो द्वयोरैक्यं सुनिश्चितम् इति निष्कर्षः।

केचित् प्रातिशाख्यकार-वार्त्तिककारयोः कात्यायनयोरैक्यं नोरीकुर्वन्ति। तथा चावोचद् वेबरः—उभयत्र (वाजसनेयिप्रातिशाख्य-वार्त्तिकयोः) साक्षात् सम्पर्कबिन्दुषु सत्स्वपि (वा० प्रा० ३।१३, ४१, ४६) साक्षाद् विरोधाः (वा० प्रा० ३।८५; ४।११६) अपि विद्यन्ते। कात्यायनसदृशं नामसाम्यं सामान्येन पुरुषैक्यं कदापि साधयितुं नार्हति। द्वावपि तुल्यगोत्रौ तुल्यसम्प्रदायानुयायिनौ वा बभूवतुरित्यतोऽतिरिक्तं न किमप्यनेन सिद्ध्यति[5]—इति। तथैव माधवकृष्णोऽपि तदैक्यविरोधिनो उपन्यस्यति। तथा हि—

(१) वार्त्तिककारकात्यायनस्य समीक्षापद्धतिर्नितरां वैज्ञानिकी, रचनाकौशलं च सुमहत्। प्रातिशाख्यकारकात्यायनस्तस्य समताम् आप्तुं न पारयति। तद् यथा—प्रातिशाख्यस्य—उकारं दुर्दे, नाशे च, पुरो दाशे (वा० प्रा० ३।४२-४४) इति त्रिसूत्रीं वार्त्तिककारो

---

१. तथा चाहोवटः—एतच्च शिष्यव्युत्पादनार्थम्। न हि संहितायाम् उदाहरणम् अस्ति। (वा० प्रा० ३।४७ उ० भा०)।

२. पाणिनि, कात्यायन एण्ड पतञ्जलि, पृ० ९७-१०७॥

३. व्याकरणवार्त्तिक : एक समीक्षात्मक अध्ययन, पृ० ११९-१२४॥

४. ओन दि ऐन्द्र स्कूल, पृ० १९॥

५. पाणिनि, पृ० २०५, २०६॥

वैज्ञानिकपद्धत्या–दुरो दाशनाशदभध्येषु (महा० ६।३।१०९ वा० ५) इत्येकेनैव वार्त्तिकेन संक्षिपति।

(२) मांस्पचन्या इत्यादिषु प्रक्रियाभेदोऽपि द्वयोः स्पष्टं परिलक्ष्यते। प्रातिशाख्यकारो मांस्पचन्या इत्यत्राकारलोपम् (वा० प्रा० ४।४१), वार्त्तिककारस्तु मांसशब्दस्य मांस्-शब्दादेशम् (महा० ६।१।६३ वा० १) विधत्ते।

(३) ऐकारौकारयोरवयवयोर्मात्राविषये दर्शनभेदोऽपि द्वयोराचार्ययोर्लक्ष्यते। तद् यथा—ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्वोष्ठयोरुत्तरा (वा० प्रा० १।७३) इति प्रातिशाख्यकारः समप्रविभागम् अङ्गीचकार। वार्त्तिककारः पुनः—ऐचोश्चोत्तरभूयस्त्वात् (महा० १।१।४८ वा० ४) इत्युत्तरभागस्याधिक्यम् अभिमेने। एतैर्हेतुभिः—वार्त्तिककारकात्यायनो वाजसनेयिप्रातिशाख्यस्य प्रवक्ता नासीत्, किन्तु तस्य प्रकृष्टोऽध्येतानुयायी चासीद्–इति निष्कर्षः[1]।

अत्र समाधीयते—शास्त्रद्वयस्य प्रयोजनभेदाद् रचनाभेदो नास्वाभाविक इति सर्वसम्मतम्। वैज्ञानिकपद्धत्या विरचितस्य पाणिनीयतन्त्रस्य विवेचनमपि वैज्ञानिकरीत्या महता कौशलेन चैव सम्भवतीति कात्यायनस्तत्र तथा व्यवहरति। प्रातिशाख्येन तु स्वरसन्ध्यादीनां स्वरूपविषयाणां सुगमरीत्या बोधोऽभीष्ट इति तत्र व्याकरण इव कौशलप्रदर्शनस्य न चैवावसरो न चाप्यावश्यकतेति सारल्यमेवाश्रीयते। सुखावबोधमेवोद्दिश्य मांस्पचन्या इत्यादिषु लोपादीनि प्रक्रियन्ते, नादेशाः। यश्चापि दर्शनभेदो निदर्श्यते, सोऽपि पाक्षिकः। तथा हि सन्ध्यक्षरावयवविषये समप्रविभाग—पूर्वभूयस्त्वोत्तरभूयस्त्वानीति त्रीणि दर्शनानि महाभाष्यकारः—प्लुतावैच इदुतौ (अ० ८।२।१०६) इति सूत्रे प्रदर्शयामास। तत्र सूत्रप्रत्याख्याने प्रवृत्तः कात्यायनः—**पक्षान्तरैरपि परिहारा भवन्ति**[2]–इति न्यायमाश्रित्य–ऐचोश्चोत्तरभूयस्त्वात्[3]–इत्युत्तरभूयस्त्वपक्षाश्रयेण सूत्रं प्रत्याचचक्षे। महाभाष्यकारः–ऐचोश्चोत्तरभूयस्त्वाद्इत्यत्रोत्तरभूयस्त्वपक्षमङ्गीकृत्यापि —प्लुतावैच इदुतौ (अ० ८।२।१०६) इत्यत्र समप्रविभागपक्षम् उल्लिखितंन्यायेनैवाश्रित्य समप्रविभागपक्षम् आतिष्ठमानस्य वाडवस्य **सिद्धं त्विदुतोर्दीर्घ-**

१. पाणिनि, कात्यायन एण्ड पतञ्जलि पृ० १०७-१०९॥

२. महा० ऋलृक् सूत्रे॥ ३. महा० १।१।४८ वा० ४॥

**वचनात्**[1]–इति वार्त्तिकं सूत्रभेदभिया प्रत्याचचक्षे । इत्थं च वार्त्तिककारकात्यायन एव वाजसनेयिप्रातिशाख्यस्य प्रवक्तेति पक्षे न कापि विप्रतिपत्तिरिति निष्कर्षः । तथा च मैक्समूलरो जगाद—अस्य (वाजसनेयिप्रातिशाख्यस्य) प्रतिपादनपद्धतौ न किञ्चिदपि तद् विद्यते यत् प्रातिशाख्यकारकात्यायनवार्त्तिककारकात्यायनयोरैक्यप्रतिषेधे हेतुत्वेनोपयुज्येत[2]–इति ॥

## ७. ६. वार्त्तिकापेक्षया प्रातिशाख्यस्य पूर्ववृत्तित्वम्—

कात्यायनविरचितयोः प्रातिशाख्यवार्त्तिकयोः कतरा रचना पूर्वेति प्रश्न इदानीं समाधानम् अपेक्षते । प्रातिशाख्यसूत्राणां वार्त्तिकैः सह तुलनया स्पष्टम् एतद् अवभासते यत् कात्यायनः पूर्वं प्रातिशाख्यं प्रोवाच । कालान्तरे तु स पाणिनीयसूत्राणाम् उक्तानुक्तदुरुक्तचिन्तने[3] प्रावर्त्तत, तत्फलमेव च वार्त्तिकपाठः । कात्यायनस्येयं कृतिः प्रातिशाख्यापेक्षया सर्वथा श्रेयसीति कैश्चिन्निदर्शनैः स्पष्टीक्रियते—

(१) उकारं दुर्दे, नाशे च, पुरो दाशे (वा० प्रा० ३।४२-४४) इति प्रातिशाख्यस्था त्रिसूत्री वार्त्तिकपाठे एकत्र ग्रथिता–दुरो दाशनाशदभध्येषु (महा० ६।३।१०९ वा० ५) इति ।

(२) समुद्रस्येमंस्त्वेमंस्त्वोद्मन्निति च (वा० प्रा० ४।५४) इति प्रातिशाख्यसूत्रम् एमन्नादिषु छन्दसि (महा० ६।१।९४ वा० ६) इति वार्त्तिकेन संस्कृतम्

(३) थीमेमहोदयस्तुलनात्मकरूपेण प्रस्तौति–तुल्यास्यप्रयत्नं सवर्णम् (अ० १।१।९) इति पाणिनीयसूत्रम् अल्पाक्षरं सदपि न स्पष्टम् । समानस्थानकरणास्यप्रयत्नः सवर्णः (वा० प्रा० १।४३) इति कात्यायनीयं सूत्रम् अनल्पाक्षरं सदपि स्पष्टम् । सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् (महा० १।१।९ वा० २) इति वार्त्तिके प्रदर्शितं न्यासान्तरम् अल्पाक्षरं च स्पष्टं च[4]–इति ।

(४) किञ्च—स्वरसंस्कारयोश्छन्दसि नियमः, लौकिकानामर्थपूर्वकत्वात्, न समत्वात्, स्याद्वाम्नायधर्मित्वाच्छन्दसि नियमः (वा०

---

१. महा० ८।२।१०६ वा० ३ ॥ २. हि० सं० लि०, पृ० १३८ ॥

३. उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्त्तते ।
तं ग्रन्थं वार्त्तिकं प्राहुर्वार्त्तिकज्ञा मनीषिणः ॥ (पराशरोपपुराणे सप्तमेऽध्याये) ॥ ४. पाणिनि एण्ड दि वेद, पृ० ९३ ॥

प्रा० १।१-४) इतीमानि प्रातिशाख्यसूत्राण्येव परिष्कृतरूपेण पस्पशाह्निके-सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु-इति प्रथमे वार्त्तिके विन्यस्तानीति प्रतीयते।

उल्लिखिता हेतवः प्रातिशाख्यसूत्रापेक्षया वार्त्तिकानां प्रौढत्वं द्योतयन्ति। तस्मात् प्रातिशाख्यप्रवचनानन्तरं वार्त्तिकानि रचयामास कात्यायन इति निष्कर्षः।

## ७. ७. वाजसनेयिप्रातिशाख्यस्य पाणिनीयतन्त्रपरिशिष्टरूपत्वम्—

वाजसनेयिप्रातिशाख्यकारः कात्यायन एव वार्त्तिककारः, स च पूर्वं प्रातिशाख्यं प्रोवाच, ततः पाणिनीयतन्त्रे वार्त्तिकानि रचयामासेति युक्तियुक्तं मतम् अभ्युपगच्छन्नपि[1] गोल्डस्टूकरः पाणिनिकात्यायनयोः पारस्परिकं सम्बन्धं वर्णयन्नाह—

(१) पाणिनीयतन्त्रे वार्त्तिकलेखनस्य कात्यायनाभिप्रायः पाणिनेर्दोषाणाम् आविष्करणम् एवासीद्, न तु पाणिनीयसूत्राणां युक्तत्वप्रतिपादनं रक्षणं च। एतच्च स मनोहृत्य चकारेति तद्ग्रन्थम् अधीयानः सुतरां निश्चिनुयात्। संक्षेपतः कात्यायनो न हि पाणिनेः प्रशंसकः सुहृद् वा, अपि तु प्रतिपक्षी, प्रायेण चान्याय्यः प्रतिपक्षी[2]—इति।

(२) तस्य वाजसनेयिप्रातिशाख्यप्रणयनस्य द्वे प्रयोजने आस्ताम्—वैदिकशास्त्रत्वम्, पाणिनीयतन्त्रसमीक्षणं च[3]—इति।

गोल्डस्टुकरात् पश्चाद्वर्त्तिनो विद्वांसोऽपि प्रायस्तद्वर्णितं पाणिनिकात्यायनयोरभिसम्बन्धम् एव स्वीचक्रुः।[4] गोल्डस्टुकरस्य मतस्याधारः—सूत्रेऽनुक्तदुरुक्तचिन्ताकरत्वं वार्त्तिकत्वम्[5]—इति नागेशोद्धृतं वार्त्तिकलक्षणम् आसीत्[6]।

---

१. पाणिनि पृ० २१८, २२४, २२५॥

२. पाणिनि पृ० १३२॥ ३. पाणिनि पृ० २१८॥

४. वेदपतिमिश्रः व्याकरणवार्त्तिक : एकसमीक्षात्मक अध्ययन, पृ० ३८; ३९॥ ५. 'सिद्धे शब्दार्थसम्बन्ध' इति वार्त्तिके उद्योतः॥

६. पाणिनि पृ० १३२॥

सूत्रेऽनुक्तदुरुक्तचिन्ता रचनात्मकदृष्ट्या वा शक्यते कर्तुं ध्वंसात्मकदृष्ट्या वा। तत्र गोल्डस्टुकरः कात्यायनं पाणिनेर्ध्वंसात्मकदृष्ट्या समालोचकं प्रतिपेदे। तस्य विप्रतिपत्तेः कारणं कीलहार्न आविरकरोत्–पाणिनीयसूत्र–कात्यायनीयवार्त्तिकानि प्रथमतः कलकत्तासंस्करणाद् यूरोपीयविद्वद्भिः समधिगतानि। तत्र च प्रायेण पूर्वपक्षवार्त्तिकान्येव संकलितानि, न सिद्धान्तवार्त्तिकानि। तादृशसंकलनोपयोगाद् गोल्डस्टुकरस्य निष्कर्षो नास्वाभाविक[1]–इति। वेबर-बर्नेल–प्रभृतयोऽपि गोल्डस्टुकरमतम् एव श्रद्दधिरे।[2] कैश्चित्तु कथासरित्सागरे वर्णितः पाणिनि–कात्यायनयोः शास्त्रार्थोऽपि प्रमाणत्वेनाभ्युपगतः[3]। एतच्च वार्त्तं, कविकल्पनाप्रसूतत्वात्।

महाभाष्ये कृतभूरिश्रमः कीलहार्नो गोल्डस्टुकरप्रभृतिभिरभिमतं पाणिनिकात्यायनयोरभिसम्बन्धं नाङ्गीचकार। स हि प्राह–कात्यायनस्य वार्त्तिकरचनाप्रयोजनं न पाणिनेर्दोषाविष्करणम्,यतो हि स तस्य सूत्राणां न्याय्यत्वम् अपि तथैव प्रतिपादयति यथा सदोषत्वम्। कात्यायनः पाणिनेरन्याय्यः प्रतिपक्षी–इति कथनं तु दूरं तिष्ठतु, स खलु पाणिनेरनुयायी न्याय्यप्रशंसकश्चोच्येत। स निष्पक्षभावेन स्वाचार्यसूत्राणि परीक्षते,उद्भाविताः सम्भवोद्भवा वा शङ्का विभावयति, सदा पाणिनीयपक्षरक्षण औचित्यप्रदर्शने चोद्यतस्तिष्ठति, मार्गान्तरासम्भवे च पाणिनीयसूत्राणि संस्करोति प्रतिब्रूते वा[4]–इति।

वस्तुतो गोल्डस्टुकरो वार्त्तिकस्य स्वरूपं प्रयोजनं च कलकत्तामुद्रितभ्रष्टसंस्करणस्योपयोगवशाद् न सम्यग् अवाबुद्ध। कीलहार्नो वार्त्तिकस्य स्वरूपं प्रयोजनं चेत्थम् उपस्थापयामास–पाणिनीयसूत्रेषु सम्भवोद्भवानाम् आक्षेपाणां निष्पक्षं विवेचनम् इत्यतो व्यतिरिक्तं वार्त्तिकप्रयोजनं नास्ति किञ्चित्। तच्च विवेचनं द्विविधम्—निराधाराक्षेपाद् रक्षणपूर्वकं पाणिनीयसूत्रौचित्यप्रतिपादनं, तदसम्भवे च पाणिनीयसूत्राणां संशोधनं, प्रत्याख्यानं, परिवर्धनं च। सूत्रेऽनुक्तदुरुक्तचिन्ताकरत्वं वार्त्तिकत्वम् इति नागेशोद्धृतस्य वार्त्तिकलक्षणस्य

---

१. कात्यायन एण्ड पतञ्जलि, पृ० ५० ॥
२. कात्यायन एण्ड पतञ्जलि, पृ० ५ ॥
३. पाणिनिपरिचयः, पृ० ३१ ॥
४. कात्यायन एण्ड पतञ्जलि, पृ० ४७ ॥

खल्वप्येष एव वास्तविकोऽभिप्रायः[1]—इति । कात्यायनः सर्वथाऽनुकूलदृष्ट्यैव पाणिनीयसूत्राणि विवेचयामास, न प्रतिकूलदृष्ट्येति तस्य चरमवार्त्तिकेन सुतरां सिध्यचति। तथा हि—एकशेष-निर्देशाद् वा स्वरभिन्नानां भगवतः पाणिनेः सिद्धम्[2]–इति वार्त्तिके पाणिनिशब्दं भगवच्छब्देन विशिषतः कात्यायनस्य पाणिनिं प्रति भक्त्यतिरेकोऽतितरां प्रकाशते ।

वाजसनेयिसंहिताविषयकान् उच्चारण–स्वर–संस्कारान् विदधत् कात्यायनः पाणिनीयतन्त्रस्यापि समालोचनां यथावसरं चकारेति गोल्डस्टुकरस्य निष्कर्षेऽपि प्रमाणाभावाद् आपातरमणीयः । न खल्वपि प्रातिशाख्ये पाणिनीयशब्दानाम् अनुवादः केवलं समालोचनाटिप्पणप्रकाशनार्थं[3] इति युज्यते वक्तुम्, तादृशपद्धत्याः स्ववक्तव्यस्य स्पष्टप्रतिपादनार्थत्वात् । कात्यायनः स्पष्टप्रतिपत्तये शब्दलाघवमपि परित्यज्यपाणिनीयसूत्राणां संस्कारेण स्वाभिप्रायं प्रकाशयतीति प्रदर्शितचरम् । ततोऽय निष्कर्षः—वाजसनेयिसंहिताविषयका उच्चारण–स्वर–संस्काराः पाणिनीयतन्त्रस्य परिधौ न प्रविष्टा इत्यभिसमीक्ष्य कात्यायनः पाणिनीयतन्त्रस्य परिशिष्टरूपं वाजसनेयिप्रातिशाख्यं प्रोवाच । तथा चाह थीमेमहाशयः—वाजसनेयिप्रातिशाख्यं पाणिनीयकृतेः पूरकम् इव लक्ष्यते, यत् केषाञ्चन स्वल्पानाम् अभावानां पूर्त्ति, विशेषतः पाणिनीयतन्त्रेऽसमावेश्यस्य व्याकरणकृत्यस्य वाजसनेयिसंहितां प्रति विनियोगं प्रयोजयति[4]–इति ।

—:०:—

---

१. कात्यायन एण्ड पतञ्जलि, पृ० ४८ ॥

२. महा० ८।४।६८ वा० ४ ॥ ३. पाणिनि, पृ० २१९ ॥

४. ऐन ऐक्सेसरी टु पाणिनिज़ वर्क, मेण्ट टु फिल अप सम माइनर गैप्स एण्ड, चीफ़ली, टु ऐप्लाइ ग्रामेटिकल डिस्क्रिप्शन टु दि वाजसनेयि-संहिता, व्हिच डिड नोट ऐण्टर दि स्कोप आफ़ पाणिनिज़ ग्रामर। पाणिनि एण्ड दि वेद, पृ० ९७ ।

# परिशिष्टम्

## वाजसनेयिप्रातिशाख्यवचनानां पाणिनीयतन्त्रस्थवचनैः सह तुलना

| | |
|---|---|
| अन्त्याद् वर्णात् पूर्वं उपधा (१।३५) | अलो ऽन्त्यात् पूर्वं उपधा (१।१।६५) |
| कारेण च (१।३७) | वर्णात् कारः(३।३।१०८ वा० ३) |
| र एफेन च (१।३९) | राद् इफः (३।३।१०८ वा० ४) |
| समानस्थानकरणास्यप्रयत्नः सवर्णः (१।४३) | तुल्यास्यप्रयत्नं सवर्णम् (१।१।९) |
| अनन्तरं संयोगः (१।४८) | हलोऽनन्तराः संयोगः (१।१।७) |
| जित् (१।५०, ५१) | खर् प्रत्याहारः |
| मुद् (१।५२) | शर् प्रत्याहारः |
| घि (१।५३) | हश् प्रत्याहारः |
| सोष्माणः (१।५४) | महाप्राणाः |
| अमात्रस्वरो ह्रस्वः (१।५५) | ऊकालोऽज्झ्रस्वदीर्घप्लुतः (१।२।२७) |
| मात्रा च (१।५६) | ,, ,, ,, |
| द्विस्तावान् दीर्घः (१।५७) | ,, ,, ,, |
| प्लुतस्त्रिः (१।५८) | ,, ,, ,, |
| ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् (१।६३) | अणुदित् सवर्णस्य चाप्रत्ययः (१।१।६९) |
| प्रथमग्रहणे वर्गम् (१।६४) | ,, ,, ,, |
| ऋऌक्कौ जिह्वामूले (१।६५) | ऋटुरषा मूर्द्धन्याः(शिक्षा, न्यास, पदमंजरी) |
| इचशेयास्तालो (१।६६) | अकुहविसर्जनीयाः कण्ठ्या ,, |
| | इचुयशास्तालव्याः ,, |
| षटो मूर्धनि (१।६७) | ऋटुरषा मूर्द्धन्याः ,, |
| रो दन्तमूले (१।६८) | ,, ,, ,, |

| | |
|---|---|
| लृलसिता दन्ते (१।६६) | लृतुलसा दन्त्याः(शि० न्या० पद०) |
| उवोऽ्प्या ओष्ठे (१।७०) | उपूपध्मानीया ओष्ठ्याः " |
| अहविसर्जनीयाः कण्ठे (१।७१) | अकुहविसर्जनीयाः कण्ठ्याः " |
| सवर्णवच्च (१।७२) | अकारस्य विवृतोपदेशः आकार-ग्रहणार्थः (महा० अइउण् वा०१) |
| मुखनासिकाकरणोऽनुनासिकः (१।७५) | मुखनासिकावचनोऽनुनासिकः (१।१।८) |
| प्रगृह्यम् (१।९२) | ईदूदेद्द्विवचनं प्रगृह्यम्(१।१।११) |
| एकारेकारोकारा द्विवचनान्ताः (१।९३) | |
| ओकारश्च पदान्तेऽनवग्रहः (१।९४) | ओत् (१।१।१५)<br>सम्बुद्धौ शाकल्यस्येतावनार्षे (१।१।१६) |
| उकारोऽपृक्तः (१।९५) | उञ ऊँ (अ० १।१।१७) |
| चमू अस्मे त्वे (१।९६) | ईदूतौ च सप्तम्यर्थे, शे (अ० १।१।१९, १२) |
| मे उदात्तम् (१।९७) | शे (महा० १।१।१३) |
| अमी पदम् (१।९८) | अदसो मात् (महा० १।१।१२) |
| व्यज्जनं स्वरेण सस्वरम् (१।१०७) | व्यञ्जनानि पुनर्नटभार्यावद् भवन्ति (महा० ६।१।२) |
| उच्चैरुदात्तः (१।१०८) | उच्चैरुदात्तः (१।२।२९) |
| नीचैरनुदात्तः (१।१०९) | नीचैरनुदात्तः (१।२।३०) |
| उभयवान् स्वरितः (१।११०) | समाहारः स्वरितः (१।२।३१) |
| सप्त (१।१२७) | सप्त स्वरा भवन्ति— (महा० १।२।३३) |
| त्रीम् (१।१२८) | त्रैस्वर्येणाधीमहे— (महा० १।२।३१) |
| एकम् (१।१३०) | |
| सामजपन्यूङ्खवर्जम् (१।१३१) | यज्ञकर्मण्यजपन्यूङ्खसामसु (१।२।३४) |
| तस्मिन्निति निर्दिष्टे पूर्वस्य (१।१३४) | तस्मिन्निति निर्दिष्टे पूर्वस्य (१।१।६६) |

| | |
|---|---|
| तस्मादित्युत्तरस्यादेः (१।१३५) | तस्मादित्युत्तरस्य (१।१।६७), आदेः परस्य (१।१।५४) |
| षष्ठी स्थानेयोगा (१।१३६) | षष्ठी स्थानेयोगा (१।१।४९) |
| तेनेत्यागमः (१।१३७) | आद्यन्तौ टकितौ (१।१।४६) |
| अन्तरेण पर्वणी (१।१३८) | मिदचोऽन्त्यात् परः (१।१।४७) |
| पर एकस्मात् (१।१३९) | |
| वर्णस्यादर्शनं लोपः (१।१।४१) | अदर्शनं लोपः (१।१।६०) |
| विकारी यथासन्नम् (१।१४२) | स्थानेऽन्तरतमः (१।१।५०) |
| संख्यातानुदेशो यथासंख्यम् (१।१४३) | यथासंख्यमनुदेशः समानाम् (१।३।१०) |
| द्विरुक्तमाम्रेडितं पदम् (१।१४६) | (सर्वस्य द्वे) तस्य परमाम्रेडितम् (८।१।२) |
| एकवर्णः पदमपृक्तम् (१।१५१) | अपृक्त एकाल्प्रत्ययः (१।२।४१) |
| स एवादिरन्तश्च (१।१५२) | आद्यन्तवदेकस्मिन् (१।१।२१) |
| वर्णानामेकप्राणयोगःसंहिता (१।१५८) | परः सन्निकर्षः संहिता (१।४।१०९) |
| विप्रतिषेध उत्तरं बलवदलोपे (१।१५९) | विप्रतिषेधे परं कार्यम् (१।४।२) |
| स्वरितवर्जमेकोदात्तं पदम् (२।१) | अनुदात्तं पदमेकवर्जम् (६।१।१५८) |
| अनुदात्तम् । नो नौ मे मदर्थे त्रिद्व्येकेषु । मा च । वो वान्ते त्वदर्थे । त्वा च (२।३-६) | युष्मदस्मदोः षष्ठीचतुर्थीद्वितीया-स्थयोर्वान्नावौ । बहुवचनस्य वस्नसौ । तेमयावेकवचनस्य । त्वामौ द्वितीयायाः (८।१।२०-२३) |
| पूर्ववाननुदेशः (२।७) | इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ । एतदस्त्रतसोस्त्रतसौ चानुदात्तौ । द्वितीयाटौस्स्वेन (२।४।३२-३४) |
| यथा गृभोभुवोऽग्निभ्यः (२।९) | यथेति पादान्ते (फिट् ८५) |
| वाच…निपाताश्चेत् (२।१६) | चादयोऽनुदात्ताः (फिट् ८४) |

| | |
|---|---|
| पूर्वपदमामन्त्रितमनानार्थेऽपादादौ (२।१७) | आमन्त्रितस्य च (८।।१९) |
| तेनानन्तरा षष्ठी एकपदवत् (२।१८) | सुबामन्त्रिते पराङ्गवत् स्वरे (२।१।२) |
| | आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यामन्त्रित-कारकवचनम् (महा० २।१।२ वा० १) |
| | परमपि च्छन्दसि(२।१।२ वा० ६) |
| आमन्त्रितं च (२।२४) | आमन्त्रितस्य च (६।१।१९८) |
| कृष्णो मृगसंयोगे (२।२५) | कृष्णस्यामृगाख्याचेत् (फिट् ११) |
| सर्व…नमः (२।३९) | सर्वस्य सुपि (६।१।१९१) |
| रायोऽपोषे (२।४२) | ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः (६।१।१७१) |
| बृहस्पतिर्वनस्पति…(२।४७) | उभे वनस्पत्यादिषु युगपत् (६।२।१४०) |
| देवताद्वन्द्वानि चानामन्त्रितानि (२।४८) | देवताद्वन्द्वे च (६।२।१४१) |
| आसीदिति चोत्तरं विचारे(२।५३) | उपरिस्विदासीदिति च (८।२।१०२) |
| संहितायाम् (३।१) | संहितायाम् (६।१।७२ ॥ ६।३।११४ ॥ ८।२।१०८) |
| अर्थः पदम् (३।२) | सुप्तिङन्तं पदम् (१।४।१४) |
| न परकालः पूर्वकाले पुनः (३।४) | पूर्वत्रासिद्धम् (८।२।१) |
| ह्यन्तराः काला (३।५) | |
| चछयोः शम् (३।७) | स्तोः श्चुना श्चुः (८।४।४०) |
| तथयोः सम् (३।८) | विसर्जनीयस्य सः (८।३।३४) |
| प्रत्ययसवर्णं मुदि शाकटायनः (३।९) | वा शरि (८।३।३६) |
| अविकारं शाकल्यः शषसेषु (३।१०) | |

| | |
|---|---|
| प्रकृत्या कखयोः पफयोश्च (३।११) | कुप्वोः कः पौ च (८।३।३७) |
| जिह्वामूलीयोपध्मानीयौ शाकटायनः (३।१२) | |
| लुङ् मुदि जित्परे (३।१३) | वा शर्प्रकरणे खर्परे लोपः (महा० ८।३।३६ वा० १) |
| उपवसने पीवः (३।१४) | पीवोपवसनादीनां छन्दसि लोपः (महा० ६।३।१०६) |
| स ओषधीमयोः । व्यञ्जने च । स्य एष च (३।१५-१७) | एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । स्यश्छन्दसि बहुलम् । सोऽचि लोपे चेत् पादपूरणम् (६।१।१३२-१३४) |
| निशब्दो बहुलम् (३।१८) | शेश्छन्दसि बहुलम् (६।१।७०) |
| ककारपकारयोः सकारम् (३।२१) | सोऽपदादौ (८।३।३८) |
| भाव्युपधः षकारम् (३।२२) | इणः षः (८।३।३९) |
| आविर्निरिडइडाया···(३।२३-२७) | इदुदुपधस्य चाप्रत्ययस्य । षष्ठ्याः पतिपुत्र···। इडाया वा (८।३।४१, ५३,५४) |
| अध्वनो—पातौ (३।२८) | पातौ च बहुलम् (८।३।५२) |
| परावसाने (३।३१) | पञ्चम्याः परावध्यर्थे (८।३।५२) |
| कविष्करत्कृधिषु (३।३२) | कःकरत्करतिकृधि ··(८।३।५०) |
| अहर्पतौ रेफम् (३।३९) | अहरादीनां पत्यादिषूपसंख्यानम् (महा० ८।२।७० वा० २) |
| उकारं दुर्दे । नाशे च(३।४२,४३) | दुरोदाशनाशदभध्येषु (६।३।१०९ वा० ५) |
| पुरो दाशे (३।४४) | मन्त्रे श्वेतवहोक्थशस्पुरोडाशो-ण्विन् (३।२।७१) |
| अनसो वाहौ सकारो डकारम् (३।४५) | अनसि वहेः क्विबनसश्च डः (दश० उ० ६।१०७) |
| षड् दशदन्तयोः संख्यावयोऽर्थयोश्च (३।४७) | षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च (६।३।१०९ वा) |

| | |
|---|---|
| त आघादनाडम्बरात् (३।४८) | दारावाहनोऽणन्त्यस्य च टः संज्ञायाम् (महा० ३।२।४९ वा० १) |
| पत्यौ च सकारेण। ऋतावरौ च पतिपरयोः (३।५०, ५१) | पारस्करप्रभृतीनि च संज्ञायाम् (६।१।१५७) |
| तद्बृहतौ करपत्योस्तलोपश्च (३।५२) | तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च (६।१।१३७ गणसूत्रम्) |
| परि कृते षकारेण (३।५३) | सम्पर्युपेभ्यः करोतौ भूषणे (६।१।१३७) |
| चन्द्रे सु शकारेण (३।५४) | ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे (६।१।१५१) |
| भाविभ्यः सः षं समानपदे(३।५६) | अपदान्तस्य मूर्द्धन्यः। इण्कोः |
| अनुस्वाराच्च तत्पूर्वात् (३।५७) | नुम्विसर्जनीयशर्व्यवायेऽपि। आदेशप्रत्यययोः |
| करेफाभ्यां च (३।५८) | (८।३।५५, ५७-५९) |
| ने सीदतेः। ससाद च (३।५९, ६०) | सदिरप्रतेः (८।३।६६) |
| ओकारात् सु। ओश्चापृक्तात्। अभेश्च (३।६१-६३) | सुञः (८।३।१०७) |
| परेःसिञ्चतेः। अभेश्च। अव्यवहितोऽपि (३।६४-६६) | उपसर्गात् सुनोति···। प्राक् सितादड्व्यवायेऽपि(८।३।६५,६३) |
| ततक्षो (३।७१, ७४, ७६-७९) | युष्मत्तत्ततक्षुष्वन्तःपादम्। यजुष्येकेषाम् (८।३।१०३, १०४) |
| सहेः पृतनायाः (३।७५) | सहेः पृतनर्त्ताभ्यां च(८।३।१०९) |
| षात् तथौ मूर्द्धन्यम् (३।८०) | ष्टुना ष्टुः (८।४।४१) |
| (प्रकृत्या ३।८१) ऋकाररेफारुदयः (३।८३) | न रपरसृपि···(८।३।११०) |
| ऋषरेभ्यो नकारो णकारं समानपदे (३।८५) | रषाभ्यां नो णः समानपदे (८।४।१) |
| | रषाभ्यां णत्वे ऋकारग्रहणम् (८।४।१ वा०) |
| स्वरयवहकपैश्च (३।८६) | अट्कुप्वाङ्नुम्व्यवायेऽपि (८।४।२ |
| प्रकृत्या पदान्तीयः (३।९०) | पदान्तस्य (८।४।३७) |

| | |
|---|---|
| (दीर्घम्) विश्व सहभुवपुषवसुषु (३।१०२) | विश्वस्य वसुराटोः (६।३।१२८) |
| नरहामित्रेषु च (३।१०३) | नरे संज्ञयाम् । मित्रे चर्षौ (६।३।१२९, १३०) |
| अपृक्तः सौ (३।१११) | इकः सुञि (६।३।१३४) |
| रथि तकारनकारयोः (३।११२) | ईद् रथिनः (८।२।१७ वा०) छन्दसीवनिपौ (५।२।१०९ वा०) |
| विश्वदेव्यसोमौ वत्याम्(३।११८) | मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ (६।३।१३२) |
| पूर्वो द्वन्द्वेष्ववायुषु (३।१२८) | देवताद्वन्द्वे च (६।३।२६), ईदग्नेः सोमवरुणयोः (६।३।२७), देवताद्वन्द्वे उभयत्र वायोः प्रतिषेधः (६।३।२६ वा०) |
| अनुनासिकमुपधा प्रागन्तस्थायाः । स्वर औपशिविः । अनुस्वारेण व्यञ्जने(३।१३१-१३३) | अत्रानुनासिकः पूर्वस्य तु वा । आतोऽटि नित्यम् । अनुनासिकाद् परोऽनुस्वारः । (८।३।-२४) |
| नुः । चच्छयोः शम् । तथयोः सम् (३।१३४-३६) | नश्छव्यप्रशान् (८।३।७) |
| नॄन् पकारे विसर्जनीयम्(३।१४१) | नॄन् पे (८।३।१०) |
| शत्रून् परिधीन् ऋतून् वनस्पतीन् स्वरे रेफम् (३।१४२) | दीर्घादटि समानपादे (८।३।९) |
| आकारोपधो यकारम् (३।१४३) | भोभगो अघो अपूर्वस्य योऽशि (८।३।१७) |
| न तमे (३।१४४) | नादघस्य (८।२।१७) |
| अनुस्वारं रोष्मसु मकारः (४।१) | मोऽनुस्वारः (८।३।२३) |
| नुश्चान्तःपदे ऽरेफे(४।२) | नश्चापदान्तस्य झलि (८।३।२४) |
| प्रकृत्या सम्राट्सम्राजि (४।५) | मो राजि समः क्वौ (८।३।२५) |
| शं चे पकारादुकारोदयात् (४।६) | पुमः खय्यम्परे (८।३।६) |
| समन्तःपदे करखपफेष्वनूष्मपरेषु (४।७) | समः सुटि (८।३।५) |
| नुश्चाम्रेडिते (४।८) | कानाम्रेडिते (८।३।१२) |

| | |
|---|---|
| अन्तःस्थामन्तःस्थास्वनुनासिकां परसस्थानाम् (४।६) | अनुस्वारस्य ययि परसवर्णः (८।४।५८) |
| स्पर्शे परपञ्चमम् (४।११) | |
| तकारो ले लम् (४।१२) | तोर्लि (८।४।६०) |
| नुश्चानुनासिकम् (४।१३) | |
| ङनौ क्ताभ्यां सकारे। न दाल्भ्यस्य (४।१४,१५) | ङ्णोः कुक्टुक् शरि। नश्च (८।३।२८, ३०) |
| स्वरश्छकारे चकारेण सर्वत्र (४।२४) | छे च। दीर्घात् पदान्ताद् वा (६।१।७१, ७३) |
| भाव्युपधश्च रिद्विसर्जनीयः (४।३३) | रो रि (८।३।१४), ढ्रलोपे पूर्वस्य दीर्घोऽणः (६।३।१११) |
| रेफे लुप्यते दीर्घं चोपधा (४।३४) | |
| कण्ठ्यपूर्वो यकारमरिफितः (४।३६) | भो भगो अघो अपूर्वस्य योऽशि (८।३।१७) |
| लोपं घौ (४।३७) | हलि सर्वेषाम् (८।३।२२) |
| अलोपो मांस्पचन्याः (४।४०) | पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् (६।१।६३ वा०) |
| सर्वो अःकार ओकारम्। अकारे च (४।४१, ४२) | अतो रोरप्लुतादप्लुते। हशि च (६।१।११३, ११४) |
| स्वो रुहावहश्च रात्र्याम् (४।४४) | स्वरो रोहतौ छन्दसि (६।३।१०९ वा०) |
| | रुविधावह्नो रूपरात्रिरथन्तषूपसंख्यानम् (८।२।६८ वा०) |
| स्वरे भाव्यन्तःस्थाम् (४।४५) | इको यणचि (६।१।७७) |
| सन्ध्यक्षरमयवायावम् (४।४६) | एचोऽयवायावः (६।१।७८) |
| उदात्तस्यान्तःस्थीभावे स्वरितं परमनुदात्तम् (४।४७) | उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (८।२।४) |
| कण्ठ्य ऋकारे ह्रस्वम् (४।४८) | ऋत्यकः (६।१।१२८) |
| अथैकमुत्तरश्च (४।४९) | एकः पूर्वपरयोः (६।१।८४) |
| सि सवर्णे दीर्घम् (४।५०) | अकः सवर्णे दीर्घः (६।१।१०१) |
| कण्ठ्यादिवर्ण एकारम् (४।५२) | आद् गुणः (६।१।८७) |
| उवर्ण ओकारम् (४।५३) | |

| | |
|---|---|
| समुद्रस्येमंस्त्वेमंस्त्वोद्मन्निति च (४।५४) | एमन्नादिषु छन्दसि (६।१।९४वा०) |
| सन्ध्यक्षर ऐकारौकारौ (४।५६) | वृद्धिरेचि (६।१।८८) |
| वाहौ च स्वरभूते (४।५७) | एत्येधत्यूठ्सु (६।१।८९) |
| आरमृकारोऽपृक्तात् (४।५८) | वृद्धिरेचि (६।१।८८) |
| लृकारश्चाल्कारम् (४।५९) | |
| एदोद्भ्यां पूर्वमकारः (४।६०) | एङः पदान्तादति (६।१।१०९) |
| तौ चेदुदात्तावनुदात्ते स्वरितौ (४।६१) | स्वरितो वाऽनुदात्ते पदादौ (८।२।६) |
| व्यपरे च (४।७२) | नान्तः पादमव्यपरे (६।१।११८) |
| प्रकृतिभाव ऋक्षु (४।८०) | |
| जुषाणश्चानध्वनि (४।८१) | आपोजुषाणोवृष्णो० (६।१।११८) |
| ते चानुदात्तमनुदात्ते (४।८२) | अनुदात्ते च कुधपरे (६।१।१२०) |
| हेड आपो० (४।८३) | यजुष्युरः० (६।१।११७-१२०) |
| प्रगृह्यं स्वरे (४।८६) | प्लुतप्रगृह्या अचि नित्यम् (६।१।१२५) |
| उकारोऽपृक्तोऽस्पर्शात् (४।८९) | |
| प्लुतमितौ (४।९०) | प्लुतप्रगृह्या अचि नित्यम् (६।१।१२५) |
| ओकारश्च (४।९१) | ओत् । सम्बुद्धौ० (१।१।१५, १६) |
| उकारोऽपृक्तो दीर्घमनुनासिकम् (४।९२) | उञ ऊँ (१।१।१७) |
| इतेश्च परं पदं चर्चायाम् (४।९३) | |
| तकारवर्गश्चकारवर्गे चकारवर्गम् (४।९५) | स्तोः श्चुना श्चुः (८।४।४०) |
| शकरे च (४।९५) | |
| परश्चास्पर्शपरश्छम् (४।९६) | शश्छोऽटि (८।४।६३) छत्वममि (८।४।६३ वा०) |
| उदः स्तभाने लोपम् (४।९७) | उदः स्थास्तम्भोः पूर्वस्य (८।४।६१) |
| स्वरात् संयोगादिर्द्विरुच्यते सर्वत्र (४।९९) | अनचि च (८।४।४७) |
| परं तु रेफहकाराभ्याम्(४।१००) | अचो रहाभ्यां द्वे (८।४।४६) |

| | |
|---|---|
| ऊष्मान्तःस्थाभ्यश्च स्पर्शः (४।१०१) | द्विर्वचने यणो मयः । शरः खयः (८।४।४७ वा०) |
| ङ्नौ चेद् ध्रस्वपूर्वौ स्वरे पदान्तौ (४।१०६) | ङमो ह्रस्वादचि ङमुण् नित्यम् (८।३।३२) |
| स्पर्शोऽ पञ्चमः स्वरधौ तृतीयम् (४।११८) | झलां जशोऽन्ते(८।२।३९), झलां जश् झशि (८।४।५३) |
| जिति प्रथमम् (४।११९) | खरि च (८।४।५५) |
| असस्थाने मुदि द्वितीयं शौनकस्य (४।१२०) | चयो द्वितीयाः शरि पौष्करसादेः (८।४।४८ वा०) |
| पञ्चमे पञ्चमम् (४।१२१) | यरोऽनुनासिकेऽनुनासिको वा (८।४।४५) |
| हश्च तस्मात् पूर्वचतुर्थम् (४।१२२) | झयो होऽन्यतरस्याम्(८।४।६२) |
| यवयोः पदान्तयोः स्वरमध्ये लोपः (४।१२५) | लोपः शाकल्यस्य (८।३।१९) |
| ख्यातेः खयौ कशौ गार्ग्यः सख्योख्यमुख्यवर्जम् (४।१६५) | चक्षिङः क्शाञ्ख्याञौ (२।४।५४ वा०) |
| अनुदात्तमाख्यातमामन्त्रितवत् | तिङ्ङतिङः (८।१।२८) |
| उपसर्ग उपसर्गे (६।२) | गतिर्गतौ (८।१।७०) |
| आम्रेडिते चोत्तरः (६।३) | अनुदात्तं च (८।१।३) |
| कृदाख्यातयोश्चोदात्तयोः (६।४) | गतिकारकोपपदात् कृत् (६।२।१३९), अनुदात्तं पदमेकवर्जम् (६।१।१५८), तिङि चोदात्तवति(८।१।७१) |
| प्रकृत्याख्यातमाख्यातपूर्वम् (६।११) | तिङ्ङतिङः(८।१।२८) |
| उदात्ताच्चामन्त्रितादनन्तरम् (६।१२) | आमन्त्रितं पूर्वमविद्यमानवत् (८।१।७२) |
| यद्वृत्तोपपदाच्च (६।१४) | यद्वृत्तान्नित्यम् (८।१।६६) |
| हेश्च (६।१५) | (हि च) छन्दस्यनेकमपि साकाङ्क्षम् (८।१।३५) |
| उत्तरेऽपि (६।१६) | यद्धितुपरं छन्दसि (८।१।५६) |

| | |
|---|---|
| नेत् (६।१७) | निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण० (८।१।५६) |
| द्वयोः पूर्वं समुच्चये (६।१९) | चवायोगे प्रथमा (८।१।३०) |
| वा विचारणे (६।२०) | |
| अह विनियोगे (६।२१) | अहेति विनियोगे च (८।१।६१) |
| एवावधारणे (६।२२), उपपदाप्रयोगे च (६।२३) | चाहलोप एवेत्यवधारणम् (८।१।६२) |
| | चादिलोपे विभाषा (८।१।६३) |
| परोपापाव प्रतिपर्यन्वव्यत्यध्याङ् प्र सं निर्दरुन्नि वि स्वभि (६।२४) | उपसर्गाश्चाभिवर्जम् (फिट् ८१) |
| तत्समुदायोऽक्षरम् (८।५५) वर्णो वा (८।५६) | अक्षरं नक्षरं विद्याद् अश्नोतेर्वा सरोऽक्षरम्। वर्ण वाहुः पूर्वसूत्रे किमर्थमुपदिश्यते ॥ (महा० प्रत्याहाराह्निके) |
| एते पञ्चषष्टिवर्णा ब्रह्मराशिरात्मावाचः। यत्किञ्चिद्वाङ्मयं लोके सर्वत्र प्रयुज्यते। (८।३२, ३३) | वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्त्तते। तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते ॥ |
| | सोऽक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः। (महा० प्रत्याहाराह्निके) |
| अक्षरसमुदायः पदम् (८।५७) अक्षरं वा (८।५८) | सुप्तिङन्तं पदम् (१।४।१४) |

—:०:—

# सहायकग्रन्थसूची


१. अथर्ववेद-प्रातिशाख्यं सानुवादटिप्पणम्, डब्ल्यु० डी० व्हिटने । चौखम्बा वाराणसी, १९६२ ।

२. अथर्ववेदप्रातिशाख्यम्, सं० विश्वबन्धुविद्यार्थी शास्त्री, पंजाव यूनिवर्सिटी, १९२३

३. अनुवन्धाज़ आफ़ पाणिनि, जी० वी० देवस्थली, पूना यूनिवर्सिटी, १९६७

४. अमरकोशः सुधोपेतः, भानुजिदीक्षितः, निर्णयसागर प्रेस, वम्बई, १९१५

५. अष्टाध्यायी पाणिनीया, सं० ब्रह्मदत्तजिज्ञासु, रामलालकपूरट्रस्ट, वाराणसी १९५५ ।

६. ए हिस्टरी आफ़ एन्श्येण्ट संस्कृत लिटरेचर, मैक्समूलर, इलाहाबाद, १९२६

७. ए हिस्टरी आफ़ इण्डियन लिटरेचर, प्रथमभग, विण्टरनित्ज़ कलकत्ता यूनिवर्सिटी, १९२७ ।

८. आर्ष पाणिनीयं व्याकरणम्, हरिशंकरपाण्डेयः, यूनाइटेड प्रेस, पटना, १९३८

९. आश्वलायनश्रौतसूत्रम्, आनन्दाश्रम, पूना, १९१७ ।

१०. इण्डिया एज़ नोन टु पाणिनि, वा० श० अग्रवाल, लखनऊ यूनिवर्सिटी १९५३

११. उणादिसूत्रवृत्तिः, उज्ज्वलदत्तः, सं० जीवानन्दः, कलकत्ता, १८७३

१२. ऋक्तन्त्रप्रातिशाख्यम्, सूर्यकान्तः, लाहौर, १९३३ ।

१३. ऋग्वेदप्रातिशाख्यम् उवटभाष्योपेतम्, सं० मङ्गलदेवशास्त्री, इण्डियनप्रेस बनारस १९३१।

१४. ऋग्वेदभाष्यम, वेंकटमाधवः, लाहौर, १९२१ ।

१५. ” सायणः, पूना, १९३३ ।

१६. ” स्कन्दः, मद्रास, १९३५ ।

१७. ऋग्वेदसंहिता, स्वाध्यायमण्डल, औन्ध, १९४० ।

१८. ऋग्वेदानुक्रमणी, वेंकटमाधवः, स्वाध्यायमण्डल, औन्ध, १९९८ वि०
१९. ऐतरेयारण्यकम्, आनन्दाश्रम, पूना०, १८९८।
२०. आन दि ऐन्द्र स्कूल आफ़ संस्कृत ग्रामरियन्स, ए० सी० वर्नेल, मंगलोर, १८७५
२१. कात्यायन एण्ड पतञ्जलि, एफ० कीलहार्न, इण्डालाजिकल, बुक हाउस, वाराणसी १९६३।
२२. कात्यायन श्रौतसूत्रम्, सं० विद्याधरः, अच्युतग्रन्थमाला, काशी, १९८७ वि०।
२३. काशिका, तारायन्त्रालय, काशी
२४. क्रिटिकल स्टडीज इन दि फोनेटिक आब्जर्वेशन्स आफ इण्डियन ग्रामरियन्स, सिद्धेश्वरवर्मा, मुंशीराम मनोहर लाल, देहली, १९६१।
२५. क्रिटिकल स्टडीज आन कात्यायन शुक्लयजुर्वेद प्रातिशाख्य, वी० बेंकटरामशर्मा, मद्रास यूनिवर्सिटी, १९५३।
२६. गणपाठ एस्क्राइब्ड टु पाणिनि, कपिलदेव, कुरुक्षेत्र यूनिवर्सिटी, १९६७
२७. गणरत्नमहोदधिः, वर्धमानः, मोतीलाल बनारसीदास, दिल्ली, १९६३।
२८. गोपथब्राह्मणम्, सं० राजेन्द्रलालमित्रः, कलकत्ता, १८७२।
२९. चरणव्यूहपरिशिष्टसूत्रं महिदासभाष्योपेतम्, चौखम्बा, काशी, १९५९ वि०
३०. चान्द्रव्याकरणम्, चन्द्रगोमी, सं० क्षितीशचन्द्रचटर्जी, पूना १९५३।
३१. टैक्निकल टर्म्स एण्ड टैकनीक आफ संस्कृत ग्रामर, भाग १, के० सी० चटर्जी, कलकत्ता, १९४८।
३२. डिक्शनरी आफ संस्कृत ग्रामर, का० वा० अभ्यङ्कर, बडौदा, १९६१।
३३. तन्त्रवार्त्तिकम्, कुमारिलभट्टः, बनारस संस्कृत सीरीज, बनारस, १९०३।
३४. तैत्तिरीयप्रातिशाख्यं त्रिभाष्यरत्न-वैदिकाभरणोपेतम्, सं० के० रङ्गाचार्यः, गवर्नमेण्ट ब्रांच प्रेस, मैसूर, १९०६।

३५. तैत्तिरीयसंहिता भट्टभास्करभाष्योपेता, मैसूर, १८९६ .
३६. दि स्ट्रक्चर आफ़ अष्टाध्यायी, आइ० ए० पावटे, हुबली।
३७. निघण्टुसमन्वितं निरुक्तम्, सं० लक्ष्मणस्वरूपः,लाहौर, १९२७
३८. निरुक्तं दुर्गाचार्यवृत्तिसहितम्, सं० हरिमहादेव भड़कमकर, वम्बई, १९१८
३९. निरुक्तं स्कन्दस्वामिभाष्योपेतम्, सं० लक्ष्मणस्वरूपः। लाहौर, १९२७
४०. निरुक्तम्, सं० वै० का० राजवाड़े, भण्डारकर प्राच्यविद्या-संशोधन मन्दिर, पूना, १९४०
४१. न्यासः, सं० द्वारिकादासः, तारा पब्लिकेशन्स, वाराणसी, १९६७।
४२. पदमञ्जरी, " " " "।
४३. परिभाषासंग्रहः, सं० का० वा० अभ्यङ्करः, पूना, १९६७
४४. पाणिनि एण्ड हिज अष्टाध्यायी, चन्द्रकान्त पाण्डेय, पटना, १९६३।
४५. पाणिनि एण्ड दि वेद, पाल थीमे, ग्लोब प्रेस, इलाहाबाद, १९३६
४६. पाणिनि, कात्यायन एण्ड पतञ्जलि, के० माधवकृष्ण शर्मा, दिल्ली, १९६८
४७. पाणिनिपरिचयः (व्याकरणमहाभाष्यभूमिका), गिरिधरशर्मा, चौखम्बा, १९५४
४८. पाणिनि : हिज़ प्लेस इन संस्कृत लिटरेचर, गोल्डस्टुकर, चौखम्बा, वाराणसी, १९६५।
४९. पाणिनीयव्याकरण का अनुशीलन, रामशंकरभट्टाचार्य, इण्डालाजिकल बुक हाउस, वाराणसी १९६६।
५०. पाणिनीयशिक्षा, सं० मनोमोहन घोष, कलकत्ता विश्वविद्यालय, १९३८
५१. पूर्वमीमांसा-शाबरभाष्यम्, आनन्दाश्रम, पूना, १९३०।
५२. प्रतिज्ञापरिशिष्टम्, सं० युगलकिशोरपाठकः, वनारस,१८८८।
५३. प्रस्थानभेदः, मधुसूदनसरस्वती, वाणीविलासमुद्रणालय, श्रीरंगम्, १९१२।
५४. फिट्सूत्राणि (सिद्धान्तकौमुदीस्थानि), शन्तनुप्रणीतानि

५५. फोनेटिक्स इन एन्श्येण्ट इण्डिया, डब्ल्यू० एस० एलन, ग्राक्सफोर्ड यूनिवर्सिटी प्रेस लन्दन, १९५३

५६. बृहद्देवता, शौनकः, चौखम्बा, वाराणसी, १९६३।

५७. बृहच्छब्देन्दुशेखरः, नागेशः, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी, १९६०

५८. भाषावृत्तिः, पुरुषोत्तमदेवः, तारा पब्लिकेशन्स, वाराणसी १९७१

५९. भाषिकपरिशिष्टसूत्रम्, सं० युगलकिशोरपाठकः, बनारस, १८८८।

६०. महाभाष्यटीका (दीपिका) भर्तृहरिप्रणीता, हिन्दूविश्वविद्यालय, वाराणसी २०२१ वि०।

६१. महाभाष्यम्, सं० एफ० कीलहार्न, गवर्नमेण्ट सेंट्रल प्रेस, बम्बई, १९०९।

६२. महाभाष्यम्, प्रदीपोद्योतसहितम्, सं० गुरुप्रसादशास्त्री, ज्योतिषप्रकाशप्रेस, बनारस, १९३८

६३. महाभाष्यशब्दकोशः, श्रीधरशास्त्री, भण्डारकरप्राच्यविद्या संशोधन मन्दिर, पूना, १९२७।

६४. माधवीया धातुवृत्तिः, चौखम्बा, बनारस, १९३४

६५. माध्यन्दिनपदपाठः, सं० युधिष्ठिरमीमांसकः, रामलालकपूरट्रस्ट, बहालगढ़ १९७२

६६. मैत्रायणी संहिता, सं० श्रूडर, लिपजिग, १९२३।

६७. यजुर्वेदपदानुक्रमणिका, विश्वेश्वरानन्द-नित्यानन्द प्रणीता, निर्णयसागर, बम्बई, १९०८।

६८. याज्ञवल्क्यशिक्षा, सं० अमरनाथशास्त्री, ज्योतिषप्रकाशप्रेस, वाराणसी २०१९

६९. रूपावतारः, धर्मकीर्त्तिः; सं० रङ्गाचार्यः, मद्रास, १९२७।

७०. लिङ्गानुशासनम्,तारानाथव्याख्योपेतम्, कलकत्ता, १९०५।

७१. वाक्यपदीयम् (प्रथमद्वितीयभागौ), वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी, १९६३।

७२. वाजसनेयिप्रातिशाख्यम् (प्रथमभागः) आंगलानुवादटिप्पणोपेतम्, सं० एस० एन० घोषाल, इण्डियन स्टडीज पास्ट एण्ड प्रेजेंट, कलकत्ता, १९६४ ।

७३. वाजसनेयिप्रातिशाख्यम् उवटानन्तभाष्योपेतम्, सं० वेंकटरामशर्मा, मद्रास विश्वविद्यालय, १९३४ ।

७४. वाजसनेयिमाध्यन्दिनसंहिता, उवटमहीधरभाष्योपेता, निर्णयसागर बम्बई १९१२

७५. वायुपुराणम्, आनन्दाश्रम, पूना, १९०५ ।

७६. विष्णुपुराणम्, सं० जीवानन्दः, कलकत्ता, १८८२ ।

७७. वेदभाष्यभूमिकासंग्रहः, सायणः, चौखम्बा, बनारस, १९९१ वि०

७८. वैदिक काङ्कार्डेंस, एम० ब्लूमफील्ड, मोतीलालबनारसीदास, देहली, १९६४

७९. वैदिक ग्रामर, मैक्डानल, इण्डालाजिकल बुक हाउस, वाराणसी १९६८

८० वैदिक पदानुक्रमकोशः, सं० विश्वबन्धुशास्त्री, विश्वेश्वरानन्द वैदिकशोध संस्थान, होश्यारपुर

८१. वैदिक वाङ्मय का इतिहास (प्रथमभाग) भगवद्दत्त। रामलालकपूरट्रस्ट, अमृतसर, २०१३ वि०

८२. वैदिकव्याकरण, रामगोपाल, नेशनल पब्लिशिंग हाउस, देहली, १९६५ ।

८३. वैयाकरणसिद्धान्तमञ्जूषा, नागेशः, बनारस, १९१३ ।

८४. व्याकरणदर्शनपीठिका, रामाज्ञापाण्डेयः, बनारस, १९६५ ।

८५. व्याकरणदर्शनभूमिका, " " १९५४ ।

८६. व्याकरणमहाभाष्य (मराठीं) सप्तमभाग, वासुदेव अभ्यङ्कर, पूना, १९५४

८७. व्याकरणवार्त्तिक : एक समीक्षात्मक अध्ययन, वेदपतिमिश्र, पृथिवी प्रकाशन, वाराणसी, १९७०

८८. शतपथब्राह्मणम्, सं० विद्याधरः, अच्युतग्रन्थमाला, काशी १९९४ वि०

८९. शब्दकौस्तुभम्, भट्टोजीदीक्षितः, सं० गुरुप्रसादशास्त्री (नवाह्निके), बनारस, १९३८ ।

९०. शास्त्रदोपिका मयूखमालिकोपेता, निर्णयसागर, बम्बई, १९१५ ।

९१. शिक्षासंग्रहः, सं० युगलकिशोरव्यासः, बनारस प्रिंटिंग प्रेस, बनारस, १८९३।

९२. शिक्षासूत्राणि, सं० युधिष्ठिरमीमांसकः, अजमेर, २०२४ वि० ।

९३. शुक्लयजुःप्रातिशाख्यम्, सं० इन्दु रस्तोगी, चोखम्बा, वाराणसी १९६७

९४. " " सं० जीवानन्द, सरस्वती यन्त्र, कलकत्ता, १८९३ ।

९५. शुक्लयजुर्वेदीयकाण्वसंहिता, सं० दामोदरसातवलेकरः, स्वाध्यायमण्डल, औन्ध, १९९७ वि० ।

९६. शुक्लयजुर्वेदीय माध्यन्दिनसंहिता, दामोदर-सातवलेकरः, स्वाध्यायमण्डल, औन्ध, २००३ वि०

९७. शुक्लयजुर्वेदीयसर्वानुक्रमसूत्रम्, सं० दामोदरसातवलेकरः, स्वाध्यायमण्डल, औन्ध, १९८६ वि०

९८. संस्कृत-इंगलिश डिक्शनरी, मोनियर विलियम्स, मोतीलाल-बनारसीदास, देहली, १९७० ।

९९. संस्कृत व्याकरणशास्त्र का इतिहास, युधिष्ठिरमीमांसक, अजमेर, २०१९, २०२० वि०

१००. सामान्यभाषाविज्ञान, बाबूराम सक्सेना,प्रयाग, २०१० वि०

१०१ सिद्धान्तकौमुदी बालमनोरमासहिता, सं० सी० शङ्कररामः शास्त्री, बालमनोरमा प्रेस, मद्रास, १९२९ ।

१०२. सिद्धान्तकौमुदी तत्त्वबोधिनीसहिता, सं० वासुदेवलक्ष्मण-शास्त्री, निर्णयसागर बम्बई, १९१५ ।

१०३. सिस्टम्स आफ संस्कृत ग्रामर, एस० के० बेलवालकर, पूना, १९१५

१०४. स्वरसिद्धान्तचन्द्रिका, श्रीनिवासयज्वप्रणीता, मद्रास, १९३६ ।

## पत्रिकाः

१. इण्डियन एण्टीक्वेरी, वाल० ४० (अक्टूबर १९२६) ।
२. इण्डियन लिंग्विस्टिक्स, वाल २२, १९६१ (डेकन कालेज, पूना)
३. एनल्स आफ भण्डारकर रिसर्च इन्स्टीट्यूट, वाल ९, भाग १ (१९३०) ।
४. प्रासीडिंग्स आफ दि फोर्थ आरियण्टल कानफ्रेंस, इलाहाबाद, १९२६
५. " " " नाइन्थ " त्रिवेन्द्रम, १९३७ ।
६. सारस्वती सुषमा, जनवरी, १९४९ ।
७. साहित्य, पटना, १९५९ अंक १ ।

—:०:—



# रामलाल कपूर ट्रस्ट द्वारा

## प्रकाशित वा प्रसारित प्रामाणिक ग्रन्थ

### वेद विषयक ग्रन्थ

१. **ऋग्वेदभाष्य**—(संस्कृत हिन्दी वा ऋग्वेदादिभाष्यभूमिका सहित)–प्रतिभाग सहस्राधिक टिप्पणियां, १०–११ प्रकार के परिशिष्ट व सूचियां। प्रथम भाग ३५–००, द्वितीय भाग ३०–००, तृतीय भाग ३५-०० ।

२. **यजुर्वेदभाष्य-विवरण**—ऋषि दयानन्दकृत भाष्य पर पं० ब्रह्मदत्त जिज्ञासु कृत विवरण। प्रथम भाग अप्राप्य है। द्वितीय भाग मूल्य २५-००

३. **तैत्तिरीय-संहिता**—मूलमात्र, मन्त्र-सूची-सहित। ४०-००

४. **अथर्ववेदभाष्य**—श्री पं० विश्वनाथ जी वेदोपाध्यायकृत। १४-१७ काण्ड २४–००, १८–१९ वां काण्ड २०–००, बीसवां काण्ड २०-००, । ११-१३ काण्ड छप रहे हैं।

५. **माध्यन्दिन—(यजुर्वेद) पदपाठ**—शुद्ध संस्करण। मूल्य २५-००

६. **गोपथ ब्राह्मण (मूल)**—सम्पादक श्री डा० विजयपाल जी विद्यावारिधि। अब तक प्रकाशित सभी संस्करणों से अधिक शुद्ध और सुन्दर संस्करण। मूल्य ४०-००

७. **वैदिक-सिद्धान्त-मीमांसा**—युधिष्ठिर मीमांसक लिखित वेद-विषयक १७ विशिष्ट निबन्धों का अपूर्व संग्रह। विशिष्ट संस्करण मूल्य ३०-००

८. **ऋग्वेदानुक्रमणी**=वेङ्कट माधवकृत। इस ग्रन्थ में स्वर छन्द आदि आठ वैदिक विषयों पर गम्भीर विचार किया है। व्याख्याकार—श्री डा० विजयपाल जी विद्यावारिधि। उत्तम-संस्करण ३०-००, साधारण २०-००

९. **ऋग्वेद की ऋक्संख्या**—युधिष्ठिर मीमांसक २-००

१०. **वैदिक-छन्दोमीमांसा**—युधिष्ठिर मीमांसक। नया संस्करण १५-००

**११. यजुर्वेद का स्वाध्याय तथा-पशुयज्ञ-समीक्षा**—लेखक पं० विश्वनाथ वेदोपाध्याय। बढ़िया जिल्द २०-००, साधारण १६-००।

**१२. वैदिक-पीयूष-धारा**—लेखक श्री देवेन्द्रकुमारजी कपूर। चुने हुए ५० मन्त्रों की प्रतिमन्त्र पदार्थ पूर्वक विस्तृत व्याख्या तथा अन्त में भावपूर्ण गीतों से युक्त। उत्तम संस्करण १५-००, साधारण १०-००।

## कर्मकाण्ड-विषयक ग्रन्थ

**१३. बौधायन-श्रौत-सूत्रम्** (दशपूर्णमास प्रकरण)—भवस्वामी तथा सायण कृत भाष्य सहित (संस्कृत) ४०-००

**१४. दर्शपूर्णमास-पद्धति**—पं० भीमसेन कृत भाषार्थ सहित। २५-००

**१५. संस्कार-विधि**—शताब्दी संस्करण, ४६० पृष्ठ, सहस्राधिक टिप्पणियां, १२ परिशिष्ट। मूल्य लागतमात्र १२-००, राज-संस्करण १५-००। सस्ता संस्करण मूल्य ५-२५; अच्छा कागज सजिल्द ७-५०।

**१६. वैदिक-नित्यकर्म-विधि**—सन्ध्यादि पांचों महायज्ञ तथा वृहद् हवन मन्त्रों के पदार्थ तथा भावार्थ व्याख्या सहित। यु० मी० ३-०१, सजिल्द ४-००

## शिक्षा-निरुक्त-व्याकरण-विषयक ग्रन्थ

**१७. वर्णोच्चारण-शिक्षा**—ऋषि दयानन्द कृत हिन्दी व्याख्या सहित। ०-६०

**१८. शिक्षासूत्राणि**—आपिशल-पाणिनीय-चान्द्र शिक्षा-सूत्र २-५०

**१९. निरुक्त-श्लोकवार्त्तिकम्**—केरलदेशीय नीलकण्ठ गार्ग्यविरचित एक मात्र मलयालम लिपि में ताडपत्र पर लिखित प्रति के आधार पर मुद्रित। आरम्भ में उपाद्घात रूप में निरुक्त-शास्त्र-विषयक संक्षिप्त ऐतिह्य दिया गया है (संस्कृत)। सम्पादक—डा० विजयपाल विद्यावारिधिः। उत्तम कागज, शुद्ध छपाई तथा सुन्दर जिल्द सहित। १००-००

**२०. निरुक्त-समुच्चय**—आचार्य वररुचि विरचित (संस्कृत)। सं०—युधिष्ठिर मीमांसक। १५-००

**२१. अष्टाध्यायी**—(मूल) शुद्ध-संस्करण। ३-००

**२२. धातुपाठ**—धात्वादिसूची सहित, सुन्दर शुद्ध संस्करण। ३-००

**२३. वामनीयं लिङ्गानुशासनम्**—स्वोपज्ञ-व्याख्यासहितम्। ८-००

२४. **अष्टाध्यायी-भाष्य**—(संस्कृत तथा हिन्दी) श्री पं० ब्रह्मदत्त जिज्ञासु कृत। प्रथम भाग २४-००, द्वितीय भाग २०-००, तृतीय भाग २०-००।



२५. **संस्कृत पठन-पाठन की अनुभूत सरलतम विधि**—लेखक—श्री पं० ब्रह्मदत्त जिज्ञासु। प्रथम भाग १०-००; द्वितीय भाग १०-००।

२६. **The Tested Easiest Method of Learning and Teaching SansKrit (First BooK)**—यह पुस्तक श्री पं० ब्रह्मदत्त जी जिज्ञासु कृत '**विना रटे संस्कृत पठन-पाठन की अनुभूत सरलतम विधि**' भाग १ का अंग्रेजी अनुवाद है। अंग्रेजी भाषा के माध्यम से पाणिनीय व्याकरण में प्रवेश करने वालों के लिये यह आधिकारिक पुस्तक है। कागज और छपाई सुन्दर, सजिल्द। मूल्य २५-००

२७. **महाभाष्य**-हिन्दी व्याख्या, यु० मी०। प्रथम भाग ५०-००, द्वितीय भाग २५-००, तृतीय भाग २५-००

२८. **उणादिकोष**—ऋ० द० स० कृत व्याख्या, तथा पं० यु० मी० कृत टिप्पणियों, एवं ११ सूचियों सहित। अजिल्द १०-००, सजिल्द १२-००

२९. **दैवम् पुरुषकारवार्त्तिकोपेतम्**-लीलाशुकमुनि कृत। १०-००

३०. **भागवृत्तिसंकलनम्**—अष्टाध्यायी की प्राचीन वृत्ति। ६-००

३१. **काशकृत्स्न-धातु-व्याख्यानम्**—संस्कृत रूपान्तर। यु० मी० १५-००

३२. **संस्कृत-धातुकोश**—पाणिनीय धातुओं का हिन्दी में अर्थ निर्देश। सं० युधिष्ठिर मीमांसक। १०-००

## अध्यात्म-विषयक ग्रन्थ

३३. **आर्याभिविनय (हिन्दी)**—स्वामी दयानन्द। गुटका सजिल्द मूल्य ४-००

३४. **Aryabbivinaya—English translation and notes** (स्वामी भूमानन्द) दोरङ्गी छपाई। अजिल्द ४-००, सजिल्द ६-००

३५. **विष्णुसहस्रनाम-स्त्रोत्रम् (सत्यभाष्य सहितम्)**—पं० सत्यदेव वासिष्ठ कृत आध्यात्मिक वैदिक भाष्य (४ भाग)। प्रति भाग १५-००

३६. **श्रीमद्भगवद्-गीता-भाष्यम्**—श्री पं० तुलसीराम स्वामी ६-०० ।

## नीतिशास्त्र-इतिहास-विषयक ग्रन्थ

३७. **शुक्रनीतिसार**—व्याख्याकार श्री स्वा० जगदीशानन्द जी सरस्वती। विस्तृत विषय सूची तथा श्लोक-सूची सहित। उत्तम कागज,सुन्दर छपाई तथा जिल्द सहित। मूल्य ४५-००

३८. **सत्याग्रह-नीति-काव्य**—आ० स० सत्याग्रह १९३९ ई० में हैदराबाद जेल में पं० सत्यदेव वासिष्ठ द्वारा विरचित। हिन्दी व्याख्या सहित। ५-००

३९. **संस्कृत व्याकरणशास्त्र का इतिहास**–युधिष्ठिर मीमांसक कृत। **अप्राप्य** । नया संस्करण छप रहा है।

४०. **संस्कृत व्याकरण गणपाठ की परम्परा और आचार्य पाणिनि**—लेखक–डा० कपिलदेव शास्त्री एम० ए०। सजिल्द १५-००

४१. **ऋषि दयानन्द के पत्र और विज्ञापन**—इस बार इस में ऋषि दयानन्द के अनेक नये उपलब्ध पत्र और विज्ञापन संगृहीत किये गए हैं। इस बार यह संग्रह चार भागों में छप रहा है। प्रथम दो भागों में ऋ० द० के पत्र और विज्ञापन आदि संगृहीत हैं। तीसरे और चौथे भाग में विविध व्यक्तियों द्वारा ऋ० द० को भेजे गये पत्रों का संग्रह है। प्रथम भाग—३५-००, दूसरा भाग ३५-००, तीसरा भाग ३५-००, चौथा भाग छप रहा है।

४२. **विरजानन्द-चरित**—लेखक=पं० भीमसेन शास्त्री एम० ए०। नया परिवर्धित और शुद्ध संस्करण। मूल्य ३-००

४३. **ऋषि दयानन्द और आर्यसमाज की संस्कृत-साहित्य को देन**–लेखक–डा० भवानीलाल भारतीय एम० ए०। सजिल्द १५-००

## दर्शन-आयुर्वेद-विषयक ग्रन्थ

४५. **मीमांसा-शाबर-भाष्य**—आर्षमतविमर्शिनी हिन्दी व्याख्या। व्याख्याकार—युधिष्ठिर मीमांसक। प्रथम भाग—मूल्य ४०-००; द्वितीय भाग ३०-००; तृतीय भाग ५०-००; चौथा भाग यन्त्रस्थ।

४६. **नाडी-तत्त्वदर्शनम्**—श्री पं० सत्यदेव जी वासिष्ठ। ३०-००

**रामलाल कपूर ट्रस्ट**

बहालगढ़, जिला—सोनीपत (हरियाणा) १३१०२१

